KĀVYAMĀLĀ. 85.

THE

# TILAKA-MAÑJARĪ

OF

# DHANAPĀLA.

EDITED BY

PAṆḌIT BHAVADATTA S'ĀSTRĪ,
2nd Paṇḍit, Government College, Ajmer,
SON OF
MAHĀMAHOPĀDHYĀYA PAṆḌIT S'IVADATTA,
Head Paṇḍit and Superintendent, Sanskrit Department,
Oriental College, Lahore,
AND
KĀS'ĪNĀTH PĀṆḌURANG PARAB.

Second Edition.

PUBLISHED BY
PĀNDURANG JĀWAJĪ,
PROPRIETOR 'NIRṆAYA SĀGAR' PRESS,
BOMBAY.

1938.

Price 2½ Rupees.

काव्यमाला. ८५.

श्रीधनपालविरचिता

# तिलकमञ्जरी ।

महामहोपाध्यायपण्डितशिवदत्तशर्मतनूजपण्डितभवदत्तशास्त्रिणा,

मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशिनाथशर्मणा च

संशोधिता ।

द्वितीयावृत्तिः ।

सा च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्राकाश्यं नीता ।

शाकः १८६०, खिस्ताब्दः १९३८.

# श्रीधनपालकविः ।

अयं हि कविवरः कदा कतमं धरामण्डलं मण्डयामासेति जिज्ञासायां बहुविधग्रन्थपर्यालोचने प्रवृत्ते—

"अस्त्याश्चर्यनिधानमर्बुद इति ख्यातो गिरिः खेचरैः
कृच्छ्राल्लङ्घितदिग्विलङ्घिशिखरग्रामोऽग्रिमः क्ष्माभृताम् ।
मैनाकेन महार्णवे हृरतनौ सत्याप्रवेशे कृते
येनैकेन हिमाचलः शिखरिणां पुत्रीति लक्ष्योऽभवत् ॥
वासिष्ठैः स्म कृतस्मयो वरशतैरस्त्यग्निकुण्डोद्भवो
भूपालः परमार इत्यभिधया ख्यातो महीमण्डले ।
अद्याप्युद्गतहर्षगद्गदगिरो गायन्ति यस्यार्बुदे[1]
विश्वामित्रजयोज्झितस्य भुजयोर्विस्फूर्जितं गुर्जराः ॥
तस्मिन्नभूद्रिपुकलत्रकपोलपत्रवल्लीवितानपरशुः परमारवंशे ।
[2]श्रीवैरिसिंह इति दुर्धरसैन्यदन्तिदन्ताग्रभिन्नचतुरर्णवकूलभित्तिः ॥
तत्राभूद्वसतिः श्रियामपरया [3]श्रीहर्ष इत्याख्यया
विख्यातश्चतुरम्बुराशिरसनादाम्नः प्रशास्ता भुवः ।
भूपः खर्वितवैरिगर्वगरिमा श्रीसीयकः सायकाः
पञ्चेषोरिव यस्य पौरुषगुणाः केषां न लग्ना हृदि ॥
तस्योदग्रयशाः समस्तसुभटग्रामाग्रगामी सुतः
सिंहो दुर्धरशक्रसिन्धुरततेः [4]श्रीसिन्धुराजोऽभवत् ।
एकाधिज्यचतुर्जिताब्धिवलयावच्छिन्नभूर्यस्य स
[5]श्रीमद्वाक्पतिराजदेवनृपतिर्वीराग्रणीरग्रजः ॥

---

१. अस्य महाराजस्यार्बुदाचलाभेयास्ते वर्तमाना चन्द्रावती नाम राजधान्यासीत्. २. 'वप्पट' इत्यपि नामान्तरम्. See Epigraphia Indica, Vol. I., pp. 222–28. ३. 'सिंहदन्त' इत्यपि नामान्तरम्. *Vide* Prabandha-Chintāmaṇi, P. 55. ४. अस्य हि श्रीसिन्धुराजस्य 'सिन्धुल-सिन्धल-कुमारनारायण-नवसाहसाङ्क' इति नामान्तराणि. See Navasāhasānka-Charita and Prabandha-Chintāmaṇi. ५. अस्य महाराजस्य 'अमोघवर्ष-उत्पलराज' इत्यपि नामान्तराणि. *Vide* Indian Antiquary, Vol. VI., pp. 51–54, and Navasāhasānka-Charita. एतद्राज्यं च A. D. 975–1022.

आकीर्णाङ्घ्रितलः सरोजकलशच्छत्रादिभिर्लाञ्छनै-
स्तस्याजायत मांसलायतभुजः श्रीभोज इत्यात्मजः ।
प्रीत्या योग्य इति प्रतापवसतिः ख्यातेन मुञ्जाख्यया
यः स्वे वाक्पतिराजभूमिपतिना राज्येऽभिषिक्तः स्वयम् ॥
आसीद्द्विजन्माखिलमध्यदेशे प्रकाशसांकाश्यनिवेशजन्मा ।
अलब्ध देवर्षिरिति प्रसिद्धिं यो दानवर्षित्वविभूषितोऽपि ॥
शास्त्रेष्वधीती कुशलः कलासु बन्धे च बोधे च गिरां प्रकृष्टः ।
तस्यात्मजन्मा समभून्महात्मा देवः स्वयंभूरिव सर्वदेवः ॥
तज्जन्मा जनकाङ्घ्रिपङ्कजरजःसेवाप्तविद्यालवो
विप्रः श्रीधनपाल इत्यविशदामेतामबध्नात्कथाम् ।
अक्षुण्णोऽपि विविक्तसूक्तरचने यः सर्वविद्याब्धिना
श्रीमुञ्जेन सरस्वतीति सदसि क्षोणीभृता व्याहृतः ॥"

इति धनपालकविवरविरचिततिलकमञ्जरीप्रस्तावनापद्यपर्यालोचनतः,

"पुरा समृद्धिविशालायां विशालायां पुरि मध्यदेशजन्मा काश्यपगोत्रः सर्वदेवनामा द्विजो निवसञ्जैनदर्शनसंसर्गात्प्रायः प्रशान्तमिथ्यात्वो धनपाल-शोभन-पुत्रद्वयेनान्वितः 'कदाचिदागताञ्छ्रीवर्धमानसूरीन्गुणानुरागान्निजो-पाश्रये निवास्य निर्द्वन्द्वभक्त्या परितोषितान्सर्वज्ञपुत्रान्' इति धिया तिरोहितं निजपूर्वजनिधिं पृच्छंस्तैर्वचनच्छलेनार्धविभागं याचितः संकेतनिवेदनाल्लब्धनिधि-स्तदर्धं यच्छंस्तैः पुत्रद्वयादर्धं याचितो ज्यायसा धनपालेन मिथ्यात्वान्धमतिना जैनमार्गनिन्दापरेण निषिद्धः कनीयसि शोभने कृपापरः स्वप्रतिज्ञाभङ्गपातकं तीर्थेषु क्षालयितुमिच्छुः प्रतितीर्थं प्रतस्थे ।

अथ पितृभक्तेन शोभननाम्ना लघुपुत्रेण तं तदाग्रहान्निषिध्य पितुः प्रतिज्ञां प्रतिपालयितुमुपात्तव्रतः स्वयं तान्गुरूननुससार ।

अभ्यस्तसमस्तविद्यास्थानेन धनपालेन श्रीभोजप्रसादसंप्राप्तसमस्तपण्डित-

---

१. एतद्राज्यं च A. D.1022–1061. २. Epigraphia Indica, Vol. III., pp. 54–57, and Vol. V., pp. 74–94 स्वसर्वदेवास्तव्यता-स्त्रिका एव वर्तन्ते. ३. Royal Asiatic Society's Journal, Vol. I., p. 382, अत्रोपलभ्यमानकविधनपालस्येलताद्रिव एव वरीवर्ति.

प्रकृष्टप्रतिष्ठेन निजसहोदरामर्षभावाद्द्वादशाब्दीं यावत्स्वदेशनिषिद्धजैनदर्शनप्रवेशेन तद्देशोपासकैरत्यर्थमभ्यर्थनया गुरुपुरुषेष्वाहूयमानेषु सकलसिद्धान्तपारावारदृश्वा स शोभननामा तपोधनो गुरूनापृच्छ्य तत्र प्रयातो धारायां प्रविशन् पण्डितधनपालेन राजपाटिकायां व्रजता 'तं सहोदरम्' इत्यनुपलक्ष्य सोपहासम् 'गर्दभदन्त भदन्त नमस्ते' इति प्रोक्ते 'कपिवृषणास्य वयस्य सुखं ते' इति शोभनमुनेर्वचसान्तश्चमत्कृतो मया नर्मणापि 'नमस्ते' इत्युक्तेऽनेन तु 'वयस्य सुखं ते' इत्युच्चरता वचनचातुर्येण 'निर्जितोऽस्मि' इति 'तत्कस्यातिथयो यूयम्' इति धनपालस्यालापैः 'भवत एवातिथयो वयम्' इति शोभनमुनेर्वाचमाकर्ण्य बटुना सह निजसौधे प्रस्थाप्य तत्रैव प्रस्थापितः। स्वयं निजसौधे समागत्य धनपालः प्रियालापैः सपरिकरमपि तं भोजनाय निमन्त्रयंस्तैः प्रासुकाहारसेवापरैर्निषिद्धः। बलाद्दोषहेतुं पृच्छन्—

'भजेन्माधुकरीं वृत्तिं मुनिर्म्लेच्छकुलादपि।
एकान्नं नैव भुञ्जीत बृहस्पतिसमादपि॥'

तथा च जैनसमये दशवैकालिके—

'मधुकारसमा बुद्धा जे भवन्ति अणिस्सिया।
नाणापिण्डरया दन्ता तेण वुच्चन्ति साहुणो॥'

इति 'स्वसमयपरसमयाभ्यां निषिद्धं कल्पितमाहारं परिहरन्तः शुद्धाशनभोजिनो वयम्' इति तच्चरित्रविचित्रमनाः सतूष्णीकमुत्थाय सौधमाप। मज्जनारम्भे गोचरचर्यया समागतं तन्मुनिद्वन्द्वमवलोक्य सिद्धेऽन्नपाके तद्ब्राह्मण्योपढौकिते दध्नि मुनिभ्याम् 'व्यतीतकियद्दिनमेतत्' इति पृच्छ्यमाने धनपालः 'किमत्र पूतराः सन्ति' इति सोपहासमभिदधानो 'व्यतीतदिनद्वयमेतत्' इति ब्राह्मण्या निर्णीय प्रोक्तं ताभ्याम् 'पूतराः सन्तीत्यत्र' इत्यभिहिते स्नानासनात्तद्दर्शनार्थमुत्थाय तत्रागतः सन् स्थालेऽधिरोपितदधिसंनिधौ यावद्यावकपुञ्जेऽधिरूढैस्तद्वर्णजन्तुभिर्दधिपिण्ड इव पाण्डुरतामालोक्य जिनधर्मे जीवदयाप्राधान्यं तत्रापि जीवोत्पत्तिज्ञानवैदग्ध्यम्। यतः।

---

१. 'मधुकरसमा बुद्धा ये भवन्त्यनिश्रिताः।
नानापिण्डरता दान्ता तेन उच्यन्ते साधवः॥' इति च्छाया.

'[1]मुग्गमासाइपमुह विदिलं कच्चम्मि गोरसे पडइ ।
ता तसजीवुप्पत्तीं भणन्ति दहिए तिदिणुव्वरिए ॥'

'तज्जिनशासन एव' इति निश्चित्य **शोभनमुनेः** शोभनबोधात्सम्यक्त्वप्रतिपत्तिपुरःसरं सम्यक्त्वं भेजे ।

**कर्मप्रकृत्यादि**जैनविचारग्रन्थेषु प्रकृत्या प्राज्ञः प्रावीण्यमुद्वहन् प्रातः प्रातर्जिनार्चावसरप्रान्ते—

'कतिपयपुरस्वामी कायव्ययैरपि दुर्ग्रहो
मतिवितरता मोहेनाहो मयानुसृतः पुरा ।
त्रिभुवनपतिर्बुद्ध्याराध्योऽधुना स्वपदप्रदः
प्रभुरधिगतस्तत्प्राचीनो दुनोति दिनव्ययः ॥
[2]सव्वत्थ अत्थि धम्मो जा मुणियं जिनं न सासणं तुम्ह ।
कणकाउराण कणगुव्व ससियपयमलम्भमाणाणम् ॥
देशाधीशो ग्राममेकं ददाति ग्रामाधीशः क्षेत्रमेकं ददाति ।
क्षेत्राधीशः शिम्बिकाः संप्रदत्ते सार्वस्तुष्टः संपदं स्वां ददाति ॥'

इत्यादीनि वाक्यानि पठन्स **धनपालः** कदाचिन्नृपेण सह मृगयां नीतो **धनपालो**ऽभिहितः—

'किं कारणं नु **धनपाल** मृगा यदेते
व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः ।
देव त्वदस्त्रचकिताः श्रयितुं स्वजाति-
मेके मृगाङ्कमृगमादिवराहमन्ये ॥'

राज्ञा बाणेन मृगे विद्धे सति तद्वर्णनाय विलोकितमुखो **धनपालः** प्राह—

'रसातलं यातु तवात्र पौरुषं कुनीतिरेषा शरणो ह्यदोषवान् ।
निहन्यते यद्बलिनापि दुर्बलो हहा महाकष्टमराजकं जगत् ॥'

इति तन्निर्भर्त्सनात्क्रुद्धो नृपः 'किमेतत्' इत्यभिदधानः—

'वैरिणापि हि मुच्यन्ते प्राणान्ते तृणभक्षणात् ।
तृणाहाराः सदैवैते हन्यन्ते पशवः कथम् ॥'

---

१. 'मुद्गमाषादिप्रमुखं द्विदलमपक्वे गोरसे पतति ।
तदा त्रसजीवोत्पत्तिं भणन्ति दध्नि त्रिदिनोद्धरिते ॥' इति च्छाया.

२. 'सर्वत्रास्ति धर्मो यावज्ज्ञातं जिनं न शासनं तव ।
कनकातुराणां कनकमिव शशितपदमलभमानानाम् ॥' इति च्छाया.

इत्यूचे। अतोऽद्भुतसंजातकृपेण नृपेण धनुर्बाणभङ्गमङ्गीकृत्याजीवितान्तं संन्यस्तमृगयाव्यसनेन पुरं प्रत्यागच्छता तत्र यज्ञमण्डपे यज्ञस्तम्भनियन्त्रितच्छागस्य दीनां गिरमाकर्ण्य 'किं पशुरसौ व्याहरति' इत्यादिष्टः स **धनपालः** 'अवधेहि' इति प्राह—

'नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया
संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव।
स्वर्गं याति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो
यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः॥'

इति तद्वाक्यानन्तरं राज्ञा 'किमेतत्' इति भूयोऽभियुक्तः

'यूपं कृत्वा पशून्हत्वा कृत्वा रुधिरकर्दमम्।
यद्येवं गम्यते स्वर्गे नरके केन गम्यते॥
सत्यं यूपं तपो ह्यग्निः कर्माणि समिधो मम।
अहिंसामाहुतिं दद्यादेवं यज्ञः सतां मतः॥'

इत्यादीनि **शुक**संवादोदितानि वचांसि नरेन्द्रस्य पुरतः पठन् हिंसाशास्त्रोपदेशिनो हिंसकप्रकृतीन्ब्राह्मणरूपेण राक्षसांस्ताञ्ज्ञापयन्नृपमर्हद्धर्माभिमुखं चकार।

अथ कस्मिन्नप्यवसरे नरेश्वरः **सरस्वतीकण्ठाभरण**प्रासादे व्रजन् सदा सर्वज्ञशासनप्रशंसापरं पण्डितं **धनपाल**मालपत्—'सर्वज्ञस्तावत्कदाचिदासीत्तद्दर्शने सांप्रतं कश्चिज्ज्ञानातिशयोऽस्ति' इत्यभिहिते '**अर्हत्कृतेऽर्हच्चूडामणि**ग्रन्थे विश्वत्रयस्य त्रिकालवस्तुविषयस्वरूपपरिज्ञानमद्यापि विद्यते' इति तेनोक्ते 'त्रिद्वारमण्डपे स्थितः कस्मिन्द्वारेऽस्माकं निर्गमः' इति शास्त्रकलङ्कारोपणोद्यते नृपे 'बुद्धिमात्रा त्रयोदशी' इति पाठं सत्यापयता भूर्जपत्रे नृपप्रश्ननिर्णयमालिख्य मृण्मयगोलके निधाय च छगलिकाधरस्य तं समर्प्य 'देव, पादोऽवधार्यताम्' इति नृपं प्राह। नृपः 'तद्बुद्धिसंकटे निपतितं स्वं मन्यमान एतद्द्वारत्रयस्य मध्यात्किमपि निर्णीतं भविष्यति' इति विमृश्य सूत्रभृद्भिर्मण्डपपद्मशिलातलमपनीय तन्मार्गेण निर्गत्य तं गोलकं भित्त्वा तेष्वक्षरेषु तमेव निर्गमनिर्णयं वाचयंस्तत्कौतुकोत्तालचित्तः श्रीजिनशासनमेव प्रशशंस। तथाहि—

'द्वाभ्यां यन्न हरिस्त्रिभिर्नच हरः स्रष्टा नचैवाष्टभिर्येन द्वादशभिर्गुहो न दशकद्वन्द्वेन लङ्कापतिः।
यन्नेन्द्रो दशभिः शतैर्न जनता नेत्रैरसंख्यैरपि
तत्प्रज्ञानयनेन पश्यति बुधश्चैकेन वस्तु स्फुटम्॥'

अथ धनपालः ऋषभपञ्चाशिकास्तुतिं निर्माय सरस्वतीकण्ठाभरण-प्रासादे स्वनिर्मितप्रशस्तिपट्टिकां राज्ञे कदाचिद्दर्शयामास । तत्र

'अभ्युद्धृता वसुमती दलितं रिपूरः
क्रोडीकृता बलवता बलिराज्यलक्ष्मीः ।
एकत्र जन्मनि कृतं तदनेन यूना
जन्मत्रये यदकरोत्पुरुषः पुराणः ॥'

काव्यमिदं निर्वर्ण्य पारितोषिके तस्याः पट्टिकायाः काञ्चनकलशं ददौ नृपः । तस्मात्प्रासादादपसरंस्तद्वीयद्वारस्तम्भके रत्या सह हस्ततालप्रदानपरं स्मरं मूर्तिमन्तमालोक्य नृपेण हास्यहेतुं पृष्टः पण्डितः प्राह—

'स एव भुवनत्रयप्रथितसंयमः शंकरो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयञ्जयति जातहासः स्मरः ॥

अन्नदिणे सिवभवणे दुवारदेसे निए वि भङ्गिगणम् ।
किं दुब्बलो पलोइअ निवपुट्ठो भणइ धणपालो ॥

दिग्वासा यदि तत्किमस्य धनुषा तच्चेत्कृतं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं पुनर्द्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमहो पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरापिनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥

पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति ।
अङ्कुरित इव मनोभूर्यस्मिन्भस्मावशेषोऽपि ॥

अमेध्यमश्नाति विवेकशून्या स्वनन्दनं कामयतेऽतिसक्ता ।
क्षुराग्रशृङ्गैर्विनिहन्ति जन्तून्गौर्वन्द्यते केन गुणेन राजन् ॥

पयःप्रदानसामर्थ्याद्वन्द्या चेन्महिषी न किम् ।
विशेषो दृश्यते नास्या महिषीतो मनागपि ॥'

इत्यादिभिः प्रसिद्धसिद्धसारस्वतोद्गारैर्नृपं रञ्जयन् यावदास्ते, तावत्कोऽपि सांया-

---

१. एषा हि काव्यमालायाः सप्तमे गुच्छकेऽस्माभिर्मुद्रापिता.

२. 'अन्यदिने शिवभवने द्वारदेशे निजेऽपि भृङ्गिगणम् ।
किं दुर्बलः प्रलोक्य नृपपृष्टो भणति धनपालः ॥' इति छाया.

त्रिके द्वाःस्थो निवेदितः सभां प्रविश्य नृपं नत्वा मदनपट्टिकायां प्रशस्तिकाव्यानि दर्शयामास। नृपेण तत्प्रभवस्थानके पृष्टे स एवमवादीत्—'वीरधावकसादेव मम वाहने स्खलिते निर्यामकैः शोध्यमाने समुद्रे तन्मग्नं शिवायतनमालोक्य परितः परिस्फुरज्जलमप्यन्तःसलिलविकलमवलोक्य कस्यामपि भित्तौ वर्णाविर्भर्म्य च तज्जिज्ञासया मदनपट्टिकां तत्र प्रस्थाप्य तत्संकेताक्षरमयी पट्टिकेयम्' इति नृपतिर्निशम्य तदुपरि मृन्मयीं पट्टिकां नियोज्य तत्र पतितान्वर्णान्पण्डितैर्वाचयामास।

'आबाल्याधिगमान्मयैव गमितः कोटिं परामुन्नते-
रस्मत्संकथयैव पार्थिवसुतः संप्रत्यसौ लज्जते।
इत्थं खिन्न इवात्मजेन यशसा दत्तावलम्बोऽम्बुवे-
र्यातस्तीरतपोवनानि तपसे वृद्धो गुणानां गणः॥
देवे दिग्विजयोद्यते धृतधनुःप्रत्यर्थिसीमन्तिनी-
वैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति।
आस्तामन्यनितम्बिनी रतिरपि त्रासान्न पौष्पं करे
भर्तुर्धर्तुमदान्मदान्धमधुपीनीलीनिचोलं धनुः॥
चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्ट-
व्याकृष्टं निःश्वसन्त्यः पृथुनयनघटीयन्त्रमुक्ताश्रुधारम्।
नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेता
देव त्वद्वैरिनार्यः स्तनकलशयुगेनाभिरामं वहन्ति॥'

इति संपूर्णेषु काव्येषु वाच्यमानेषु,

'अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः।'

'अस्य काव्यस्योत्तरार्धं छिन्नपादिभिः परःशतैरपि पण्डितैः परिपूर्यमाणमपि विसंवदति' इति राज्ञा धनपालपण्डितः पृष्टः—

'हरशिरसि शिरांसि यानि रेजुर्हर हर तानि लुठन्ति गृध्रपादैः॥'

'इदमेवोत्तरार्धं संवदति' इति नृपेणोक्ते सति स पण्डितः प्रोवाच—'यदि गुम्फार्थाभ्यां श्रीरामेश्वरप्रशस्तिभित्ताविदं न भवति तदतः परमाजीवितान्तं कवित्वस्य संन्यास एव' इति तत्प्रतिश्रवसमकालमेव यानपात्रे निर्यामकाजिह्नैः-प्यावगाह्यमाने नीरधौ षड्भिर्मासैस्तं प्रासादमासाद्य पुनर्मदनपट्टिकायां न्यस्तायामिदमेवोत्तरार्धमागतमालोक्य 'तस्मै तदुचितं पारितोषिकं प्रसादीचकार' इति खण्डप्रशस्तेर्यथाश्रुतानि बहूनि काव्यानि मन्तव्यानि।

कदाचिद्राज्ञा सेवाश्लथतां पृष्टः स पण्डितस्तिलकमञ्जरीगुम्फवैयग्र्यं जगौ। शिशिरयामिन्याश्चरमयामे निर्विनोदत्वात्तां प्रथमादर्शप्रतिमानीय पण्डितेन व्याख्यायमानां तिलकमञ्जरीकथां वाचयंस्तद्रसनिपातभीरुः पुस्तकस्याधः कचोलकयुतसुवर्णस्थालस्थापनापूर्वं तां समाप्य तच्चित्रकविताचित्रीयमाणचित्तो नृपः पण्डितं प्राह—'मामत्र कथानायकं कुर्वन्विनतायाः पदेऽवन्तीमारोपयन् शक्रावतारतीर्थस्य पदे महाकालमाकलयन्यद्याचसे तत्तुभ्यं ददामि' इत्याभिदधाने नृपे 'खद्योतप्रद्योतनयोः सर्षपकनकाचलयोः काचकाञ्चनयोर्धत्तूरकल्पपादपयोरिव तेषां महदन्तरम्' इत्युच्चरन्

'दोमुहय निरक्खर लोहमइय नाराय तुज्झ किं भणिमो।
गुञ्जाहि समं कणयं तोलन्तु न गउसि पायालम्॥'

इत्याक्रोशपरे तस्मिञ्जाज्वल्यमानेऽग्नौ श्रीभोजे तां मूलप्रतिमिन्धनीचकार।

अथ स द्विधा निर्वेदभाग् द्विधावाङ्मुखो निजसौधपश्चाद्भागे जीर्णमञ्चाधिरूढो निःश्वसन्भृशं सुष्वाप। बालपण्डितया तत्सुतया सभक्तिकमुत्थाप्य स्नानपानभोजननिर्मापणानन्तरं तिलकमञ्जरीप्रथमादर्शलेखदर्शनात्संस्मृत्य ग्रन्थस्यार्धं लेखयांचक्रे। तदुत्तरार्धं नूतनीकृत्य ग्रन्थः समर्थितः।

अन्यदा भोजसभायां काव्यमिदमुक्तं तेन—

'धाराधीश धरामहीशगणने कौतूहलीयानयं
वेधास्त्वद्गणनां चकार खटिकाखण्डेन रेखां दिवि।
सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधवा-
भावात्तत्त्यजति स्म सोऽयमवनीपीठे तुषाराचलः॥'

अपरैः पण्डितैरस्मिन्काव्ये उपहसिते धनपालेनोक्तम्—

'शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते।
वस्तु प्रस्तुतमेव किंचन वयं ब्रूमस्तथाप्युच्चकै-
र्लोकोऽयं हसति प्रसारितमुखस्तुभ्यं प्रतिष्ठे नमः॥'

एकदा 'राजन्, महाभारतीकथा श्रूयताम्' इत्युक्ते पण्डितं प्रति परमार्हतेन प्रत्युक्तम्—

---

१. 'द्विमुख निरक्षर लोममय नाराच त्वां किं भणामः।
गुञ्जाभिः समं कनकं तोलयन्न गतोऽसि पातालम्॥' इति च्छाया.

'कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नेतारः किल पञ्च गोकुलसुताः कुण्डाः स्वयं पाण्डवाः ।
तेऽमी पञ्च समानजातय इति ख्यातास्तदुत्कीर्तनं
पुण्यं स्वस्त्ययनं भवेद्यदि नृणां पापस्य कान्या गतिः ॥'

'**शोभनमुनेश्चतुर्विंशतिका** स्तुतिः प्रतीतैव । अधुना किमपि प्रबन्धादि क्रियमाण आस्व' इति नृपेणोक्ते **धनपालः** प्राह—

'आरनालगलदाहशङ्कया मन्मुखादपगता सरस्वती ।
तेन वैरिकमलाकचग्रहव्यग्रहस्त न कवित्वमस्ति मे ॥
वचनं **धनपालस्य** चन्दनं मलयस्य च ।
सरसं हृदि विन्यस्य कोऽभून्नाम न निर्वृतः ॥'

इति **प्रबन्धचिन्तामणिस्थभोजभीम**प्रबन्धान्तर्गतलेखालोचनतश्च श्रीमन्मा**लव**मण्डलाधीश्वरयशःपुञ्जश्रीमन्**मुञ्जराजा**परनाम**वाक्पतिराज**तदात्मजश्रीम**द्धारा**धराम्भोज**भोजराज**समकालीनोऽयं कविवरस्तद्राजधान्यामेनं ग्रन्थं जुगुम्फ.

**धाराधराम्भोजभोजराज**राज्य च—

"जयति व्योमकेशोऽसौ यः सगाय बिभर्ति ताम् ।
ऐन्दवीं शिरसा लेखां जगद्बीजाङ्कुराकृतिम् ॥
तन्वन्तु वः स्मराराते: कल्याणमनिशं जटाः ।
कल्पान्तसमयोद्दामतडिद्वलयपिङ्गलाः ॥"

परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**सीयकदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**वाक्पतिराजदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**सिन्धुराजदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**भोजदेवः** कुशली नागह्रदपश्चिमपथकान्तःपातिवीराणके समुपगतान् समस्तराजपुरुषान् ब्राह्मणोत्तरान् प्रतिनिवासिपट्टकिलजनपदादींश्च समादिशति—अस्तु वः संविदितम्, यथा अतीताष्टसप्तत्यधिकसाहस्रिक (१०७८) संवत्सरे माघासिततृतीयायां रवावुदगयनपर्वणि कल्पितहलानां लेख्ये श्रीमद्धारायामवस्थितैरस्माभिः स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिं समभ्यर्च्य संसारस्यासारतां दृष्ट्वा

'वाताभ्रविभ्रममिदं वसुधाधिपत्यमापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां धर्मः सखा परमहो परलोकयाने ॥'

---

१. यथा हि काव्यमालायाः सप्तमे गुच्छके मुद्रापितास्माभिः.

भ्रमत्संसारचक्राग्रधाराधारामिमां श्रियम् ।
प्राप्य ये न ददुस्तेषां पश्चात्तापः परं फलम् ॥'

इति जगतो विनश्वरं स्वरूपमाकलय्य उपरिलिखितग्रामः स्वसीमातृणगोचरयूति-पर्यन्तः सहिरण्यभागभोगः सोपरिकरः सर्वादायसमेतो ब्राह्मणधनपतिभट्टाय भट्ट-गोविन्दसुताय बह्वृचाश्वलायनशाखाय त्रिप्रवराय वेल्लवल्लप्रतिबद्धश्रीवादाविनिर्ग-तराघश्चुरसत्ककर्णाटाय मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धयेऽदृष्टफलमङ्गीकृत्य आचन्द्रार्णवक्षितिसमकालं यावत्परया भक्त्या शासनेनोदकपूर्वं प्रतिपादित इति मत्वा यथादीयमानभागभोगकरहिरण्यादिकमाज्ञाश्रवणविधेयैर्भूत्वा सर्वमस्मै समुपनेतव्यम्। सामान्यं चैतत्पुण्यफलं बुद्धास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मादायोऽय-मनुमन्तव्यः पालनीयश्च । उक्तं च—

'बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
अस्मत्कुलक्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया दानं फलं परयशःपरिपालनं च ॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ।
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥'

इति ॥ संवत् १०७८ (=A. D. 1022) चैत्रसुदी १४ स्वयमाज्ञामङ्गलं महाश्रीः । स्वहस्तोऽयं श्रीभोजराजस्य ॥" (Indian Antiquary, vol. VI., pp. 53–54) इत्येतद्दर्शनेनैकादशक्रिस्ताब्दशतिका श्रीमञ्जुल-पालकविसत्ताधारभूतावगम्यते. एतद्राजधान्येवास्य कवितुर्वासभूमिरिति. अनेन कविचूडामणिना कियन्तो ग्रन्था गुम्फिता इति न सम्यङ् निश्चीयते.

अथ च—

"कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिबन्दिताम् ॥" (४।१४५)

१.–२. S'ilāditya II., in whose reign the Chinese pilgrim visited India, was an enlightened prince and a liberal patron

इति राजतरङ्गिण्यादिविविधेतिहासग्रन्थेषु भूयांसश्च 'मुञ्ज' इत्यद्वितीय-नामानो वाक्पतिराजसमनामानो धृतविभिन्नमण्डलसंज्ञजन्मानोऽतिप्रसिद्ध-धारापरमारभोजभोजराजमहाराजसमनामानो राजानोऽराजानो दरीदृश्यन्ते. परंतु हन्त किल समुद्रापितसुभाषितावलीभूमिकायां केचन पण्डितमण्डली-मण्डिताः पण्डितास्तद्रहस्यमसमूहन्त एव दशमख्रिस्तशतकोत्तरार्धोत्पन्नश्रीम-न्मुञ्जराजापरनामवाक्पतिराजमहाराजस्य, सप्तमख्रिस्तशतकोत्तरार्धोत्पन्नस्य राजतरङ्गिण्यां (४।१४५) वर्णितस्य कश्मीरमण्डलाधीशश्रीमल्ललितादित्य-महाराजपराजितकान्यकुब्जमण्डलाधीशयशोवर्मयशोवर्ममहाराजस्य राजसभा-

---

of letters, and works of merit composed in his court are still read and admired by the Hindus. He died in 650, and the history of Northern India then becomes obscure. The next prince of whom we read was Yas'ovarman of Kanouj, who reigned from about 700 to 730. The lamp of literature lighted in Ujjain two centuries before still shone in India, and one of the greatest poets that India has produced, Bhavabhûti, lived in Yas'ovarman's court. The king, however, was defeated in a battle by Lalitâditya, king of Kashmir, and the conqueror took the renowned poet Bhavabhûti from Kanouj to grace his own court.

Bhavabhûti is the last of the bright galaxy of Hindu poets who graced this age, and Yas'ovarman is the last famous prince of Northern India of whom we read. The history of ancient India ends with the eighth century, and the two centuries which followed may be justly called the Dark Ages of India." (*Vide* Ancient India, by R. C. Dutt, C. I. E., I. C. S. pp. 149–50.)

१. *Vide* Archealogical Survey, pp. 124–9, Epigraphia Indica, vol. I., pp. 140–47, and vol. II., pp. 119–25. &c.

२. *Vide* Indian Antiquary, vol. VI., pp, 53–4, and vol. XV., pp. 105–41; American Oriental Society's Journal, Part VII.; Bhawnagar Modern Researches, Part I., pp. 30–37 and pp. 68–70; Epigraphia Indica, vol. I., pp. 223–8, and vol. II., pp. 42–7, pp. 182–8, pp. 237–40, pp. 305–10; and Girnar Inscriptions, vol. II., pp. 21–3. &c.

सि–भवभूतिसमभासि–गौडवधाख्यमहाकाव्यप्रकाशि–श्रीमत्कमलायुधान्तेवासि–श्रीमद्वाक्पतिराजस्य, दशमविंस्ताब्दशतकोत्तरार्धसमुत्पन्नश्रीमत्सोमदेवकविविरचितयशस्तिलकापरनामधेययशोधरमहाराजचरिते वर्णितस्य वाक्पतिराजस्य च नाममात्रसाम्यादभिन्नतां संसोसूचांचक्रिरे. अतस्तेषां धन्यवादपुरःसरं तुलेखं प्रकाशयामि—

"Vākpati—Author of the Gaudavadha. He is stated in our book to have been the son of Harshadeva. For Vākpatirāja's relations to Bhavabhūti, see Bhāndārkar's Preface to his edition of Mālatīmādhava already referred to under Bhavabhūti. That Vākpatirāja was a prince as well as a poet is evident both from the passage in the Rājataranginī and from the following reference to him found in Halāyudha's commentary on the Piñgalasūtras—

'स जयति वाक्पतिराजः सकलार्थिमनोरथैककल्पतरुः ।
प्रत्यर्थिभूतपार्थिवलक्ष्मीहठहरणदुर्ललितः ॥'

Halāyudha's verse is quoted in the Das'arūpakāvaloka with the note that the king referred to is Muñja.

According to a statement in the Yas'astilaka Vākpatirāja was thrown into prison by Yas'ovarman, and there, like James I. of Scotland, composed his poem."

अस्य हि ग्रन्थस्य पुस्तकमेकमेवोपलब्धम्. एतस्यैकस्य पुस्तकस्याधारेण शोधितमुद्रितेऽप्यस्मिन्ग्रन्थेऽस्मत्कृतटिप्पण्यां च यत्र कुत्रचनाशुद्धिः स्थिता जाता वा भवेत्तत्सुहृदयहृदयाः संशोधयन्तु. यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति प्रार्थयते—

भवदत्तशास्त्री,
गव्हर्नमेण्ट् कॉलेज्, अजमेर.

काव्यमाला ।

श्रीधनपालविरचिता

# तिलकमञ्जरी ।

स वः पातु जिनः कृत्स्नं समीक्षते यः प्रतिक्षणम् ।
रूपैरनन्तैरेकैकजन्तोर्व्याप्तं जगत्त्रयम् ॥ १ ॥
प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
ददतां निर्वृतात्मान आद्योऽन्येऽपि मुदं जिनाः ॥ २ ॥
दिशतु विरतिलाभानन्तरं पार्श्वसर्प-
न्नमिविनमिकृपाणोत्सङ्गदृश्याङ्गलक्ष्मीः ।
त्रिजगदपगतापत्कर्तुमात्ताद्यरूप-
द्वय इव भगवान्वः संपदं नाभिसूनुः ॥ ३ ॥
ध्वानेनामृतवर्षिणा श्रवणयोरायोजनं श्राम्यतां
भिन्दाना युगपद्विभिन्नविषयं मोहं हृदि प्राणिनाम् ।
आद्ये धर्मकथाविधौ जिनपतेराद्यस्य वाणी नृणां
वृन्दैरुद्यदपूर्वविस्मयरसैराकर्णिता पातु वः ॥ ४ ॥
अव्याज्जगन्ति पुरुषोत्तमनाभिसूते-
र्देवस्य वक्त्रकमलोदरमावसन्त्याः ।
धौतेव दन्तकिरणप्रकरेण मूर्ति-
र्देव्या गिरामधिपतेः शरदिन्दुगौरी ॥ ५ ॥

---

१. 'त्समीक्ष' इति भवेत्.

रक्षन्तु स्खलितोपसर्गगलितमौञ्ज्यप्रतिज्ञाविधौ
याति स्वाश्रयमर्जितांहसि सुरे निःश्वस्य संचारिताः ।
आजानु क्षितिमध्यमग्नवपुषश्चक्राभिघातव्यथा-
मूर्च्छान्ते करुणामराञ्चितपुटा वीरस्य वो दृष्टयः ॥ ६ ॥

प्रवधानामनध्यायः सा जयति शुद्धया ।
यया प्रतिपदे चेन्दुः कविः क्षीणोऽपि जीवति[1] ॥ ७ ॥

वन्द्यास्ते कवयः काव्यपरमार्थविशारदाः ।
विचारयन्ति ये दोषान्गुणांश्च गतमत्सराः ॥ ८ ॥

वार्योऽनार्यः स निर्दोषे यः काव्याध्वनि सैर्पताम्[2] ।
अग्रगामितया कुर्वन्विघ्नमायाति सैर्पताम्[3] ॥ ९ ॥

शेषे सेवावशेषं ये न जानन्ति द्विजिह्वतः ।
यान्तो हीनकुलाः किं ते न लज्जन्ते मनीषिणाम् ॥ १० ॥

स्वादुतां मधुना[4] नीताः पशूनामपि मानसम् ।
मदयन्ति न यद्वाच्यः किं तेऽपि कवयो भुवि ॥ ११ ॥

काव्यं तदपि किं वाच्यमेवाश्चि न करोति यत् ।
श्रुतमात्रमभिज्ञाणां वक्त्राणि च शिरांसि च ॥ १२ ॥

उत्पतन्त्यजवद्व्योम्नि केचित्प्राप्तपदत्रयाः ।
विशन्त्यन्ये प्रबन्धेऽपि लब्धे बलिरिव क्षितिम् ॥ १३ ॥

कषाश्मनेव श्यामेन मुखेनाधौ[6] मुखेक्षणः ।
काव्यहेम्नो गुणान्वक्ति कलाद इव दुर्जनः ॥ १४ ॥

---

१. बृहस्पतिरिवाचरतीत्यर्थः. २. गच्छतामित्यर्थः. ३. अहितामित्यर्थः. ४. माधुर्येण, चैत्रेण च. ५. अवचनानि, अधोमुखानि च. ६. 'धोम' इति स्यात्.

अखण्डदण्डकारण्यभाजः प्रचुरवर्णकात् ।
व्याघ्रादिवेसवाघ्रातो गद्याद्व्यावर्तते जनः ॥ १५ ॥
वर्णयुक्तिं दधानापि स्निग्धाञ्जनमनोहराम् ।
नातिश्लेषघना श्लाघां कृतिर्लिपिरिवाश्नुते ॥ १६ ॥
अश्रान्तगद्यसंताना श्रोतॄणां निर्विदे कथा ।
जहाति पद्यप्रचुरा चम्पूरपि कथारसम् ॥ १७ ॥
सत्कथारसबन्धेषु निबन्धेषु नियोजिताः ।
नीचेष्विव भवन्त्यर्थाः प्रायो वैरस्यहेतवः ॥ १८ ॥
नमो जगन्नमस्याय मुनीन्द्रायेन्द्रभूतये ।
यः प्राप्य त्रिपदीं वाचा विश्वं विष्णुरिवानशे ॥ १९ ॥
प्रस्तावनादिपुरुषौ रघुकौरववंशयोः ।
वन्दे वाल्मीकिकानीनौ सूर्याचन्द्रमसाविव ॥ २० ॥
सत्यं बृहत्कथाम्भोधेर्बिन्दुमादाय संस्कृताः ।
तेनेतरकथाः कन्थाः प्रतिभान्ति तदग्रतः ॥ २१ ॥
जितं प्रवरसेनेन रामेणेव महात्मना ।
तरत्युपरि यत्कीर्तिसेतुर्वाङ्मयवारिधेः ॥ २२ ॥
प्रसन्नगम्भीरपथा रथाङ्गमिथुनाश्रया ।
पुण्या पुनाति गङ्गेव गां तरङ्गवती कथा ॥ २३ ॥
प्राकृतेषु प्रबन्धेषु रसनिष्यन्दिभिः पदैः ।
राजन्ते जीवदेवस्य वाचः पल्लविता इव ॥ २४ ॥
म्लायन्ति सकलाः कालिदासेनासन्नवर्तिना ।
गिरः कवीनां दीपेन मालतीकलिका इव ॥ २५ ॥

---

१. 'व समाघ्रात' इति स्यात्. २. पादलिप्ताचार्यविरचिता.

केवलोऽपि स्फुरन्बाणः करोति विमदान्कवीन् ।
किं पुनः क्लृप्तसंधानपुलिन्ध्रकृतसंनिधिः ॥ २६ ॥

कादम्बरीसहोदर्या सुधया वैबुधे हृदि ।
हर्षाख्यायिकया ख्यातिं बाणोऽब्धिरिव लब्धवान् ॥ २७ ॥

माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे ।
स्मरन्ति भारवेरेव कवयः कपयो यथा ॥ २८ ॥

निरोद्धुं पार्यते केन समरादित्यजन्मनः ।
प्रशमस्य वशीभूतं समरादित्यजन्मनः ॥ २९ ॥

स्पष्टभावरसा चित्रैः पदन्यासैः प्रवर्तिता ।
नाटकेषु नटस्त्रीव भारती भवभूतिना ॥ ३० ॥

दृष्ट्वा वाक्पतिराजस्य शक्तिं गौडवधोद्धुराम् ।
बुद्धिः साध्वसरुद्धेव वाचं न प्रतिपद्यते ॥ ३१ ॥

भद्रकीर्तेर्भ्रमत्याशाः कीर्तिस्तारागणाध्वनः ।
प्रभा ताराधिपस्येव श्वेताम्बरशिरोमणेः ॥ ३२ ॥

समाधिगुणशालिन्यः प्रसन्नपरिपक्त्रिमाः ।
यायावरकवेर्वाचो मुनीनामिव वृत्तयः ॥ ३३ ॥

सूरिर्महेन्द्र एवैको वैबुधाराधितक्रमः ।
यस्यामर्त्योचितप्रौढिकविविस्मयकृद्वचः ॥ ३४ ॥

---

१. क्लृप्तसंधानेन पुलिन्ध्रेण भिल्लेन कृतः संनिधिः संनिधानं यस्य बाणस्य स भयद एव, अन्यपक्षे बाणः कादम्बरीकर्ता तस्य सूनुः पुलिन्ध्रस्तेन कादम्बरीकथार्थसमर्थिता निर्वाहितात एव विशेषणं क्लृप्तसंधानमिति. क्लृप्तसंधानं प्रारब्धनिर्वाहणं येन पुलिन्ध्रेण तेन कृतं सांनिध्यं यस्य स इत्यर्थः. २. तारागणनामको ग्रन्थः स एवाध्वा यस्य.

स मदान्धकविध्वंसी रुद्रः कैर्नाभिनन्द्यते ।
सुश्लिष्टललिता यस्य कथा त्रैलोक्यसुन्दरी ॥ ३५ ॥
सन्तु कर्दमराजस्य कथं हृद्या न सूक्तयः ।
कविस्त्रैलोक्यसुन्दर्यो यस्य प्रज्ञानिधिः पिता ॥ ३६ ॥
केचिद्वचसि वाच्येऽन्ये केऽप्यशून्ये कथारसे ।
केचिद्गुणे प्रसादादौ धन्याः सर्वत्र केचन ॥ ३७ ॥
अस्त्याश्चर्यनिधानमर्बुद इति ख्यातो गिरिः खेचरैः
कृच्छ्राल्लङ्घितदिग्विलङ्घिशिखरग्रामोऽग्रिमः क्ष्माभृताम् ।
मैनाकेन महार्णवे हरतनौ सत्या प्रवेशे कृते
येनैकेन हिमाचलः शिखरिणां पुत्रीति लक्ष्योऽभवत् ॥ ३८ ॥
वासिष्ठैः स्म कृतस्मयो वरशतैरस्त्यग्निकुण्डोद्भवो
भूपालः परमार इत्यभिधया ख्यातो महीमण्डले ।
अद्याप्युद्गतहर्षगद्गदगिरो गायन्ति यस्यार्बुदे
विश्वामित्रजयोज्झितस्य भुजयोर्विस्फूर्जितं गुर्जराः ॥ ३९ ॥
तस्मिन्नभूद्रिपुकलत्रकपोलपत्र-
वल्लीवितानपरशुः परमारवंशे ।
श्रीवैरिसिंह इति दुर्धरसैन्यदन्ति-
दन्ताग्रभिन्नचतुरर्णवकूलभित्तिः ॥ ४० ॥
तत्राभूद्वसतिः श्रियामपरया श्रीहर्ष इत्याख्यया
विख्यातश्चतुरम्बुराशिरशनादाम्नः प्रशास्ता भुवः ।
भूपः खर्वितवैरिगर्वगरिमा श्रीसीयकः सायकाः
पञ्चेषोरिव यस्य पौरुषगुणाः केषां न लग्ना हृदि ॥ ४१ ॥
तस्योदग्रयशाः समस्तसुभटग्रामाग्रगामी सुतः
सिंहो दुर्धरशक्रसिन्धुरवतेः श्रीसिन्धुराजोऽभवत् ।

एकाधिज्यचतुर्जिताब्धिवलयावच्छिन्नभूर्यस्य स
श्रीमद्वाक्पतिराजदेवनृपतिर्वीराग्रणीरग्रजः ॥ ४२ ॥
आकीर्णाङ्घ्रितलः सरोजकलशच्छत्रादिभिर्लाञ्छनै-
स्तस्याजायत मांसलायतभुजः श्रीभोज इत्यात्मजः ।
प्रीत्या योग्य इति प्रतापवसतिः ख्यातेन मुञ्जाख्यया
यः स्वे वाक्पतिराजभूमिपतिना राज्येऽभिषिक्तः स्वयम् ॥ ४३ ॥
देव्या विभ्रमसद्मपद्मवसतेः कर्णावतंसं क्षितेः
सौभाग्यप्रतिपक्षमिन्दुमहसः सर्गाद्भुतं वेधसः ।
धत्ते योऽवधिभूतमीक्षणहृता नेत्रामृतं योषितां
रूपन्यक्कृतकाममङ्कुरमणिस्तत्राभिरामं वपुः ॥ ४४ ॥
आयाता शरदित्युदीर्य मुदितैर्दारैः पुरो दर्शिता
लीलोद्यानभवा नवाः सुमनसः सप्तच्छदक्ष्मारुहाम् ।
यत्सैन्यागमशङ्किनामसुहृदामाकृष्टगन्धा इव
श्वासैः खेदनिरायतैर्विदधिरे सद्यः शिरोवेदनाम् ॥ ४५ ॥
श्रुत्वायं सहसा गतं निजपुरात्त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जललवप्रस्यन्दिति(?)स्यत्पुटाः ।
शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च मुहुर्मुहुर्विवलितग्रीवैर्विमुक्ता दृशः ॥ ४६ ॥
प्रासादेषु त्रुटितशिखरश्वभ्रलब्धप्रवेशैः
प्रातः प्रातस्तुहिनसलिलैः शार्वरैः स्नापितानि ।
धन्याः शून्ये यदरिनगरे स्थाणुलिङ्गानि शाखा
हस्तन्यस्तैः कुसुमनिकरैः पादपाः पूजयन्ति ॥ ४७ ॥
येषां सैन्यभराहितोरगपतिभ्रान्तिं प्रयातां बहि-
र्जायन्ते स्थगिता हिमांशुमहसः श्वेतातपत्रैर्दिशः ।

आमान्ति प्रभवो नृणामितरवत्तेऽप्यागताः सेवया
यस्यानेकजनाकुले निजवपुर्मात्राः सभामण्डपे ॥ ४८ ॥
न स्वप्नेऽपि समाश्रिता रिपुजनं म्लानिं गता नोन्नतौ
लग्ना साधुगुणद्विषां शुचितया कर्णेन दुष्टात्मनाम् ।
निर्दोषा हसनेन दिक्षु गमितेत्यात्मीयवार्तामिव
व्याकर्तुं व्रजति स्म यस्य तरसा कीर्तिः सुरेन्द्रालयम् ॥ ४९ ॥

निःशेषवाङ्मयविदोऽपि जिनागमोक्ताः
श्रोतुं कथाः समुपजातकुतूहलस्य ।
तस्यावदातचरितस्य विनोदहेतो
राज्ञः स्फुटाद्भुतरसा रचिता कथेयम् ॥ ५० ॥

आसीद्द्विजन्माखिलमध्यदेशे प्रकाशशाङ्काश्मनिवेशजन्मा(?) ।
अलब्ध देवर्षिरिति प्रसिद्धिं यो दानवर्षित्वविभूषितोऽपि ॥ ५१ ॥
शास्त्रेष्वधीती कुशलः कलासु बन्धे च बोधे च गिरां प्रकृष्टः ।
तस्यात्मजन्मा समभून्महात्मा देवः स्वयंभूरिव सर्वदेवः ॥ ५२ ॥

तज्जन्मा जनकाङ्घ्रिपङ्कजरजःसेवाप्तविद्यालवो
विप्रः श्रीधनपाल इत्यविशदामेतामबध्नात्कथाम् ।
अक्षुण्णोऽपि विविक्तसूक्तिरचने यः सर्वविद्याब्धिना
श्रीमुञ्जेन सरस्वतीति सदसि क्षोणीभृता व्याहृतः ॥ ५३ ॥

अस्ति रम्यतानिरस्तसकलसुरलोका स्वपदापहारशङ्कितशतक्रतुप्रार्थितेव शततमक्रतुवाञ्छाविच्छेदार्थमिव पार्थिवानामिक्ष्वाकूणामुत्पादिता प्रजापतिना, वृत्तोज्ज्वलवर्णशालिनी कर्णिकेवाम्भोरुहस्य मध्यमागमलंकृत्य स्थिता भारतवर्षस्य, तुषारधवलभित्तिना विशालवप्रेण परिगता

प्राकारेण, विपुलसोपानसुगमावतारवापीशतसमाकुला, मनोरथानामपि दुर्विलङ्घ्येन प्लवमानकरिमकरकुम्भीरभीषणोर्मिणा जलप्रतिबिम्बितप्राकारच्छलेन जलराशिशङ्कया मैनाकमन्वेष्टुमन्तःप्रविष्टहिमवतेव महता खातवलयेन वेष्टिता, पवनपटुचलितधवलध्वजकलापैर्जामदग्न्यमार्गणाहृतकौञ्चाद्रिच्छिद्रैरिवोद्भ्रान्तराजहंसैराशानिर्गममार्गायमाणैश्चतुर्भिरत्युच्चैर्गोपुरैरुपेता, प्रांशुशिखराग्रज्वलत्कनककलशैः सुधापङ्कधवलप्राकारवलयितैरमरमन्दिरमण्डलैर्मण्डलितभोगमध्यप्रवेशितोन्मणिफणासहस्रं शेषाहिमुपहसद्भिरुद्भासितचत्वरा, त्वरापतच्छलविशरशारणीसिक्तसान्द्रबालद्रुमैर्द्रुमतलनिषादिना परिश्रान्तपथिकलोकेन दिवसमाकर्ण्यमानमधुरतारघटीयन्त्रचीत्कारैः परित्यक्तसकलव्यापारेण पौरवनितामुखार्थितदृष्टिना सविक्रियं प्रजल्पता पठता गायता च भुजंगजनसमाजेन क्षणमप्यमुच्यमानमनोभवभवभावनीभवनैः प्रतिदिवसमधिकाधिकोन्मीलन्नीलकान्तिभिः स्वसंततिप्रभवपार्थिवप्रीतये दिनकरेणेवाकृष्य संचार्यमाणसकलशर्वरीतिमिरैरमरकाननानुकारिभिरारामैः श्यामायमानपरिसरा, गिरिशिखरततिनिभशातकुम्भप्रासादमालाध्यासितोभयविभागैः स्फुटविभाव्यमानमरकतेन्द्रनीलवज्रवैडूर्यराशिभिश्चामीकराचलतटीव चण्डांशुरथचक्रमार्गैः पृथुलायतैर्विपणिपथैः प्रसाधिता, धृतोद्धुरप्राकारपरिवेषैरभ्रंकषप्रतोलिभिरुत्तुङ्गमकरतोरणावनद्धहरितचन्दनमालैर्दोलाविभूषिताङ्गणवेदिभिरश्रान्तकालागुरुधूपधूमाश्लेषभयपलायमानदन्तवलभिकाभित्तिचित्रानिव विचित्रमयूखजालकमुचो माणिक्यजालकान्कलयद्भिरद्भुताकारैरनेकभूमिकाभ्राजिष्णुभिः सौधैः प्रवर्तिताविरतचन्द्रोदया प्रतिगृहं स्वच्छधवलायताभिर्दृष्टिभिरिव दिदृक्षारसेन वसुधया व्यापारिताभिः क्रीडासरसीभिः संवलिता, मृदुपवनचलितमृद्वीकालता-

वलयेषु वियति विलसतामसितागुरुधूपधूमयोनीनामासारवारिणेवोपसिच्यमानेष्वतिनीलसुरभिषु गृहोपवनेषु वनितासखैः विलासिभिरनुभूयमानमधुपानोत्सवा, माद्यत्कोशलविलासिनीनितम्बास्फालनस्फारिततरङ्गया गृहीतसरलमृणालयष्टिभिः पूर्वार्णववितीर्णैर्वृद्धकञ्चुकिभिरिव राजहंसैः क्षणमप्यमुक्तपार्श्वया कपिलकोपानलेन्धनीकृतसगरतनयस्वर्गवार्तामिव प्रष्टुं भागीरथीमुपस्थितया सरिता सरय्वाख्यया कृतपर्यन्तसख्या, सततगृहव्यापारनिषण्णमानसाभिर्निसर्गतो गुरुवचनानुरागिणीभिरनुल्बणोज्ज्वलवेषाभिः स्वकुलाचारकौशलशालिनीभिः शालीनतया सुकुमारतया च कुचकुम्भयोरपि कदर्थ्यमानाभिरुद्धत्या मणिभूषणानामपि खिद्यमानाभिर्मुखरतया रतेष्वपि ताम्यन्तीभिर्वैया(जा)त्यपरिग्रहेण स्वप्नेऽप्यलङ्घयन्तीभिर्द्वारतोरणमङ्गीकृतसतीव्रताभिरप्यसतीव्रताभिरलसाभिर्नितम्बभरवहने तुच्छाभिरुदरे तरलाभिश्चक्षुषि कुटिलाभिर्भ्रुवोरतृप्ताभिरङ्गशोभायामुद्धताभिस्तारुण्ये कृतकुसङ्गाभिश्चरणयोर्न स्वभावे कोपेऽप्यदृष्टमुखविकाराभिर्व्यलीकेऽप्यनुज्झितविनयाभिः खेदेऽप्यखण्डितोचितप्रतिपत्तिभिः कलहेऽप्यनिष्ठुरभाषिणीभिः सकलपुरुषार्थसिद्धिभिरिव शरीरबद्धाभिः कुलप्रसूताभिरलंकृता वधूभिः, इतराभिरपि त्रिभुवनपताकायमानाभिः कुबेरपुरपण्याङ्गनाभिरिव कृतपुण्यजनोचिताभिः पादशोभयापि न्यक्कृतपद्माभिरूरुश्रियापि लघूकृतरम्भास्तम्भाभिर्गौर्यापि छायया सौभाग्यहेतोरुपासिताभिरिन्दुनापि प्रतिदिनं प्रतिपन्नकलान्तरेण प्रार्थ्यमानमुखकमलकान्तिभिर्मकरध्वजेनापि दर्शिताधिना लब्धहृदयप्रवेशमहोत्सवाभिरप्रयुक्तयोगाभिरेकावयवप्रकटाननमरुतामपि गतिं स्तम्भयन्तीभिरव्यापारितमन्त्राभिः सकृदाह्वानेन नरेन्द्राणामपि सर्वस्वमाकर्षयन्तीभिरसदोषधीपरिग्रहाभिरीषत्कटाक्षपातेनाचलानपि द्रावयन्तीभिः

सुरतशिल्पप्रगल्भतावष्टम्भेन रूपमपि निरुपयोगमवगच्छन्तीभिस्तारुण्यमपि तृणलघु गणयन्तीभिर्विलासानपि हास्यकोटौ कलयन्तीभिराभरणसंभारमपि भारमवधारयन्तीभिः प्रसाधनाडम्बरमपि विडम्बनापक्षे स्थापयन्तीभिरुपचारमथाचारबुद्ध्या प्रपञ्चयन्तीभिः कैश्चिदधरैरिव शतशः खण्डितैरप्यखण्डितरागैरनिशमुपयुज्यमानवदननिःश्वासपरिमलाभिरपरैस्तु चषकैरिव कदाचिद्दानप्रणयितामानीय प्रगुणैरप्रसन्नै रणन्मधुकरध्वनिना मन्दं मन्दं रणरणायमानैः कामिभिरशून्यमन्दिरद्वाराभिर्नवसुरतेषु बद्धरागाभिरपि नीचरतेष्वशक्ताभिर्लक्ष्मीमनोवृत्तिभिरिव पुरुषोत्तमगुणहार्याभिर्न पुनरेकान्ततोऽर्थानुरागिणीभिः संसारेऽपि सारताबुद्धिनिबन्धनभूताभिः कुलक्रमागतवैशिककलाकलापवैचक्षण्याभिः साक्षादिव कामसूत्रविद्याभिर्विलासिनीभिर्वितीर्णत्रिभुवनजिगीषुकुसुमसायकसाहायका, अकलिताढ्या नाढ्यविवेकैरगृहीतपण्डितापण्डितविभक्तिभिरनवबुद्धसाध्वसाधुविशेषैरनवधारितधार्मिकाधार्मिकपरिच्छित्तिभिः सर्वैरप्युदारविशेषैः सर्वैरपि च्छेकोक्तिकोविदैः सर्वैरपि परोपकारप्रवणैः सर्वैरपि सन्मार्गवर्तिभिः ज्ञातनिःशेषपुराणेतिहाससारैः दृष्टसकलकाव्यनाटकप्रबन्धैः परिचितनिखिलाख्यायिकाख्यानव्याख्यानैः प्रमाणविद्भिरप्यप्रमाणविद्यैरधीतनीतिभिरप्यकुटिलैरभ्यस्तनाट्यशास्त्रैरप्यदर्शितभ्रूनेत्रविकारैः कामसूत्रपारगैरप्यविदितवैशिकैः सर्वभाषाविचक्षणैरप्यशिक्षितलाटोक्तिभिः सात्त्विकैरपि राजसभावाप्तख्यातिभिरोजस्विभिरपि प्रसन्नैः पूर्वाभिभाषिभिरुत्तरास्यालापनिपुणैः सकलरसभावनैः अविषादिभिः न्यायदर्शनानुरागिभिरपि न रौद्रैः परानुपहासिभिर्नर्मशीलैः सर्वस्य गुणग्राहिभिः संतुष्टैर्व्यसनेष्वपरित्यागिभिः सर्वदा संविभागपरैः परोपकारिभिरात्मलाभोपतैः कतिपयकलापरिग्रहं ग्रहपतिमप्युपहसद्भि-

मित्रमप्युत्कमराजपुत्रमनुकूलमपि निरस्यद्भिर्लक्ष्मीमाप्तये गाढभृतमूर्च्छत्वाद् वासुदेवमपि विप्लावयद्भिः स्नेहशून्यमानसं जिनमप्यवजानद्भिर्नास्तिकैः संकुला, विरचितालकेव मखानलधूमकोटिभिः स्पष्टिताञ्जनतिलकबिन्दुरिव बालोद्यानैः आविष्कृतविलाससहासेव दन्तवलभीभिः आगृहीतदर्पणेव सरोभिः सकृतयुगेव सत्पुरुषव्यवहारैः समकरध्वजराज्येव पुरन्ध्रिबिब्बोकैः सब्रह्मलोकेव द्विजसमाजैः ससमुद्रमथनेव जनसंघातकलकलेन विद्रुमप्रभावर्षिभिराभरणपाषाणखण्डैरिव पाखण्डैर्मुषितकल्मषा, जयानुरागिभिरुपवनैरिव श्रोत्रियजनैः सच्छायाविचित्राकारवेदिभिरङ्गणैरिव नागरिकगणालंकृतगृहा, सवनराजिभिः सामस्वरैरिव क्रीडापर्वतकपरिसरैरानन्दितद्विजा, विश्वकर्मसहस्रैरिव निर्मितप्रासादा, लक्ष्मीसहस्रैरिव परिगृहीतगृहा, देवतासहस्रैरिवाधिष्ठितप्रदेशा, महापार्थिववरूथिनीवानेकरथ्यासंकुला, राज्यनीतिरिव सन्धिप्रतिपाद्यमाना वार्ताधिगतार्था, अर्हद्दर्शनस्थितिरिव नैगमव्यवहाराक्षिप्तलोका, रसातलविवक्षुरविरथचक्रभ्रान्तिरिव चीत्कारमुखरितमहाकूपारघट्टा, सर्वाश्चर्यनिधानमुत्तरकौशलेष्वयोध्येति यथार्थाभिधाना नगरी । या सितांशुकरसंपर्कादपरिस्फुटस्फटिकदोलासु बद्धासनैर्विलासिमिथुनैरवगाह्यमानगगनान्तरा यस्यां समन्तादन्तरिक्षसंचरत्खेचरमिथुनस्य शुचिप्रदोषेषु शोभामधरीचकार विद्याधरलोकस्य । यस्याश्च गगनशिखोल्लेखिना प्राकारशिखरेण स्खलितवर्मा प्रस्तुतचाटुरिव प्रत्यग्रवन्दनमालां श्यामलामधिगोपुरं विलम्बयामास वासरमुखेषु रविरथाश्वपङ्क्तिमरुणः । यस्यां च प्रियतमाभिसारप्रचलितानां पण्याङ्गनानामङ्गलावण्यसंवर्धिताभिराभरणरत्नांशुसंततिभिः स्तम्भिततिमिरोदया भवनदीर्घिकासरोजवननिद्राभिरन्वमीयन्त रजनीसमारम्भाः । या च

दक्षिणानिलतरङ्गितानां प्रतिभवनमुच्छ्रितानामनङ्गध्वजानामङ्गुलीविभ्रमाभिरालोहितांशुकवैजयन्तीभिः कृतमकरध्वजप्लोषमहापातकस्य शूलपाणेर्दत्तावकाशामलकापुरीमिव तर्जयन्ती मधुसमये संलक्ष्यते । यस्यां च मुदितगृहशिखण्डिकेकारवमुखरिताभिस्तरुणजलदपङ्क्तिभिः परिवारितप्रान्ताः सुप्रासादशिखरमालासु प्रावृषि कृतस्थितयो ग्रीष्मकालपरिभुक्तानामुपवनोपरुद्धपर्यन्तभुवामधस्तनभूमिकानां नोदकण्ठन्त सुकृतिनः । यस्यां च जलधरसमयनिर्धौतरेणुपटलनिर्मलानामुदग्रसौधाग्रपद्मरागग्राव्णां प्रतिभाभिरनुरञ्जितः शरत्कालरजनीपौरजनीवदनपराजयलज्जया प्रतिपन्नकाषाय इव व्यराजत पार्वणो रजनिजानिः । यस्यां च तुषारसंपर्कपटुतरैस्तरुणीकुचोष्मभिरितस्ततस्ताड्यमाना हैमिनीष्वपि क्षणदास्वमन्दीकृतचन्दनाङ्गरागगौरवमदत्ताङ्गारशकटिकासेवादरमस्पृष्टकेलिवापिकापङ्कजवनमधुप्रभञ्जनाः । यस्यां च वीथीगृहाणां राजपथातिक्रमः, दोलाक्रीडासु दिगन्तरयात्रा, कुमुदखण्डानां राज्ञा सर्वस्वापहरणमनङ्गमार्गणानां मर्मघट्टनव्यसनं वैष्णवानां कृष्णवर्त्मनि प्रवेशः, सूर्योपलानां मित्रोदयेन ज्वलनम्, वैशेषिकमते द्रव्यस्य कूटस्थनित्यता । यत्र च भोगस्पृहया दानप्रवृत्तयः, दुरितप्रशान्तये शान्तिककर्मणि भयेन प्रणतयः, कार्यापेक्षयोपचारकरणानि, अतृप्त्या द्रविणोपार्जनानि, विनयाधानाय वृद्धोपास्तयः पुंसामासन् ॥

तस्यां च भुवनत्रयाश्चर्यभूतायां नगर्यामवार्यभुजबलारातिकठिनकण्ठास्थिदलनदन्तुरकृपाणधारोऽवतार इव साक्षादरुणसारथेरेकरथाक्रान्तचतुरब्धिसीमा, समस्तैकविष्टपाधिपतया तुल्यरेखया वासुकिवासवयोरवस्थितः, यथाविधे व्यवस्थापितवर्णाश्रमधर्मः, यथार्थः प्रजापतिः, प्रतिपक्षाणामान्तराणामन्तराणां च विनेता, प्राप्तदैव-

पुरुषकारानुगुण्यः, षाड्गुण्यप्रयोगचतुरः, चतसृष्वपि विद्यासु लब्धप्रकर्षः, मनुष्यलोक इव गुणैरुपरिस्थितोऽपि मध्यस्थः, सर्वलोकानां विशेषज्ञोऽपि समदर्शनः, सर्वदर्शनानामनायासगृहीतसकलशास्त्रार्थयापि नीतिशास्त्रेषु खिन्नया परमाणुसूक्ष्मयापि क्रोडीकृतत्रैलोक्यया व्यक्तविवेकयाप्यतिनिबिडया प्रसन्नयाप्यसन्निहितमदया विशालहृदयासादितस्वेच्छावकाशयेवातिदूरप्रसृतया प्रज्ञया सम्यग्ज्ञातहेयोपादेयविभागः, सन्निहितदण्डनीतिप्रतीहारिसमाकृष्टाभिः समन्ततः पतिंवराभिरिवागत्यागत्य सिद्धमालाभिरासृ(श्रि)तो विपक्षलक्ष्मीभिः, गगनाभोग इव शशिभास्कराभ्यामच्युत इव शङ्खचक्राभ्यामम्भसांपतिरिवामृतवाडवाभ्यामभिराममीषणो यशःप्रतापाभ्याम्, इन्दुविमलाभिर्जलदसमयारम्भ इव राजहंसपङ्क्तिभिः प्रतिमानसं प्रस्थिताभिर्व्याप्तभुवनान्तरालो गुणपरम्पराभिः, असंख्यगुणशालिनापि सप्ततन्तुख्यातेन सर्वदाह्लादितलोकेनाप्येकदानानन्दितजनेनोदात्तेनापि स्वरितेन चरितेन पवित्रितत्रिभुवनावनिः, उच्चापशब्दः शत्रुसंहारे न वस्तुविचारे, वृद्धत्यागशीलो विवेकेन न प्रज्ञोत्सेकेन, गुरूणां वितीर्णाज्ञाशासनो भक्त्या न प्रभुशक्त्या, स्वजनपराङ्मुखः[1] परभार्यासु न सपर्यासु, अवनितापहारी[2] पालनेन न लालनेन, अकृतकारुण्यः करचरणे न शरणे, सौजन्यपरतन्त्रवृत्तिरप्यसौजन्ये निषण्णः, नलपृथुप्रभोऽप्यनलपृथुप्रभः, समित्[3]व्यतिकरस्फुरितप्रतापोऽप्यकृशानुभावोपेतः, सगरान्वयप्रभवोऽप्यमृतशीतलप्रकृतिः[4], शत्रुघ्नोऽपि विश्रुतकीर्तिः[5], अशेषशक्त्युपेतोऽपि[6] सकलभूभारधारणक्षमः, रक्षिताखिलक्षितितपोवनोऽपि त्रातचतुराश्रमः, सर्वसागरे-

---

१. स्वजने आलिङ्गने. २. विलासेन न वनितापहारी, अर्थात् अविलासी. ३. संबन्धः. ४. सविषः. ५. विश्रुता श्रुतकीर्तिः शत्रुघ्नकलत्रम्. ६. नागः.

रिवोत्पादितगाम्भीर्यः, सर्वगिरिभिरिवाविर्भावितोन्नतिः, सर्वज्वलनैरिव जनितप्रतापः, सर्वचन्द्रोदयैरिव रचितकीर्तिः, सर्वमुनिभिरिव निर्मितोपशमः, सर्वकेसरिभिरिव कल्पितपराक्रमः, सर्वमणिमयौषधैरिवोपबृंहितप्रभावः, पृथ्वीमय इव स्थैर्ये, तिग्मांशुमय इव तेजसि, सरस्वतीमय इव वचसि, लक्ष्मीमय इव लावण्ये, सुधामय इव माधुर्ये, तपोमय इवासाध्यसाधनेष्वनर्तितः, लक्ष्मीमदविकारैरखलीकृतः, व्यसनचक्रक्रीडाभिरनाकृष्टः, विषयग्राहैरयन्त्रितः, प्रमादप्रेमनिगडैरजडीकृतः, परमैश्वर्यसंनिपातेन गिरावासप्रतिष्ठः, सततमेवनेचरतः[1], श्रितविशुद्धसाधुसमाचारोऽपि सर्वकालमुर्व्या भुजंगतया आश्रितः, सार्वभौमो राजा मेघवाहनो नाम। यस्य फेनवत्स्फुटप्रसृतयशोट्टहासभरितभुवनकुहरीकृतगजेन्द्रकृत्तिभीषणः प्रकटितानेकनरकपालः[2] प्रलयकालविभ्रमेष्वाजिमूर्धसु संजहार विश्वानि शात्रवाणि महाभैरवः कृपाणः। यस्य चाकाण्डदर्शितसकलदिग्दाहो वज्र इव बिडौजसो निर्ददाह महीभृत्कुलानि समन्ततः प्रज्वलत्प्रतापः। यश्च संगरश्रद्धालुरहितानामुपनत्यानुशोषणप्रणत्यादानव्यसनी जनानामर्थितयाप्रीयत न कृतार्थतया। कुशाग्रीयबुद्धिः कार्याणां वैषम्येण जहर्ष न समतया, लक्ष्मीहस्ताकर्षणलम्पटो दैवस्य वैमुख्यमाचकाङ्क्ष नाभिमुख्यम्, विजयश्रीसंविभागकृपणः स्वानुजीविनां भीरुतया रेमे न शौण्डीरतया, धैर्यव्यक्तिकामो व्यसनाय स्पृहयांचकार नाभ्युदयाय, विनयचिकीर्षया सितमतिर्गुरूणां कोपेन मुमुदे न प्रसादेन, सकलधर्मनिर्मूलनाभिलाषी कलेरवतारस्योदकण्ठत न कृतयुगस्य। यस्य च प्रताप एव वसुधामसाधयत्परिकर एव सैन्यनायकाः, महिमैव राजकमनामयन्नीतिः प्रतीहाराः, सौभाग्यमेवा-

१. न विद्यते वनेचरता यस्य. २. नरकाणां पालः.

न्तःपुरमरक्षत्स्थितिः स्वापत्याः, आकार एव प्रभुतां शशंस परिच्छदच्छत्रचामरग्राहाः, तेज एव दुष्टप्रसरं रुरोध राज्याङ्गरक्षाः, आज्ञैवान्यायं न्यषेधयद्धर्मो धर्मस्थेयाः, रूपमेव मनस्विनीः प्रसादमनयद्विनोदो नर्मसचिवाः, धार्मिकतैव दुरितानि प्रतिचकार (न) प्रपञ्चः पुरोधसः, प्रज्ञैव मन्त्रान्निश्चिकाय शोभा मन्त्रिणः, आभिगामुकगुणग्राम एव परपक्षमाचकर्ष रूढिर्गूढपुरुषाः, त्याग एव दिक्षु कीर्तिमगमयद्विभवो बन्दिपुत्राः । यस्य चाश्ववृन्दरहिता अपि मुक्तमण्डला बभूवुः, समस्तानेकपदा अप्योजस्वितां विजहुः, अस्वरवर्णा अपि परं न व्यञ्जनमशिश्रियन्त शत्रवः। यस्मिंश्च राजन्यनुवर्तितशास्त्रमार्गे प्रशासति वसुमतीं धातूनां सोपसर्गत्वम्, इक्षूणां पीडनम्, पक्षिणां दिव्यग्रहणम्, पदानां विग्रहः, तिमीनां गलग्रहः, गूढचतुर्थकानां पादाकृष्टयः, कुकविकाव्येषु यतिभ्रंशदर्शनम्, उदधीनामपवृद्धिः, निधुवनक्रीडासु तर्जनताडनानि, द्विजातिक्रियाणां शास्त्रोद्धरणम्, बौद्धानुपलब्धेरसद्व्यवहारप्रवर्तकत्वम्, प्रतिपक्षक्षयोद्यतमुनिकथासु कुशास्त्रश्रवणम्, सारीणामक्षप्रसरदोषेण परस्परं बन्धवधमारणानि, वैशेषिकमते द्रव्यस्य प्राधान्यम्, गुणानामुपसर्जनभावो बभूव। किं बहुना। यस्य धारणे कूर्मपतिनापि पराङ्मुखीभूतमादिवराहेणापि वक्रितं मुखमुरगराजस्यापि सहस्रधा भिन्नाः फणा एव भित्तयः, तमपि भुवनभारमनायासेनैव धृतासिना भुजेन यो बभार। निर्यत्नधृतसमस्तभुवनभारतया च तं द्वितीयं शेषं तृतीयमादिवराहदंष्ट्राङ्कुरमष्टमं कुलाचलं नवममाशागजममन्यन्त जनाः। किं च। मुक्तमदजलासारकरिघटासहस्रमेघमण्डलान्धकारिताष्टदिग्भागेषु घनस्तनितघर्घरघूर्णमानरथनिर्घोषेषु दर्पोत्पतत्पदातिकरतलतुलिततरवारितडिल्लताप्रतानदन्तुरितान्तरिक्षकुक्षिषु प्रचण्डानि-

क्षप्रणुन्नकरकोपलप्रकरपातमुखरसप्तिखुरपुटध्वानजनितजगज्ज्वरेषु प्रसर्पन्नृपश्रेणिचूडामणिमरीचिचक्रविरचितेन्द्रचापकलापेषु प्रत्यावृत्तप्रथमजलधरसमयशङ्काविधायिषु लोकस्य यदीयसैन्येषु सकलप्रतिपक्षलक्ष्मीजिघृक्षया शरत्समये समन्ततःप्रचलितेषु विषमजलनिधिमध्यवासिनोऽपि कंसद्विष इव द्वीपावनीपालनिवहस्य निद्राक्षयमगच्छत । अन्यच्च ।

यस्य दोष्णि स्फुरद्धेतौ प्रतीये विबुधैर्ध्रुवः ।
बौद्धतर्क इवार्थानां नाशो राज्ञां निरन्वयः ॥
लतावनपरिक्षिप्ते निन्ये यदरिभिर्निशा ।
विन्ध्याद्रेस्तल्परुचिरे न वेश्मनि नवेऽश्मनि ॥
अन्तर्दग्धागुरुशुचावाप यस्य जगत्पतेः ।
नारीणां संहतिश्चारुवेषा कारागृहे रतिम् ॥
दृष्ट्वा वैरस्य वैरस्यमुज्झितास्त्रो रिपुव्रजः ।
यस्मिन्विश्वस्य विश्वस्य कुलस्य कुशलं व्यधात् ॥

स राजा बाल एवाधिगतराज्याभिषेकः सकलभुवनाभिभाविना भुजबलेन निर्जित्य सप्ताम्बुराशिरशनाकलापां काश्यपीम्, कृत्वा सततसंचरणशीलस्य यशसः सुखप्रचारार्थमिव निष्कण्टकाः ककुभः, दिक्कुम्भिनामालानस्तम्भनानुकारिणः समारोपितस्वनामवर्णाः श्रेणीकानारोप्य दिशामष्टानामपि पर्यन्तेषु, जयस्तम्भानुपार्जितप्रभूतकोशं वशीकृतसमस्तसामन्तमायत्तमन्त्रिमण्डलमुपगृहीतमित्रवर्गमाप्तपुरुषाधिष्ठितदुर्गं समग्रमपि राज्यमाजन्मनः प्ररूढपरमसौहृदस्य हृदयस्येवातिविश्वसनीयस्य बाहोरिव वसुंधराभारवहनक्षमस्कन्धस्य प्रगल्भमत्युपहसितधिषणस्यापि प्रज्ञावतां धौरेयस्य विदितनिःशेषनीतिशास्त्रसंहतेर-

---

१. 'विष विप्रयोगे' इति धातोर्वेष इति रूपम्, ततश्चारुः वेषो विप्रयोगो यस्याः.

मात्यवर्गस्यायत्तमकरोत्। आत्मनापि निःशेषितारिवंशतया विगतशङ्कः स्वधर्मव्यवस्थापितवर्णाश्रमतया जातनिर्वृतिः पर्यवसिताखिलप्रारब्धकार्यतया निराकुलमनास्तत्कालं मनःपुरीमनुप्रवेष्टुकामं कार्मुकधारणापराधविलक्षमनसं मकरलक्ष्माणमनुग्राहयितुमागतेन विस्तारितचतुरोक्तिना दूतेनेव नवयौवनेनोपदर्शितेष्विन्द्रियग्रामहारिषु विषयेषु परिभोगलालसं मानसमासञ्जयामास। तथाहि—कदाचित्सकुतूहलगृहदेवतावलोकितः, कामिनीजनाभरणझात्कार एव तूर्यरवसंवर्धितैस्तारतरविलापिनां वैतालिकानामिव केलीशकुन्तानां ध्वनिभिराधीयमानरभसः, सरभसदशनाग्रदंशदलितदन्तच्छदमदयकचग्रहोल्लसद्भ्रूकुटीभूषितललाटदेशमावेशपरवशप्रवृत्तकरप्रहारव्याहरन्मणिवलयमविरलोद्गतश्रमस्वेदतिम्यद्रोमाञ्चकवचमनवरतमुक्तकौसुमशरासारव्यपदेशादुपजाततुष्टिनेव मानसभुवा देवेन पात्यमानपुष्पवृष्टिः, उत्कृष्टकरणप्रयोगरमणीयमत्यद्भुतं रतसमरमाततान। कदाचिन्नीलपटावगुण्ठिताङ्गो लाङ्गलीव कालिन्दीजलवेणिकाः प्रत्यग्रमृगमदाङ्गरागनलिनवपुषो बहुलप्रदोषाभिसारिकाः सुदूरमाचकर्ष। कदाचिदुल्लसितकनकशृङ्गसुन्दरो मन्दराद्रिरिव क्षीरोदजलवीचिभिरागृहीतविविधशङ्खशुक्तिपुटाभिरवरोधपुरन्ध्रीभिरुपसृत्योपसृत्य सिच्यमानो जलक्रीडामकरोत्। कदाचिन्मुदितसुहृद्गणोपदिश्यमानमार्गो मृगाङ्कमौलिरिव कैलासशिखरे मुखरशिखण्डिनि क्रीडागिरौ देवीसमेतः सविभ्रमं बभ्राम। कदाचिन्मन्युगौरवादतिलङ्घितपादपतनविभ्रमाणां प्रेयसीनां प्रसादनं प्रति निष्प्रत्याशः प्रान्तनिपतदम्बुधारान्धकारितोदरकुहरेषु धारागृहेषु बिसिनीपलाशप्रस्तरशायी मनसिशयसंतापमत्यवाहयत्। कदाचिद्देव्या सार्धमारब्धस्पर्धः स्वपरिगृहीतानां गृहोद्यानवीरुधामकालकुसुमोद्गतिकारिणस्तांस्तान्दोहद-

योगानदात् । कदाचिद्धौतमृगमदाङ्गरागमनुरागजं स्वेदजलमजस्रमुज्झिस्नानं बहु मन्यमानः प्रतिकर्मासमाप्तिकाम्यया कामिनीकुचकुम्भभित्तिष्वनेकभङ्गकुटिलाः पत्राङ्गुलीरकल्पयत् । कदाचित्क्रीडायै द्यूतपराजितः पणितमप्रयच्छन् 'क्व गच्छसि' इति बद्धालीकभ्रुकुटिभिर्विदग्धवनिताभिराकृष्य कृतविषमपदपातो बलादिव दत्तकपाटसंपुटेषु वासवेश्मसु सपत्नीसमक्षमेवाक्षिप्यत । कदाचिदीर्ष्यारुणप्रतिप्रमदाकटाक्षकर्बुरमुपरिक्षिप्तरक्तोत्पलपलाशमिव कापिशायनं स्वयमुत्क्षिप्तमाणिक्यचषकश्चन्द्रिकाप्रहासिषु प्रासादतलेषु प्रेमपरवशः प्रणयकुपिताः प्रेयसीः सानुनयमपाययत् । कदाचिद्वदनमण्डनादिभिर्विडम्बनाप्रकारैरुपहसन्विदूषकानन्तःपुरिकाजनमहासयत् । कदाचिदङ्गनालोल इति निपुणचित्रकारैश्चित्रपटेष्वारोप्य सादरमुपायनीकृतानि रूपातिशयशालिनीनामवनिपालकन्यकानां प्रतिबिम्बानि परित्यक्तान्यकर्मा दिवसमालोकयत् । कदाचित्स्वयमेव रागविशेषेषु संस्थाप्य समर्थितानि शृङ्गारप्रायरसानि स्वरचितसुभाषितानि स्वभावरक्तकण्ठया गाथकगोष्ठ्या पुनरुक्तमुपगीयमानान्यनुरागभावितमनाः शुश्राव । कदाचिदावेदितनिखिलनाट्यवेदोपनिषद्भिर्नर्तकोपाध्यायैरुपदर्शितानां नर्तकीनामक्षुण्णेन शास्त्रवर्त्मना कृतसूक्ष्मगुणदोषोपन्यासः पश्यन्नास्यविधिमासन्नवर्तिनो विदग्धराजलोकस्य मनांसि जहार । कदाचिद्भवनदीर्घिकाम्भसि प्रवृत्तनिर्भरक्रीडारसानामन्तःपुरविलासिनीनां पतिताङ्गुलीयकमुद्रान्वेषणादिना तेन तेन व्याजेन निमज्ज्य गृहीतजघनांशुको विभ्रमभ्रूभङ्गसुभगललाटलेखानि व्याजवैलक्ष्यहासविकसितकपोलदर्पणान्यलीकाक्रोशपदकृद्यवाञ्चि समासन्नप्रतिप्रमदामुखप्रहितकृत्रिमत्रपातरलतरतारकान्यविरतदिदृक्षारसो वीक्षामास मुखानि । किं बहुना । यदुचितं यौवनस्य रुचितं चित्तवृत्ते-

राराधकं विदग्धानामबाधकं लोकद्वयस्य, तदपरमप्यविकलतया विवेकस्य स्थिरतया कुलाभिमानस्य स्वभ्यस्ततया विनयस्य भूयिष्ठतया च सत्त्ववृत्तेः, यथा न धर्मः सीदति यथा नार्थः क्षयं व्रजति यथा न राजलक्ष्मीरुन्मनायते यथा न कीर्तिर्मन्दायते यथा न प्रतापो निर्वाति यथा न गुणाः श्यामायन्ते यथा न श्रुतमुपहस्यते यथा न परिजनो विरज्यते यथा न मित्रवर्गो म्लायति यथा न शत्रवस्तरलायन्ते तथा सर्वमन्वतिष्ठत् । सेवकानुरागस्य संरक्षणाय च वितीर्णसर्वावसरमन्तरान्तरा सभामण्डपमध्यास्त । धर्मपक्षपातितया च देवद्विजातितपस्विजनकार्येषु महत्सु कार्यासनं भेजे । पौरलोकपरितोषहेतोश्च वसन्तादिषु सविशेषप्रवृत्तोत्सवां निर्गत्य नगरीमपश्यत् । निसर्गत एवास्य पूर्वपार्थिवातिशायिनी प्रजासु पक्षपातस्य परवशा वृत्तिरासीत् । यतः—स तथाप्रसक्तोऽपि विषयोपभोगसुखेषु, जानन्नपि जागरूकताममात्यानाम्, विद्वानप्युपादेयतां निजाज्ञायाः, प्रत्यहमावेद्यमानप्रजानुरागोऽपि प्रणिधिपुरुषैरादेशसंपादनपटीयसि श्रद्धेयवचसि, नेदीयस्यपि मौलभृत्यवर्गे, तासां प्रजानां सुस्थासुस्थोपलम्भाय केनाप्यनुपलक्ष्यमाणविग्रहः कुसुमायुध इवायुधद्वितीयः स्वयमेव निर्गत्य निशामुखेषु प्रतिगृहं नगर्यां बभ्राम । किंवदन्तीशुश्रूषया च तत्र स्थाने संनिविष्टा विशिष्टजनगोष्ठीर्जगाहे । प्रतिश्रयकुटीषु च दिगन्तरागतपथिकसततसंबाधास्वढौकत । राजव्यापारकथाप्रक्रमे च पौराणामाशयपरीक्षार्थमवनीपतेरमात्यस्य तदधिकृतानां च यथासंभवं परिकल्प्य दोषानुदकीर्तयत् । तैश्च प्रशान्तनिखिलोपद्रवतया सर्वदा सुखितैः स्वामिसचिवाध्यक्षमिथ्यापरिवादश्रवणबद्धामर्षैरप्रत्यभिज्ञानस्य दोषेण परुषाक्षरमधिक्षिप्यमाणः परां मुदमुवाह ॥

सचिवलोकोऽपि श्रुतत्वाद्धर्मशास्त्राणामपेक्षितत्वादतीतपुरुषव्यवहाराणामकर्कशत्वादाशयस्य परिज्ञातत्वाच्च प्रभुचित्तवृत्तेः परिहरन्प्रजाखेदमखिलान्यपि राजकार्याणि चक्रे ॥

एवं च राज्ञः परित्यक्तसकलभुवनचिन्ताभारस्य निर्यत्नसमुपस्थितानन्तभोगलालितमूर्तेरतिमहासागरमध्यगतस्य सुखनिद्रापरवशात्मनस्तत्कालमनवेक्षितयापि लक्ष्म्या सुचिरप्ररूढप्रणयानुरोधादमुक्तसंनिधेर्देवस्य दानवारेरिवातर्कित एव भूयाञ्जगाम कालः। भूयसा च कालेन यत्किल लोके प्रसिद्धं विषयाणामपि प्रतिबद्धं पुण्यैरपि निष्पाद्यमिन्द्रियैरप्यास्वाद्यमैश्वर्येणापि भोग्यं महीभुजामपि योग्यमखिलमपि तत्प्रायेण जीवलोकसुखमनुबभूव । केवलमात्मजाङ्गपरिष्वङ्गनिर्वृतिं नाध्यगच्छत् । समग्राण्यपि कारणानि न प्राग्जन्मजनितकर्मोदयक्षणनिरपेक्षाणि फलमुपनयन्ति । यतोऽस्य नूतनेऽपि वयसि महत्यप्यन्तःपुरे बहुनापि कालेन नैकोऽप्युदपादि तनयः । क्रमादतिक्रामति च यौवने जरठतालिह्यमानवपुषस्तरोरिव त्रुटति कुसुमेषुरसे पल्लवस्येवाविर्भवति वैराग्ये विवेकबलपीडितासु मकरध्वजध्वजिनीष्विव वितीर्णधर्मद्वारासु निर्गच्छन्तीषु मनसः कामिनीसमागमवाञ्छास्वपत्यमुखदर्शनं प्रति निराशस्य 'राजन्, अध्वरस्वाध्यायविधानादानृण्यं गतोऽसि नः । पितॄणामपि गच्छ' इति याचितप्रसूतेरिव प्रादुर्भूतधर्मवासनातया संनिहितैर्देवर्षिभिः, 'वत्स, निवापदानैरिदानीमायुष्मता संभाविताः स्मः प्रभूतकालम् । अग्रतस्तु का गतिरस्माकम्' इति मुहुर्मुहुरुच्यमानस्येव स्वप्नेषु पितृभिः, 'तात, पूर्वपुरुषैरपि तावकैरियन्तं मार्गमानीताहम् । त्वयाप्यतिवृद्धाया मार्गदर्शको मे निरूपणीयः' इति प्रार्थितस्येव पश्चाल्लग्नयेक्ष्वाकुपार्थिवसंतत्या, 'शठ, सर्वः कृतार्थीकृतस्त्वया । मम पुनराश्रयमात्रमपि न

सूचितं भवता । क भूत्वा भविष्यत्प्रतिपक्षप्रतापातपकरालिता काल-मतिवाहयिष्यामि मन्दभाग्या' इति सोद्वेगमुपालब्धस्येव लब्धप्रसरया श्रिया, 'नाथ, कस्यचित्काचिदस्ति गतिः, अहमेव निर्गतिका । कुरु यत्सांप्रतं मदुचितम्' इति सखेदया संतानार्थमभ्यर्थितस्येव भुजलग्नया भुवा, 'देव, त्वद्वंश्येन गोप्त्रा विना कालान्तरे बलवदरातिहठविलु-प्यमानाभिः शरणाय कः समाश्रयणीयोऽस्माभिः' इति विज्ञापितस्येव चित्तस्थिताभिः प्रजाभिः, 'सखे, किं मया तव समीहितसिद्ध्यनुपयुक्त-शक्तिना वृथैव स्थितेन । अनुजानीहि माम्' इत्यापृष्टस्येव श्लथीकृतो-पगूहनं प्रयाता यौवनेन, 'विद्वन्, किमपरैस्त्रातैः । आत्मानं त्रायस्व पुंनाम्नो नारकात्' इति सोत्प्रासं शासितस्येव गुरुकृतेन श्रुतिधर्मेण, मर्म-दाही मुर्मुर इव प्रादुरभवदस्य चेतसि चिन्तासंज्वरः । येन प्रतिदिव-समासादितोद्दामप्रौढिना निदाघतपन इव निजतेजसा ताप्यमानो गुणानुरक्तयापि राजलक्ष्म्या दुर्भगाङ्गनयेव नारमत । मूलेऽतिमधुरेष्वपि विषयोपभोगसुखेषु काशस्तम्बेष्विव तृणबुद्धिं वचश्च कुमारोत्पत्तिकारण-भावमप्रतिपद्यमानमप्यन्तःपुरमफलपुष्पतया शरवणमजीगणत् । सुत-विभक्तभूभागान्न केवलमतिक्रान्तपार्थिवान्गिरीनपि बहुमन्यत । दृष्ट-वंशवृद्धिषु न नाम स्वबान्धवेषु धर्मारण्येष्वपि दृष्टिं ददौ । अपत्यप-रिवारनिर्वृतेभ्यो न वरं पौरेभ्यः पशुभ्योऽपि स्पृहयांचकार ॥

तस्य च राज्ञः सकलभुवनाभिनन्दितोदया द्वितीयाशशिकलेव द्वितीया, नाभिचक्रादपि गम्भीरेण कुचमण्डलादप्युन्नतेन जघनस्थला-दपि विशालेन भुजलतायुगलादपि सरलेन कपोलल्लावण्यादपि स्वच्छेन मदनविलासकलहंसमानसेनेव महतामाहितप्रमोदा मानसेन, निधानेन

१. सुताः पार्थिवाः.

गुणानां प्रधानेन सर्वालंकाराणामतिदुरापेणेतरप्रमदाभिः सर्वदा हृदिस्थेन हारेणेवापरेण परं शुद्धिशालिना शीलेनालंकृता, शीलसहचारिणा रूपेण विनयवता यौवनेन सौभाग्यसङ्गिना[1] लावण्येन[2] मौनकलितेन कलाकौशलेन प्रशमभाजा प्रभुत्वेन निपुणसेवकैरिव गृहीतनिजनिजालंकारैर्गुणैः सततमुपासिता, भाग्यसंपत्तिरिव सौभाग्यस्य, पुण्यपरिणतिरिव लावण्यस्य, संकल्पसिद्धिरिव संकल्पयोनेः, सर्वकामावाप्तिरिव कमनीयतायाः, निःस्यन्दधारेव शृङ्गारसुधाभृङ्गारस्य, रङ्गशाला रागशैलूषस्य, ज्येष्ठवर्णिकारूपमेव जातरूपस्य, अम्भोजिनी विभ्रमभ्रमराणाम्, शरत्कालागतिः केलिकलहंसीनाम्, वशीकरणविद्या मदनमहावार्तिकस्य[3], रससिद्धिवेदश्च धातुवादिकस्य[4], समस्तान्तःपुरशिरोरत्नभूता मदिरावती नाम देव्यभवत् ॥

यस्याश्च पुरतो विशुद्धाचारायाः सुरापगेति[5] लोके लब्धसंभावना पावनतया न परभागं प्राप गङ्गा ॥

प्रीतिप्रतिपक्षभूता सकललोकगणदर्शनायास्तृ(ः स्तै)णगणनायां रतिरधिकमल्पमात्मानं धारयन्ती, शुचितया न काचित्सरस्वती मकरध्वजविनाशहेतुः, सौभाग्यभङ्गिविचारे रेणुरचलकन्या, घनविसरकृतार्थीकृतप्रणयिसार्थाया गत्यभावेन गृहीतरत्नाकरवेला, कलयापि न समाना मेदिनीपर्यन्तज्वलितरत्नदीपमहार्हतल्पशायिन्या, निशि तमसि पट्टमधिशयाना(याः) न लेशेनापि सदृशविभवा बभूव राजलक्ष्मीः ॥

---

१. स्पृहणीयो रतिसुखकरस्पर्शगुणो भवति सौभाग्यम्. २. सद्गमनसभिवीक्षणसञ्जल्पनमिति लावण्यम्. ३. गारुडिकस्य. ४. रसवादिनः. ५. सुरापं गच्छन्तीति ते.

आढ्यश्रोणि दरिद्रमध्यसरणि स्रस्तांसमुच्चस्तनं
नीरन्ध्रालकमच्छगण्डफलकं छेकभ्रु मुग्धेक्षणम् ।
शालीनस्मितमस्मिताञ्चितपदन्यासं बिभर्ति स्म या
स्वादिष्टोक्तिनिषेकमेकविकसल्लावण्यपुण्यं वपुः ॥
परमां कोटिमारूढा स्वामिभावस्य सर्वदा ॥

सत्त्वे स्थिता सत्त्वनिर्मुक्ता, स्वप्नेऽप्यजातवैरिणीभिः सङ्गा, निरपत्या सततमुत्सङ्गेन लालिता पत्या ॥

एकदा च राजा याममात्रे वासरे समुच्छ्रितानेकभूमिकस्य गगनयात्रायासिताभिः सिद्धाध्वगवधूभिर्विश्रान्तये सततमध्यासितशिखरविटङ्कवेदिकस्य भद्रशालनाम्नो महाप्रासादस्य पृष्ठे समुपविष्टः समीपदेशोपविष्टया दृष्टिपातपथावस्थितेन वदनारविन्दनिहितनिश्चलदृशा विश्रान्तमिथःसंकथेन वर्षधरवनिताप्रायेण परिजनेनोपास्यमानया सह तया प्रस्तुतालापः सहसैवान्तरिक्षेण दक्षिणापथादापतन्तम्, उद्द्योतितसमस्तान्तरिक्षमार्गम्, आपीतसप्तार्णवजलस्य रत्नोद्गारमिव तीव्रोदानवेगनिरस्तमगस्त्यस्य, स्थूलकरनिःश्वासविप्रकीर्णमुत्तमाङ्गसिन्दूरनिकरमिव दक्षिणाशागजस्य, प्रचण्डपवनेरितरेणुपटलमिव सुवर्णद्वीपस्य, केरलीरक्षितशरणागतानङ्गवैलक्ष्यप्रतिनिवृत्तमीक्षणानलमिव विशालाक्षस्य, दिवापि दीप्यमानमीशानशिरःशशाङ्कप्रीत्या कैलासवासाय प्रचलितमौषधिव्रातमिव विन्ध्यस्य, कनकगिरिपर्यन्तचारिसूर्यतुरगानुसारेण नायनरश्मिनिवहमिव प्रधावितमन्तकमहिषस्य, त्रिशङ्कुसंपर्कजाशौचशोधनाय शिखाजालमिव विजृम्भितमाग्नेयदिङ्निवासिहुतवहस्य, वैश्रवणरत्नकोशदर्शनकुतूहलादलकापुरीमुच्चलितमन्तरात्मानमिव रोहणाचलस्य, तप्ततपनीय-

---

१. चाण्डालः.

पिङ्गलेन समन्ततः प्रसर्पता देहप्रभाप्रवाहेण संतर्पयन्तमिव क्षीणातपं दिवसमजातशत्रुणासत्यव्रताधिष्ठितेन कृष्णद्वैपायनमिव युधिष्ठिरेण, तपोजन्मना जनितबहुमानं जगति महत्त्वेन, त्रयीमिव महामुनिसहस्रोपासितचरणाम् विन्ध्यगिरिमेखलामिवाक्षमालोपशोभिताम् त्रिभुवनसृष्टिमिव प्रकटोपलक्ष्यमाणब्रह्मसूत्राम् सत्कर्मविद्यामिव विधिनिरूपितानवद्यप्रमाणाम् सुकविवाचमिव मार्गानुसारिप्रसन्नदृष्टिपाताम् असितपक्षचतुर्दशीमिव सर्वभूतानन्दकारिणीम् अचिरपरिणतामङ्गलक्ष्मीं दधानम्, अस्थूलमुक्ताफलश्रियः श्रमस्वेदकणिका गगनगङ्गाजलविप्रुष इव जवादनिलानीता विशालोन्नतललाटदेशसङ्गिनीरुद्वहन्तम्, अञ्जनत्विषा निजशरीरच्छायापुरुषेण दक्षिणाशागमनपरिचयप्रतिबुद्धेन धर्मराजेनेव सद्योगृहीतदीक्षेण दक्षिणेतरभागवर्तिना सदृशवेषाकारधारिणानुगम्यमानम्, अभिनवतमालखण्डहरितान्यप्सरोभिरिव सविभ्रमोन्मेषाभिरितस्ततो विलसन्तीभिस्तडिद्भिरध्यासितानि तपोभीतशतमखप्रदर्शितानि मायावनानीव सजलमेघमण्डलानि प्रतिमार्गमवलोकयन्तम्, अर्धपथदृष्टसिद्धसादरोत्सृष्टाभिरायामिनीभिरर्घकुसुमस्रग्भिः समन्ततो जटिलीकृतेन दुरुत्तरभवकूपनिपतितप्राणिसार्थोद्धरणार्थमधःप्रवर्तितपुण्यरज्जुनेव स्वभावमृदुना चरणद्वयेन द्योतमानम्, नदीतटतरुमिव स्फुटोपलक्ष्यमाणजटम्, ग्रीष्मकूपमिव प्रकटतनुशिरोजालम्, क्षेत्रगणितमिव लम्बभुजकर्णोद्भासितम्, अमरशैलमिव स्वयंपतितकल्पद्रुमदुकूलवल्कलावृतनितम्बम्, अम्बिकायौवनोदयमिव वशीकृतविषमाक्षचित्तम्, अकालविजिगीषुनृपतिसैन्यमिव यथासंख्यं तपोदयक्षपितानेकपापकलिम्, दक्षिणार्णवपारमिव त्रिकूटकटकोरस्थलं कमलसमकरम्, निष्परिग्रहमपि सकलत्रम्,

---

१. विभीतकः. २. तपश्च दया च.

विदितवस्तुसारेतरविभागमपि समतृणप्रवालमुक्तालेष्टुलोष्ठकाञ्चनम्, परपुरुषदर्शनसावधानं सौविदल्लमिन्द्रियवृत्तिरेव वनितानाम्, भूतापद्रुहकमम्बुधरागमं साधुमयूराणाम्, दुर्विषहतेजसं महामन्त्रमनङ्गविकाराशीविषाणाम्, कासधवलगुणोद्भासितमगस्त्योदयं हृदयजलाशयानाम्, आचारमिव चारित्रस्य, प्रतिज्ञानिर्वाहमिव ज्ञानस्य, शुद्धिसंचयमिव शौचस्य, धर्माधिकारमिव धर्मस्य, सर्वस्वदायमिव दयायाः, मार्गदेशकमिवापवर्गस्य, तैजसं मूर्त्या, पावनं चरितैः, आप्यं पुण्यैः, पार्थिवमतीतकालावस्थया, विद्याधरमुनिमपश्यत् ॥

दृष्ट्वा च तमदृष्टपूर्वमुपजातकुतूहलो विस्मयस्तिमितदृष्टिरुपरतनिमेषतया दर्शनप्रीत्युपार्जितेन पुण्यराशिना तस्यामेव मूर्तावाविर्भूतदिव्यभाव इव मुहूर्तमराजत। अभिमुखीभूतं च तं प्रासादस्य दिवसकरमिव पौलस्त्यभूधराभिलाषिणं सप्रभातसंध्यो वासरः सुदूरविकासितमुखः समं मदिरावत्या प्रत्युज्जगाम ॥

धार्मिकजनानुवृत्त्यभिमुखानि हि भवन्ति सर्वदा धर्मतत्त्ववेदिनां हृदयानि। यतः स तं तथाकृताभ्युत्थानमादरस्यातिशयपुनरुक्तोक्तस्वागतमुपारूढप्रौढपुलकप्रकटितान्तःप्रीतिमुत्पक्ष्मलोचनयुगललक्ष्यीकृतमुखमग्रतः सपरिग्रहमवलोक्य समुपजातपक्षपातो विसृज्य मुनिभावस्य सहभाविनीं निरपेक्षतामुपेक्षितनिजप्रयोजनो जन इवेतरस्तरसाभिमुख्यमभवत्, अवातरच्चाम्बरतलात् ॥

उपरितनकुट्टिमन्यस्तचरणं च तमुपसृत्य सविनयमवनीपतिः प्रगुणीकृतार्घपात्रो विधाय विधिसंपादितया सपर्यया सानन्दमानन्दपर्यश्रुलोचनः प्रणम्य स्वयं समुपनीते सुराज्ञ्या दूरदर्शितादरया मदिरावत्या निजोत्तरीयपल्लवेन प्रमृष्टरजसि हेमविष्टरे न्यवेशयत्। कृतगृहागतम-

हर्षिसमुचितसमस्तोपचारश्च तं गुरुमिवाधिदैवतमिवोपास्य सुचिरमास्यनिहितनिश्चलचक्षुरवनीतलोपविष्टः सप्रश्रयमुवाच—'भगवन्, एष तावदभ्रंकषाग्रशिखरस्तुषारगिरिरिव गङ्गास्रोतसा गगनमण्डलादवतीर्य मुनिगणमाननीयेन गुरुतां परामारोपितः प्रासादस्त्वया । तदनु सर्वतः कृतावलोकनेन स्वच्छशिशिरैः शान्त्युदकशीकरैरिव दृष्टिपातैर्दूरीकृतो दुरितराशिरस्य समग्रस्यापि नगरीनिवासिनो मत्परिग्रहस्य । प्रणामसमये च मूर्धानमधिरोपितेन प्रकृतिपूतेन निजपादपांसुना संपादितमखिलतीर्थस्नानफलम् । एवं च सामान्येन सर्वतः समुपजातमप्यसंजाततृप्तिरधिकतरकल्याणसंपल्लाभाय भगवता क्रियमाणमिच्छाम्यात्मनो विशेषेणानुग्रहम् । इदं राज्यम्, एषा मे पृथिवी, एतानि वसूनि, असौ हस्त्यश्वरथपदातिप्रायो बाह्यः परिच्छदः, इदं शरीरम्, एतद्गृहं गृह्णतां स्वार्थसिद्धये परार्थसंपादनाय वा, यदत्रोपयोगार्हम् । अर्हसि नश्चिरान्निर्वापयितुमेतज्जन्मनः प्रभृत्यघटितानुरूपपात्रविषादविक्लवं हृदयम् ।' इति व्याहरन्तं च तं समुपजातहर्षो महर्षिरुवाच—'महाभाग, सर्वमनुरूपमस्य ते महिमातिशयतृणीकृतवारिराशेराशयस्य । केवलमभूमिर्मुनिजनो विभवानाम् । विषयोपभोगगृध्नवो हि धनान्युपाददते । मद्विधास्तु संन्यस्तसर्वारम्भाः समस्तसङ्गविरता निर्जनारण्यबद्धगृहबुद्धयो भैक्षमात्रभावितसंतोषाः किं तैः करिष्यन्ति । ये च सर्वप्राणिसाधारणमाहारमपि शरीरवृत्तये गृह्णन्ति, शरीरमपि धर्मसाधनमिति धारयन्ति, धर्ममपि मुक्तिकारणमिति बहु मन्यन्ते, मुक्तिमपि निरुत्सुकेन चेतसाभिवाञ्छन्ति, ते कथमसारसांसारिकसुखप्राप्त्यर्थमनेकार्थहेतुमर्थं गृह्णन्ति । परार्थसंपादनमपि धर्मोपदेशदानद्वारेण शास्त्रेषु तेषां समर्थितम् । नान्यथा । तदलमत्र निर्बन्धेन । कथय तावत्केयमुपहसित-

सुरलोकरामणीयका नगरी। कश्चास्यां महाभागस्त्वम् । कतमं च महापुरुषवंशममरोद्यानवेणुमिव मुक्तामणिरात्मोत्पत्त्या स्पृहणीयतमतां नीतवानसि । का चेयं पुण्यभागिनी निरवद्यसर्वावयवा, निवासः सर्वलक्षणानाम् , सिंहलद्वीपभूमिरिव रत्ननिवहस्य, पात्रमकृत्रिमस्य विनयादिगुणगणस्य पार्श्ववर्तिनी भवतः । किं चाभिधानमस्याः । किंनिमित्तं च कोटरोदरनिमग्नदावाग्निमुर्मुर इव महाद्रुमः, मूललग्नकीट इव पङ्कजाकरः, देहनष्टराहुदंष्ट्राशकल इव निशाकरः, सान्तस्ताप इव लक्ष्यते भवान् । इयमपि च कल्याणी किमिति म्लानदेहा पाणितलसंक्रान्तकज्जलकलङ्कपिशुनिताश्रुप्रमार्जना सद्योविरतेव रोदनाद्विज्ञायते। कच्चिन्न संपन्नः प्रयत्नसंरक्षितस्यार्थस्य कस्यचिदतर्कितो विनाशः । कच्चिन्न जातः केनापि प्रेमैकनिबन्धनेन बन्धुना सह प्रवासादिकारणसुलभो विप्रलम्भः । कच्चिन्न संभाविता दुर्लभता चिरं हृदि स्थापितस्य कस्यचिन्मनोरथस्य। कथय यदि नातिरहस्यं श्रवणार्हं वास्मद्विधानाम् ।' इति कुतूहलाकृष्टेन पृष्टो महर्षिणा क्षोणीपतिरवोचत्—'भगवन् , सकलदुःखितप्राणिवत्सलानां परमवाङ्मनःकायसंयमवतां सर्वदा परोपकारप्रवणवृत्तीनां भवादृशामपि रहस्यमश्रावणार्हमस्ति । एष विज्ञापयामि—असावस्य सकलस्यापि भारतवर्षस्य चूडालंकारभूता गोत्रराजधानी रघुदिलीपदशरथप्रभृतीनां नराधिपानामयोध्याभिधाना पुरी प्रधानभूता सर्वनगरीणाम् । अहमपीक्ष्वाकुकुलसंभवो भोक्तास्य कियतोऽपि भारतक्षेत्रस्य वर्तमानक्षोणीपालापेक्षया भूयसा विभवेन भूयसा प्रभावेण भूयसा सेनापरिच्छदेन भूयस्या प्रभुशक्त्या भूयस्या च भूपमण्डलावास्या समेतो मेदिनीपतिर्मेघवाहनाख्यः । इयमप्युपजातजन्मा महति मूर्धाभिषिक्तक्षत्रियाम्नाये माननीया समग्रस्यापि मत्परिग्रहस्य सर्वान्तः-

पुरप्रधानभूता मदिरावती नाम प्रेमपात्रं मे कलत्रम्। अनयास्माकमविकला त्रिवर्गसंपत्तिः, अनुद्वेजको राज्यचिन्ताभारः, आकीर्णा महीस्पृहणीया भोगाः, सफलं यौवनम्, अजनितव्रीडः क्रीडारसः, अभिलषणीया विलासाः, प्रीतिदायिनो महोत्सवाः, रमणीयो जीवलोकः, माननीया मन्मथाज्ञापालनीया गृहस्थाश्रमस्थितिः। अस्वस्थताकारणं चावयोर्गुरुजनदेवताभक्त्यनुभावादनुदिनोपचीयमानसकलसंकल्पितार्थयोर्धनविसरकृतार्थीकृतेन येन ज्ञातिसार्थेन सर्वकालमविरहितपार्श्वयोः प्रायेण नाल्पमप्यपरमस्ति मुक्त्वैकमनपत्यतादुःखम्। तच्च दैवादतिशयेनासन्नतां गतम्। तथा हि—अशक्यप्रतीकारेण प्रतिक्षणमनेन जनिततीव्रहृदयव्यथावेगयोरेकशयनवर्तिनोरपि प्रवासगतयोरिवानपेक्षितपरस्परयोरधिकदुःसहैः श्वासदहनोष्मभिरर्धपथदग्धदीपानुसारिविलासवलभीशलभसंङ्घाः प्रलघवोऽपि शतयामा इव प्रयान्ति नौ विभावर्यः। एवं च यत्समादिष्टं तदुदितम्। रुदितनिमित्तमप्यमुष्याः कथयामि—अद्य क्षपाचरमयामे क्षणमात्रलब्धक्षीणनिद्रोऽहमासादितावसरेण यामाङ्करक्षेणेव समुपेत्य सत्वरमपत्यचिन्तासंज्वरेण विहितसांनिध्यो बौद्ध इव सर्वतःशून्यदर्शी संतानसिद्ध्यर्थमात्मनस्तांस्तानुपायानितस्ततोऽन्वेषयन्नुषःकालकृत्यावेदनाय प्रविष्टेन बन्दिना मसृणमुपगीयमानमिदमपरवक्रमश्रृणवम्—

'विपदिव विरता विभावरी नृप निरपायमुपास्स्व देवताः।
उदयति भुवनोदयाय ते कुलमिव मण्डलमुष्णदीधितेः॥'

श्रुत्वा चोपजातहर्षश्चिन्तितवान्—अहो महात्मनानेन मागधपुत्रेण यदृच्छयापि गायतेदमपरवक्रमावेदितः करणीयमूढस्य मे कार्यसिद्ध्य-

१. 'क्षुद्रे' इति स्यात्. २. कोमलम्.

पायः। तदिदमेवाङ्गीकरोमि सारस्वतमस्योपदेशवचनम्, आराधयामि गत्वारण्यमुपनतशरण्यां कामपि प्रख्यातां देवताम्—इत्युत्थाय च यथाक्रियमाणं पौर्वाह्णिकानुष्ठानमनुष्ठायाधिरुह्यान्तःपुरं प्रासादमिमम-स्याश्चित्रशालिकायाः प्राङ्गणवितर्दिकोपविष्टां समाश्लिष्य देवीमिदं सदुःखमवदम्—'देवि, त्वदपत्यसंततिनिमित्तमितो मया गत्वारण्यमा-वरप्रदानाद्देवताराधनं कर्तुमध्यवसितम्। यावच्च सिद्धप्रयोजनोऽहमाग-च्छामि तावत्त्वया शुश्रूषमाणया गुरुजनमिह स्थातव्यम्' इति। निशम्य चेदमश्रुतपूर्वमतिदुःसहं वचनमस्माकमकस्मादेव मूर्च्छितेयम्। उच्छन्न[1]-संज्ञा च तिर्यक्पतन्ती सत्वरेणोपसृत्य धारिता परिजनेन। स्थित्वा च क्षणं समाश्वस्ता निःश्वस्य चातिदीर्घमिदमपारदुःखभारभिद्यमानगलस-रण्या गदितमनया स्वरेण गद्गदेन स्वैरम्—'आर्यपुत्र, संतानकार्यसि-द्धये तव प्रस्थितस्य नाहं प्रतिपन्थिनी। किं पुनरिदं विज्ञापयामि—यथा तव तथा ममाप्याराधनीया देवता। एवं च कस्मात्परित्यज्य मामेक एव व्रजसि वनम्। अथ मन्यसे मदीयाराधनेनैव सिद्धं तवा-राधनमिति कस्यात्र संदेहः। किं त्विदानीं त्वमुज्झितापरान्तःपुरिका-समीहितो मत्कृते व्रतं चरिष्यसीति वचनशतैरपि न प्रत्येमि। न च त्वया विरहिता मुहूर्तमपि स्थातुं शक्नोमि। तदवश्यं मयापि गन्तव्य-मरण्यम्। अवमन्य चेद्गच्छसि मां गच्छ। सिध्यतु तवाभीष्टम्। दृष्टस्त्वमधुनैव।' इत्यभिदधाना ललाटविलुलितविशृङ्खलालकपद्धतिरधो-मुखीभूता भूयोऽप्यनुबध्यमानया च निषिध्यमानया च निःशब्दमव-र्जिताब्दजलधारैरश्रुचारैः समूहै रुदितमनया, न पुनः किंचिदुदितम्। तदियमस्थान एवात्मानुगमनेन कुर्वती मे गमनभङ्गं, भगवतोऽपि युज्यते

1. 'च्छि' इति स्यात्.

वक्तुं यथायुक्तम् ।' इत्युक्तवति पार्थिवे चित्तपरिभावितदीयोपताप एव दत्तोद्वेगो मुनिस्तत्क्षणमेव योगनिद्रामगात् । उन्मुद्रितेक्षणश्चानतिचिरेण सप्रहर्षो नृपमुवाच—'राजन्, भुक्तभूयिष्ठमधुना वर्तते तवापत्यसंततिप्रतिबन्धकमदृष्टम् । अतो मनसि धृतिमाधेहि । मा विधाः स्वल्पमपि विषादम् । मा समुत्पादय चित्तखेदमस्याः सदासुखोचिताया निजप्रणयिन्याः प्रतिकूलाचरणेन । मुञ्चारण्यगमनस्पृहाम् । गृहावस्थित एव कुरु देवताराधनम् । अर्पय समस्तस्यापि वनवासोचितस्य क्लेशस्याङ्गम् । अङ्गीकुरु मुनिव्रतक्रियाम् । किं च [1]ते दूरवर्तिनीभिरपराभिर्दुराराधाभिर्देवताभिः । इमामेव प्रकृतिसौम्यां सततसंनिहितामुपास्स्व सकलक्षितिपालकुलदेवतां राजलक्ष्मीम् । इयं हीक्ष्वाकुकुलभरतभगीरथादिभूपालपराक्रमक्रीता त्वदन्वयनिसर्गपक्षपातिनी त्वया सकलभुवनप्रतीक्ष्येण पूज्येन सुधिना[2] धार्मिकेण निगृहीतेन्द्रियवृत्तिना दृढभक्तिनात्युदाराशयेन प्रमादपरिहारिणा कालोचितज्ञेन प्रक्रमप्रकटितक्षात्रतेजसा विधिवदाराध्यमाना नियमात्प्रसादं गमिष्यति, अभिमतार्थविषयं च वरमचिरेण वितरिष्यति । अमूं च भक्तिप्रवणेन चेतसा गृहाण निर्विकल्पमल्पपुण्यजनदुर्लभां त्रिभुवनख्यातयशसमपराजिताभिधानामशेषविद्याधरेन्द्रपूजितां विद्याम् । कुरु दिवसस्य रात्रेश्च भागत्रयमशून्यं देवतार्चनेनावसाने च तस्य जपं जप्यचरितसमाहितेन चेतसा । भक्तिमज्जनैकचिन्तामणिमिमाम[3]तिहि(?) । महाप्रभावासौ प्रयत्नवता पुरुषविशेषेण सततमाराध्यमाना नास्ति तत्फलं यन्न साधयति । फलाभिमुखीभूता च त्रिलोकीपतेः पुरंदरस्यापि चेतो विधेयीकरोति, किमुतापरासां देवतानाम् । केवलं कर्तव्येषु दृढमप्रमादिना भवितव्यम् । आलोचितव्यं

---

१. कार्यमिति शेषः. २. 'या' इति स्यात्. ३. 'मवेहि' इति स्यात्.

च सम्यक्श्रद्धया प्रस्तावोचितमनुष्ठानम् । प्रज्ञोद्यमावरणिमन्थाविव हविर्भुजः पितरौ कार्यसिद्धेस्तौ हि पुरुषव्यापारानुगृहीतौ नास्ति तद्वस्तु यन्न साधयतः ।' इत्यभिधाय कृतपार्श्वावलोकनो विहितमन्त्रदेवतानुध्यानस्मरणविधेर्विधाय नरपतेरात्मनश्च वपुषि रक्षामन्त्राक्षरमयं कवचमुपकर्णमूलमनुच्चकैरुच्चरिताक्षरपदस्तां विद्यां न्यवेदयत् ॥

राजापि सविनयाबद्धकरसंपुटः श्रद्धावता हृदयेन परमनुगृहीतमात्मानं मन्यमानो विधानतस्तां जग्राह । संज्ञादिष्टपरिजनसंपादितैश्च सामान्यमनुजेश्वरगृहदुर्लभैः पुष्पैः फलैः पत्रैरंशुकै रत्नाभरणैश्च भूरिभिः परमया भक्त्या रोमाञ्चिततनुर्मुनिमर्चयांचकार । विरते च पूजाया राजनि पुनः स्वस्थानोपविष्टे प्रीतहृदयो मुनिः पात्रकृतोपकारतया कृतार्थमात्मानं मन्यमानस्तूष्णीक एव क्षणमात्रं स्थित्वा किंचिद्र्ध्ववलितकंधरो भर्तुः पृष्ठभागे समुपविष्टां विनयनिभृतवपुषं प्रहर्षनिर्भरां मदिरावतीं प्रसादार्द्रया दृष्ट्या सुचिरमवलोक्य सस्मितमवादीत्—'राजपुत्रि, निवर्तितस्तावदरण्यगमनादेष ते प्रणयी जनः । नियोजितश्चातिदुष्करे देवताराधनकर्मणि । मा स्म कुप्यश्चेतसि यदस्माभिरकृत्वा प्रश्नमश्रुत्वा प्रतिवचनमगृहीत्वानुमतिं महाभागायाः कृतास्य चेतसो नियन्त्रणा निवारणा च । विषयोपभोगसुखानामत्र च भवत्कल्याणसंपादनसत्वरा चित्तवृत्तिरेवापराद्ध(ध्य)ति, न बुद्धिः । कल्पश्चायं यतोऽस्य कतिचिद्दिनानि दूरस्थितयैव कल्याणभागिन्या सर्वापि कर्तव्या भर्तृजनोचिता प्रतिपत्तिः । तथा हि—आत्मा निवारणीयो धृत्या न वृत्त्या, स्वभावस्निग्धयोपसर्पणीयो दृष्ट्या न काययष्ट्या, संभाषयितव्यो मनसा न वचसा, प्रेषयितव्याः शरीरवार्तोपलम्भाय सख्यश्चतुरवर्णरेखा नानङ्ग-

१. 'दूर्ध्वव' इति स्यात्.

श्लेषाः, बहु मन्तव्यमवस्थानं विरलपरिजने देवतायतनवने न रतिभवने, श्रावयितव्यः श्रवणहारीणि देवतास्तुतिगीतानि न निजचरणनूपुररणितानि, त्वरयितव्यः सायंतनविधये सुघटितसंधिभिर्मागधीश्लोकैर्न सुरतदूतीलोकैः, कारयितव्यः कण्टकिनि पत्रच्छेदविरचनं देवतार्चनकेतकदले न कपोलतले।' इत्युक्ते महर्षिणा मदिरावती त्रपातरलतारया दृशावलोक्य पत्युर्मुखमधोमुखी बभूव ॥

तां च तथावस्थितां निर्वचनामधःस्रस्ताभिरलकवल्लरीभिर्विलक्षस्मितमिवाच्छादयितुमाच्छादितकपोलदर्पणां करनखशुक्तिभिरलग्नमपि विलेपनार्द्रं चरणोर्मिकारत्नशकलेषु पुनः पुनरुल्लिखन्तीमवनतग्रीवतया सम्यगविभाव्यमानामपि तत्कालकन्दलितापूर्वशोभाकमनीयस्य मुखचन्द्रस्य चारुतां रत्नकुट्टिमावलम्बिना प्रतिबिम्बेन पिशुनयन्तीं पुनः पुनरवलोक्य कृतस्मितो नरपतिर्मुनिमाबभाषे—'भगवन्, किमिति वारंवारमेनां नियमयसि । नन्वेकवचसैव सर्वमवधारितमनया, प्रतिपन्नं च मनसा । करिष्यति चाद्यप्रभृति सर्वं भगवदादिष्टम् । अतिदक्षिणा ह्यसौ प्रायेणापरस्यापि मान्यजनस्य न करोति वाक्यमन्यथा, किं पुनरशेषभुवनवन्दितशासनस्य महातपोनिधेः । करिष्यति केवलं विहाय त्रपामवलम्ब्य धैर्यमुन्मुच्य स्त्रीस्वभावसुलभमप्रागल्भ्यम् । अस्या अपि बुध्यते स्वयं वास्वन्मुखेन वा सखीवचनद्वारेण वा विवक्षितं वक्तुम्, अभ्युपगमावेदनेन च भगवतः प्रमोदं जनयितुम्, आत्मनो निर्वहणानिर्वहणे च चिन्तयितुम् । अथ वा न किंचिदुपदिष्टेनानेन । संप्रति प्रस्थिता वनमियम् । गतायां च तत्रास्यामिह स्थितस्य मे निःप्रत्यूहमुपजातं देवताराधनम् ।' इत्यभिदधानं च पार्थिवमधिकतरमवनताननारचितभङ्गुरभ्रुकुटिभूषणेन साभ्यसूयेव चक्षुषा तिर्यगैक्षत ॥

मुनिरपि मनागुपजातहासः—'राजन्, अतिमात्रमुत्सुकस्त्वमिदानीमेव वनमिमां नेतुमिच्छसि । विधेहि तावन्मन्त्रजपविधिमाराधितप्रसन्नया राजलक्ष्म्या वितीर्णम् । आप्नोतु पुत्रवरमियम् । आसादयतु तत्प्रभावेण भुवनत्रयख्यातमहसमात्मजम् । पश्यतु तदीयमानन्दितसकलसंसारं कुमारभावम् । अनुभवतु तद्वधूजनोपजनितानि चरणपरिचर्यासुखानि । ततो धृताधिज्यधनुषि भुवनभारधारणक्षमे तत्र निक्षिप्य निजराज्यसंपदं समर्प्य प्रजाः प्रस्थितेन स्वस्थमनसा त्वयैव सहिता गमिष्यति पश्चिमे वयसि वनम् । अस्माकमप्येतदर्थ एवायमारम्भः । अन्यथा गृहस्थकार्येषु कर्तव्येषु सर्वारम्भनिवृत्तानां को यतीनामधिकारः ।' इत्युक्त्वा पुनरवादीत्—'नरेन्द्र, पुष्करद्वीपादागतेन मयापि जम्बुद्वीपवर्तिषु प्रधानतीर्थेषु संप्रति प्रयातव्यम् । अनुजानीहि माम् ।' इत्यभिधाय संवृतवल्कलांशुको जपञ्शनैराकाशगमनदायिनीं विद्यामासनादुत्तस्थौ ॥

अनूत्थितयोश्च तयोरादरकृतप्रणामयोः क्रमेण निक्षिप्य पक्षपातार्द्रतारकं चक्षुरीषदुत्क्षिप्तदक्षिणकरः स्फुटाक्षरोच्चारया गिरा दत्त्वाशिषमन्तरिक्षमुदपतत् । अन्तरितदर्शने च तस्मिन्रणरणकदूयमानः शून्य इव पार्थिवः स्थित्वा मुहूर्तं हर्म्यशिखरादवततार । निवर्तितमाध्याह्निकविधिश्च तत्कालकृतसंनिधीनां गुरूणां वायवानां बुद्धिसचिवानां च यथावृत्तं सर्वमेव मुनिवृत्तान्तमाख्यत्, देवताराधनविषये चापृच्छत् । उच्छिद्यमानभरतवंशदर्शननित्योद्विग्नैश्च तैरालोच्य कार्यगौरवमभ्यनुज्ञातः प्रमदवनमध्य एव संनिधावाक्रीडपर्वतस्य नातिखर्वं नातिविस्तीर्णमल्पस्तम्भपरिकरमप्रांशुप्राकारकृतपरिक्षेपमनुपलक्षितान्योन्यसंधिभागै-

१. 'बान्धवानां' इति भवेत्.

राम्भोगशालिभिः प्रकाममसृणैर्मणिशिलातलैरवनद्धवद्धविस्तीर्णाङ्गणमतिमनोहरतया सुरलोकवासिनामप्युत्पादितनिवासस्पृहं देवतागृहमकारयत् ॥

तत्र चातिप्रशस्तेऽहनि यथायोग्यमर्चितसमस्तपूज्यवर्गः परिपूर्णसर्वावयवां सर्वप्रतिमालक्षणोपेतां सर्वालंकारभूषितवपुर्लतां सर्वलोकलोचनानन्दजननीं सर्वदोषनिर्मुक्तामत्युदारमुक्ताशैलदारुसंभवां भगवत्याः श्रियः प्रतिकृतिं यथाविधि प्रतिष्ठाप्य प्रतिपन्ननैष्ठिकोचितक्रियो मुनिप्रदर्शितेन क्रमेण प्रतिदिनमुपासांचक्रे ॥

तथा हि—प्रातरेवोत्थाय प्रस्थितः प्रथमतरमुत्थितैरितस्ततो निपतितावश्यायजलदलितकेसराणि प्रत्यग्रविकसितानामुद्यानवीरुधां कुसुमान्यवचिन्वानैः प्रयत्नवद्भिः परिचारकैरनुगम्यमानः, गत्वा कृत्रिमाद्रिपरिसरसरिति गृहीतदन्तधावनो निवर्तितस्नानजपविधिः, परिधाय तत्कालधौते कलधौते इवातिधवलतया विभाव्यमाने दुकूलवाससी, विधाय संध्योपासनकृत्यम्, आगत्यायतनमुत्तमाङ्गघटितग्रन्थिनोत्तरीयपल्लवेन मुद्रितमुखो मुखोद्गीर्णमुखरवारिस्रोतोभि(र्यैः) कनककुम्भैः सुचिरमेनामभ्यषिञ्चत् । एणनाभिकर्पूरकणसंतर्पितामोदेन च स्पर्शेन्द्रियहारिणा चन्दनद्रवेण विरचिताङ्गरागामङ्गलेखारोपितरुचिरमौक्तिकाभरणामुदारमालतीदामग्रथितशेखरां श्रवणशिखरावतंसितैककेतकगर्भपत्रामवदातवेषतया साक्षादमृतमथनोद्गतामिवोपलक्ष्यमाणां निरीक्ष्य सादरमुत्क्षिप्तकृष्णागुरुक्षोदधूपः प्रणम्य परमया भक्त्या पुरस्तान्नातिदूरे समुपविष्टो मुखनिविष्टनिश्चलदृष्टिरानर्तितशिखण्डिना दत्तमार्जनमृदङ्गस्तनितगम्भीरेण स्वरेण संगीतकमिव प्रस्तावयन्पुष्टार्थाभिः स्तुतिभिरतिचिरं तुष्टाव । समापितमन्त्रजपविधिश्चातिक्रान्ते कियत्यपि

समये विनिर्गत्य देवतागृहाद्दर्शनार्थमागतमुचितस्थानस्थितं गत्वा गुरुजनं ववन्दे । विहितमध्यंदिनावश्यकविधिश्चापराह्णसमयानुज्ञातदर्शनेन सर्वदर्शनग्रन्थार्थवेदिना विद्वज्जनेन सार्धं तैस्तैः कथालापैस्तस्थौ । उपस्थिते च प्रदोषसमये तेनैव विधिना श्रियः पूजोपचारं चक्रे । अन्यदिवसेष्वप्येतदेवान्वतिष्ठत् । देवकृत्यशून्ये च क्षणे समुपजातचित्तोत्कलिकः कदाचिदारुह्य क्रीडाशैलशिखरं समन्ततो दन्तदृष्टिरुद्यानवापीवनखण्डसरित्तडागदेवतायतनमण्डितान्साकेतपुरपरिसरोद्देशान्ददर्श । कदाचिच्च परिमितपरिचारकानुगम्यमानः प्रमदवनमध्ये मन्दं मन्दं विजहार ॥

एवं च तस्योपरतराज्यचिन्ताभारस्य विरचिताभ्यर्णपर्णशालाकृतस्थितेस्त्रिकालस्नायिनः परिमितफलाहारपरिपालितशरीरस्य कुशतल्पशायिनो मुनिसमुपदिष्टेन विधिना व्रतमपत्यसंततिनिबन्धनमनतिचारं पालयतो गृहीतब्रह्मचर्यस्य दिवसाः कतिचिदतिजग्मुः । एकदा तु विहितमन्त्रदेवतापूर्वसेवः स राजा पर्वदिवसे विशेषेण निर्वर्त्य देव्याः श्रियः सायंतनीमायतनपूजामनुपलक्षितः परिचारकगणेन नगरबाह्यारामण्डनमादितीर्थतया पृथिव्यां प्रथितमतितुङ्गशिखरतोरणप्राकारं शक्रावतारं नाम सिद्धायतनमगमत् । प्रविशन्नेव च तस्य द्वारदेशे झगिति द[1]त्तदर्शनम्, अखिलविष्टपत्रयाधिपतिना ज्वलितज्वलनच्छटाजटालकुलिशकोटिकुट्टितकुलाचलेन भुजबलविनिर्जितबलप्रमुखदर्पितासुरचक्रेण भगवता स्वयं शक्रेण साकेतपुरनिवेशकाल एव कृतप्रतिष्ठस्य भगवतो युगादिजिनस्य कृत्वा प्रणाममभिमुखमापतन्तम्; अल्पावशेषदेवायुषमासन्नसमुपस्थितविनाशतया समुपजातद्वादशारुणोदयमिव

---

१. वैमानिकमपश्यदिति शेषः.

भ्रमस्तम्भमस्तशिखरपर्यस्तसूर्यमिव दिवसमुपरिसंनद्धसजलमेघदुर्दिनमिव ग्रीष्मदावानलमिन्दुमण्डलाभिमुखीभूतसैंहिकेयमिव पार्वणचन्द्रिकापटलमुल्लिखितसातकुम्भस्तम्भावदातदेहम्, उचितप्रमाणशालिनामतिभास्वरतया तडिद्दण्डैरिव निर्मितानां पुष्परागपरमाणुमृत्तिकाभिरिव दत्तोपचयानामातपेनेव कल्पितत्वचामङ्गानामनलस्फुलिङ्गपिङ्गलेन गलता समन्ततः प्रभाजालेन ज्वलदनेकदीपिकाचक्रवालमिव मण्डपान्तरालं कुर्वाणम्, अन्तरिक्षगतमप्यतिबहलतया चरणतलप्रभायाः स्पृष्टभूतलमिवोपलक्ष्यमाणम्, अकठोरविद्रुमकंदलीसरलाभिरम्भोजदलभ्रमाभ्रमेण पतद्भ्रमरसंभ्रमादिवान्योन्यलग्नाभिरग्रतः स्फुरदुन्मयूखनखलेखाभिरन्वकार(?)दुरुपलक्ष्याध्वपरिस्खलनशङ्कया पुरस्कृतशशिकलाभिरिवाङ्गुलीभिरुपेतेन गत्युत्कम्पगलितवैकक्षकस्रग्दामरेणुनिश्चलनिलीनैरलिभिः पुनरागमनप्रार्थनापुरःसरमानतायास्त्रिदशलोकश्रियो वियोगाश्रुभिरिव सकज्जलैः कल्माषितेन कल्पतरुपल्लवचारुणा चरणद्वयेन द्योतमानम्, अग्रतोऽग्रतः श्लक्ष्णपरिमण्डलजङ्घाकाण्डैनैरावतकरमिवान्तिके विधाय वेधसा निर्मितेन मूले मूलस्थलेन भ्राजमानम्, ऊरुस्तम्भयुगलेन निवसितातिसूक्ष्मदेवाङ्गवसनम्, आनीलपाटलेन पद्मरागेन्द्रनीलखण्डखचितस्य मेखलादाम्नः प्रेङ्खताधोमुखेन मयूखमालामण्डलेन समन्तादाच्छादितनितम्बभागम्, अभिनवकल्पपादपप्रवालविरचितपरिधानम्, साक्षाद्धृतकिरातवेषमिव विषमलोचनम्, उन्निद्रकाञ्चनारविन्दचारुणा विमलकान्तिसलिलपरिपूरितेन मानसेनेव मज्जनक्रीडापरम्परोपजातपरिचयागतेनावर्तिना नाभिमण्डलेनालंकृतप्रतनुमध्यभागम्, प्रियापयोधरपरिरम्भशंसिभिः पृथुलपरिमण्डलैर्दिव्यचन्दनरसस्तप(ब)कैः स्वर्गच्यवनकालसुलभो हृदयदवथुरितरसुरमिवैनमपि मा पीडयेदिति बुद्ध्या समागतैरखिलपौ-

र्णिमासीशशिमण्डलैरिवाधिष्ठितवक्षस्थलाभोगम्, अतिबहलकेयूरपद्मरागप्रभाभारभरितोदरेण गम्भीरेणापि मांसपरिपूरितेनेव चिरप्ररूढेनाप्यार्द्रेणेव महासुरशस्त्रप्रहारनिवहेन स्थपुटितस्थूलबाहुशिखरम्, वामेन सविलासभुजगतागतद्राधितया तत्क्षणोदितेन्दुलेखाकारया नखमणिप्रभया विराजितेन दक्षिणेन चादिदेवप्रणामसमयस्रस्तस्य कुसुमापीडस्य निबिडनाय तिर्यगुन्नमितेन पाणिना बन्धुजीवकचापधारिणः प्रारब्धपृषत्कतूणीरशराकर्षणस्य कुसुमधनुषः स्थानकमङ्गीकुर्वाणम्, आमुक्तमेघमुक्तस्फारमुक्ताफलहारम्, अभिनवजपाकुसुमकान्तिहारिणो हारनायकमणेरुन्मुखीभिर्मयूखलेखाभिस्तत्कालसंगलितम्, अपरागमपनेतुमारोपिताभिः शिखिशिखावलीभिरिव कपिशिरोप्रशौचसिचयोत्तरासंगमन्तकालनिद्रोदयादीषन्निमिषितस्य दूरविस्तारिणो नयनयुगलस्योन्मेषलीलासु विसर्पता क्षीरधवलेन प्रभाप्रवाहेण मथनारम्भरभसपीतमेकहेलया सकलमिव क्षीरसागरमुद्गिरन्तम्, आयत्तरक्तनालेन सततविकासिना नाकमन्दाकिनीनीलोत्पलेन सहस्रलोचनात्प्रसादलब्धेनैकलोचनेनेव चुम्बितैकश्रवणपार्श्वम्, उल्लसिताधरप्रभासान्द्रविद्रुमवनमुद्भूतधवलदीर्घलोचनतरङ्गमुत्सङ्गितकपोलमुक्ताशुक्तिकान्तमाक्रान्तोज्ज्वलललाटतटमाविष्कृतलताशैवलवल्लरीकमापीतामृतदर्शनदुराशया क्षीरोदसलिलमिव सकलमावासितमुपहसितशरच्चन्द्रिकाप्रकाशमास्यलावण्यमुद्वहन्तम्, आपीडमधुकरप्रतिबिम्बकर्बुरितोदरेण बहलरागवर्षिणा चूडारत्नेन भाविसुरलक्ष्मीविनाशसूचनाय कृतसांनिध्येनोत्पातसूर्यमण्डलेनेव सकीलेन कलितोत्तमाङ्गम्, अमरकाननप्रभवघनसारसंस्कारातिशयसुरभिणा सुरकरिकपोलमदमिश्रेण गोशीर्षचन्दनेन कृतमसृणसर्वाङ्गीणाङ्गरागमनिलकृतसूक्ष्मान्तरालप्रविष्टम्, पटुविलेपनामोदमुषितनिद्रैर्निर्दयचरणप्रणोददलितदलपुटैरपहायापहाय कमलगर्भशयनानि धावद्भिरुद्यानदीर्घिकाम-

धुकरकुलैः समन्ततस्तिमिरशिविरैरिव शरीरप्रभारोपितैः कृततुमुलकोलाहलम्, अम्बरागमनसमीरणशोषितसुधाशीकरसेकेन मर्त्यलोकषट्चरणहठचुम्बनशङ्कयेव निबिडसंकोचितमुखीभिर्मन्दारकलिकाभिरन्तरान्तरा दन्तुरितेन किंचिदारूढम्लानिना पारिजातकुसुमशेखरेण विराजमानम्, अनेकसुरपादपप्रसूनपरिमलमुचः श्वासपवनानतिदीर्घकालमाघ्रातानाखण्डलक्रीडावनमारुतानिव जवागमनखेदादनवरतमुद्वमन्तमेकं वैमानिकमपश्यत्। आलोकनमात्रेणैव तं प्रत्युपजातदिव्यतानिश्चयस्य चक्षुर्निमेषादिलिङ्गदर्शनोन्नीतस्वर्गच्यवनसमयस्य रूपसंपन्निरूपणादात्मनिश्लथीभूतचारुताभिमानग्रन्थेः पार्थिवस्याभून्मनसि, 'अहो प्रभावः सुरलोकभूमीनाम्, यत्र खलु संभूतानि पुण्यभागिनां शरीराण्यप्येवंविधानि भवन्ति यानि चरमास्वपि दशासु तावदास्तामुपसर्पितुं द्रष्टुमप्यनलमनलमिव वैद्यान्तं पुमांसः। तथा हि—अस्य वपुषि प्रकामसौम्येऽपि स कोऽपि स्वभावभास्वरः स्फुरति प्रतापो यस्मिन्नसौ प्रकृतिप्रगल्भापि भीतेव लज्जितेवोत्कुपितेव मे न चिरमाबध्नाति लक्ष (क्ष्य) मीक्षणद्वयी। चित्रं यदस्यात्र शकलितमनःशिलागर्भबभ्रुण्यतनुबले तनुप्रभाजाले निरन्तरनिमग्नाः स्वतेजस्तिरस्कारलज्जिता इव मनागपि दर्शयन्ति नात्मानमायतनप्रदीपाः। इमेऽपि सर्वतः प्रधाविताः प्रणष्टदीपान्वेषणायेव भ्रमन्ति दहनालोकलोलुभाः शलभसंघाः। सर्वथा कृतार्थोऽहम्, यस्य मे मर्त्यभावेऽपि प्रकटितदिव्यवपुषा दर्शनमनेन दत्तम्।' इति विचिन्त्यमुक्त्वा च सफलकं प्रभुताभिमानेन सार्धं कृपाणमाबद्धाञ्जलिः स्तोकमुपेत्य स्वागतमकरोत्॥

सोऽपि तथा समुपसृत्य तं पुरस्तादवस्थितमतिस्तिमितप्रगल्भस्निग्धदृष्टिप्रकटितान्तःप्रीतिमाबद्धकरसंपुटमतिशयस्पृहणीयदेहावयव-

दर्शनानन्दनिःस्यन्दविकसितेन पुनरपि प्राकृतीं प्रकृतिमापन्नेनेव चक्षुषा सुचिरमुपजातप्रत्यभिज्ञानलव इव सत्वरोपसंहृतगतिराचरणयुगकादुत्तमाङ्गं यावदालोकितवान् । आनीतकरसंपुटश्च हेमाद्रितट इव पृथुश्रीवत्सलाञ्छिते वक्षसि स्तोकमुपदर्शितस्मितः प्रस्तुतपरीहास इव सलिलनिर्भराम्भोधरनिनादगम्भीरेण स्वरेण मधुरमब्रवीत्—'नरेन्द्र, सर्वदा शरीरसंनिहितैः प्रधानपुरुषैरिव प्रस्तावावेदिभिरपृष्टैरपि निवेदितोऽसि चक्रवर्तिलक्षणैः स खलु भवान्मध्यमलोकपालो राजा मेघवाहनः, योऽस्माभिः पुरा देवासुरसमूहसंबाधे दिव्यसदसि विष्टपत्रयपतेः पुरो देवस्य पाकशासनस्य मर्त्यलोकवार्तानिवेदनाधिकारनियुक्तैः प्रधाननाकिभिरेवं जिगीषुः, एवं शूरः एवं त्यागशीलः, एवं धार्मिक इति बहुप्रकारमहु (स्फु)रितपुलकपक्ष्मलकपोलैरवनिपालकथाप्रक्रमे सुचिरमुपवर्ण्यमानः श्रुतोऽसि । सर्वथा नः कृतार्थं चक्षुरुपजातम् । फलितं च सद्यो देवतादर्शनसमुत्थं पुण्यजातमतर्कितोपनतेनामुना त्वदवलोकनेन । गच्छामि सांप्रतम् । अनुजानीहि माम् । जानीहि च मदीयमपि लेशतो वृत्तान्तम् । अहं हि सौधर्मसुरलोकसद्मा ज्वलनप्रभाभिधानो वैमानिकः संप्रत्येव नाकतः प्रस्थितो गच्छन्पुरस्थितेन कियतापि परिजनेनानुगम्यमानो गगनपथेन पथि विलोक्य लोकान्तरं देवतायतनमिदमिदं मनस्यकरवम्—'हन्त, य एष भगवानशेषजगन्नाभिकुलकरकुलालंकारः कारणं सकललोकव्यवहारसृष्टेः, द्रष्टा कालत्रितयवर्तिनां भावानाम्, उपदेष्टा चिरप्रनष्टस्य धर्मतत्त्वस्य, सर्वसत्त्वनिर्निमित्तबन्धुः, सेतुबन्धः संसारसिन्धोः, आद्यो धर्मचक्रवर्तिनाम्, आराध्यश्चतुर्विधस्यापि सुरनिकायस्य, नायकः समग्राणां गणधरकेवलिप्रमुखाणां महर्षीणामृषभनामा जिनवृषः, तस्य

पुरा स्वामिना शक्रेण स्वयमनुष्ठितः प्रतिष्ठाविधिः ।' अवधार्य चेत्तदधिकोपजातभक्तिः 'आसतामिहैव मुहूर्तमेकं भवन्तः' इति निवर्त्य पृष्ठानुपातिनः सुरपदातीनतिमात्रमुत्सुको गन्तुमङ्गमात्र एवागतः । दृष्टश्चैषभगवानशेषकल्मषक्षयहेतुरादिदेवः । इदानीं गन्ताहमधिगतनिर्वृतिर्विलक्षणं रामणीयकेन सकलद्वीपानामपारजलपूरितान्तरिक्षेण सर्वतः कृतपरिक्षेपं नन्दीश्वरोदनाम्ना नदीनाथेन नन्दीश्वराभिधानं प्रधानद्वीपम् ॥

तत्र मे परममित्रमेकान्ततः स्नेहमयो मयैव सदृशप्रभावर्धिरतिशयेन प्रसादपात्रं वृत्रशत्रोरत्युदाररूपबलविभवशाली सुमाली नाम देवो देवलोकतः कौतुकाकृष्टमनसा स्वयं प्रभाभिधानया देव्या दिव्यवनिताजनादुपश्रुतरम्यतातिशयां जिनायतनविंशतेः श्रियं द्रष्टुमानीतः, सांप्रतमतिशयितनन्दनद्रुमवनेषु दधिमुखाभिधानमहाधराधरेन्द्रषोडशकपरिक्षेपणीनां जम्बूद्वीपप्रमाणपरिमण्डलाकृतीनां पुण्ड्रेक्षुरसशिशिरसुरभिस्वच्छस्वादुसलिलकल्लोलास्फालितविशालमणिशिलासोपानपङ्क्तित्रितयरमणीयानां महापुष्करिणीनामुपान्तवर्तिषु विचित्रतरुकाननेषु कान्तासखः क्रीडासुखमनुभवति ॥

अस्ति च द्वीपे तत्र दीपभूता मर्त्यलोकस्य मणिमयमहाप्रासादशतशालिनी विततकाञ्चनशिलाशालवलया जिनायतनयात्रासु त्रिदशलोकादुपागतानाममरमिथुनानां निवासस्थानमपरेवामरावती परमरम्या रतिविशाला नाम तस्य नगरी । सा चाद्य प्रातरेव कौतुकादितस्ततो विचरद्भिरनुचरैर्मदीयैस्तदीयसंनिधावप्यनाथेवोद्धसितेव प्रणष्टसकलपूर्वशोभा, भूतैरिवाधिष्ठिता, कृतान्तदूतैरिव कटाक्षिता, कलिकालेनेव कवलिता, समग्रपापग्रहपीडाभिरिव क्रोडीकृता, सर्वतो विजृम्भिताvi-

च्छिन्नमलिनच्छाया, चिन्ताविसंस्थुलगृहस्थगीर्वाणपरिहृतसर्वनिजनिजव्यापारा, गलितगर्वगन्धर्वशिथिलितगीतगोष्ठीस्वरविचारा, विषण्णसाध्यपरिषदा, विखिन्नसिद्धनिषिध्यमानगानोन्मुखमुखरकिंनरकुला, पानकेलिनिरपेक्षयक्षशून्यीकृतोपवनतरुखण्डलतामण्डपा, नष्टहर्षकिंपुरुषनिर्भर्त्स्यमानपरिरम्भणायातवल्लभतरुणीगणा, रणरणकगृहीतगृहदेवतावनदेवतासदुःखदृश्यमानतत्क्षणम्लानकल्पपादपा, संतापविधुरविषधरवधूसततप्रार्थ्यमानचन्दनलतागृहावस्थाना, स्थानस्थानपूज्यमानखिन्नसिद्धायतनदेवताप्रतिमा, प्रतिमन्दिरमाकर्ण्यमानश्रवणदुष्टहाकष्टशब्दा दृष्टा । मन्दिरमपि तदीयमप्रवृत्तोत्सवं धृतानुचितवेषनिर्व्यापारनिःशेषकलत्रं चित्रशालास्वसंपाद्यमानहरिचन्दनपङ्कोपलेपनं मणिकुट्टिमेष्वक्रियमाणकनकपङ्कजोपहारक्षेपं द्वारतोरणरणरणायमानचण्डपवनेरितशुष्ककतिपयप्रवालवन्दनमालं मृदङ्गपटहादिवाद्यध्वनिशून्यनिःशेषनाट्यशालम् अश्रूयमाणचारणमिथुनमङ्गलोच्चारम् अनाकर्ण्यमानकिंनरकन्यकावल्लकीझाङ्कारम् अप्रमत्तविबुधयोधशतसंरक्ष्यमाणगोपुरप्राकारम् असुरापहारभीतभव्याप्सरःपरिहृतस्वेच्छाविहारम् उद्यानवापीष्वनारभ्यमाणविभ्रममज्जनम् उद्विग्नसकलपरिजनं दृष्टम् । इदं चारिष्टमतिकष्टमप्रतिविधेयं विधिवशात्तत्रोपजातं तस्य तत्कलत्रस्य वा प्रधानस्य अचिरकालभाविनं विनाशमवश्यतया निवेदयति । न हि येषुकेषुचिदनर्थोपनिपातेषु कदाचिदपि दिव्यानामास्पदेषु संपद्य नू(?) ईदृशाः पदार्थानां प्रकृतिविपर्ययास्तत्संनिवासिनां च विबुधलोकानामन्तरत्यन्तशोकातङ्कशंसिनो हृदयायासाः । तेन च मया तत्र गत्वा द्रष्टव्योऽसौ कदाचिदप्यदृष्टदीर्घमद्विरहदुःखसखा सुखयितव्यः सर्वकालमभिलषितमद्दर्शनो निजदर्शनेन । शमयितव्या दिव्यलोकच्यवनसुलभा सर्वभावानां

विनश्वरस्वभावतावेदनेन हृदयेऽस्य दाहकारिण्यरतिवेदना। देयो दिव्यशक्त्यनुरोधेन सुगतिसाधनेषु धर्मकार्येषु सविशेषमुपदेशः। ततस्तेन सह पूर्वानुभूतसुखदुःखवृत्तान्तकथाव्यतिकरेण नीत्वा विभावरीमेतां विभातकाले कथमपि प्रार्थितपुनर्दर्शनेन पुनरपि प्रतीर्य निवर्तितव्यम्। कर्तव्यं च किमपि कालोचितमकृतकालक्षेपेण ख्यातेः सुखस्य चामुष्मिकस्य साधकं कुशलानुष्ठानम्। यतो ममापि निष्ठितप्रायमायुः। अल्पावशेषा त्रिदशलोकस्थितिः। उपस्थितो दीर्घकालप्ररूढगाढप्रणयैर्नाकिभिः साकमात्यन्तिको विरहः। समासन्नीभूतमुर्वशीप्रमुखसुरवधूमुखारविन्दादर्शनम्। अदृश्यतां गतास्त्रिदशपतिसदसि हृदयदस्यवो रंभालास्यकरणप्रयोगाः। विप्रयोगोन्मुखं तुम्बुरुमुखेन श्रवणरन्ध्रमधुरगान्धारग्राममूर्छनाश्रवणम्। उच्छन्नकल्पा कल्पतरुलताछन्नेषु नाकमन्दाकिनीकच्छेषु स्वेच्छाविहारक्रीडा। क्रोडीकृतं मनुष्यलोकावतारस्मरणपीडया निबिडमन्तःकरणम्। आकारितदुःखसंहतिरभिमुखीभूता सपरिजनेव गर्भवास एव नरकगतिः। ईदृशे च सर्वतः समुपस्थितातिदुर्वारव्यसनजाते सर्वतोमुखप्रसृतदुर्विषहशोकसंततौ संतापकारिणि कातराणां वैक्लव्यदायिनि क्लीबानामुपजनितसंसारसुखवैमुख्ये विवेकिनमुदीरितपरोपकारबुद्धावुदारचेतसामतिदारुणदशापाके कथंचिदुपजातसंगमस्य सुरपतिप्रशंसाश्रवणदिवसादारभ्य प्रतिदिवसमभिलषितदर्शनप्राप्तेराकारदर्शनेनैव प्रशमितसकलहृदयोद्वेगतमसो महात्मनः न च सर्वात्मना प्रियं कर्तुमन्तःकरणमुत्सहते मदीयम्। मन्दायते च त्रिभुवनातिशायिसत्त्वमलङ्घ्यतां च तावकीं प्रागुपश्रुतां विचिन्त्य प्रत्याख्यानलाघवमुत्प्रेक्षमाणम्। अतो न शक्नोमि सर्वथैवोपचारक्रियापराङ्मुखो भवितुम्, नापि यथाभिमतवस्तुप्रार्थना-

विषयेणाभ्यर्थनेन कदर्थयितुम् । केवलमवलम्ब्य मध्यम पन्थान-मुपरचयामि तेऽञ्जलिम् । अनुगृहाणेमां मनःपरितोषाय मे नृपचन्द्र, चन्द्रातपाभिधानं प्रधानमखिलानामपि स्वर्गभूषणानामासत्तिमात्रेणापि कृतसकलदुरितापहारं हारम् । एष किल पीयूषदानकृतार्थीकृतसकलार्थिसुरसार्थेन मथनविरतावधिना क्षीरोदेन प्रयत्नरक्षितात्प्रधानरत्नकोशादमृतसंभवशुक्तिगर्भप्रभवाण्यतिप्रभावन्ति परिणतामलकीफलस्थूलनिस्तलानि मुक्ताफलान्यादाय कौतुकेन स्वयं ग्रथितः । कृतश्च स्वयंवरोत्सवानन्तरमसुरारिमन्दिरमाश्रयन्त्याः श्रियो मन्युगद्गदकण्ठेन कण्ठकाण्डमण्डनम् । देव्यापि कमलया कामकेलिक्लान्तिहारी हरेरिति धृतो धृतिमत्या महान्तं कालम् । उपनीतश्च जन्मनि कुमारजयन्तस्य ज्येष्ठजायेति जातपुलकया पुलोमदुहितुः । तयापि परिरम्भविभ्रमेषु निबिडपीडिताखण्डलोरसः सुरगजकुम्भपीठपृथुनो निजस्तनमण्डनस्य कृत्वातिदीर्घकालं मण्डनमर्पितः सखीप्रेमहृतहृदयया मत्प्रियायाः प्रियङ्गुसुन्दर्याः कण्ठदेशे । तयाप्यतिशयितशीतरश्मिरोचिषमस्य शुचितागुणं शचीप्रसादं च बहुमन्यमानयामुक्त्वान्यानि कंधराभरणानि धारितः सुचिरम् । अद्य तु क्वापि धर्म्ये कर्मणि नियुज्य तामागच्छता मया विरहविनोदार्थमारोप्य कण्ठे सुहृद्दर्शनोत्कण्ठितेनानीतः । तदेष संप्रति स्वभावधवलरुचिः कालच्छायाकवलितमरुच्येव मोक्तुकामो मामवाप्य कथमपि पुण्यपरिणत्या प्राज्ञया संयोजितं त्वां मुक्तामयवपुषमशेषतो मुक्त्वामयं त्रासविरहितमपेतत्रासः स्वच्छाशयमतिस्वच्छो गुणवन्तमतिशयोज्ज्वलगुणः प्राप्नोतु सदृशवस्तुसंयोगजां प्रीतिम् । अस्य हि परित्यक्तसुरलोकवासस्य दूरीभूतदुग्धसागरोदरस्थितेस्त्वदुरस्तिरेव स्थानम् । न हि त्र्यम्बकजटाकलापमन्तरिक्षं वा विहाय

क्षीणोऽपि हरिणलक्ष्मा क्षितौ पदं बध्नाति मयाप्यनन्ययोग्योपभोगां भव्यतामस्य भावयता दिव्यदर्शनममोघमिति घोषणां जनस्य किंचिच्च-रितार्थां चिकीर्षता क्षणमात्रपरिचितमात्मानमीषदनुस्मरणविषयतां नेतुमभिलषता प्रीतिप्रगुणितस्य चात्मनस्तरलतां तिरोधातुमक्षमेणाय-मुपनीयते, न पुनरुपकाराय प्रीतये वा। सर्वस्वदानेनापि देहिनामुप-कुर्वतः परेण प्रार्थितां पृथिवीमपि तृणगणनया परित्यजतः किं तद्वस्तु यत्प्रदानेन प्रीतिरुपकारो वा भविष्यति भवतः। सर्वथा दत्तोऽयं मया। विपत्प्रतीकारासमर्थः क्षीणायुषोऽस्य भिषगिव कथमृच्छमाहरामि। अलंकारः क्षत्रियकुलस्य याचकद्विज इव कथं प्रतिग्रहमङ्गीकरोमि गृहाभ्यागतेनामुना दीयमानं दुर्गतं गृहस्थ इव गृह्णन्नपरं लघिमानमासादयिष्यामि। सुरैरपि कृतस्तुतिराभरणखण्डस्य कृते करं प्रसारयन्नस्यैव वैमानिकस्योपहास्यतां यास्यामि—इत्यनेकवि-कल्पविप्रलब्धे मनसा त्वया मनस्विनां वरेण त्रिदशनाथेऽपि भगवति कदाचिदकृतप्रणयभङ्गस्य मे न कार्यः प्रथमप्रार्थनाभङ्गः। गृहीतव्यो निर्विचारेण। यस्मादुपरोधभीरुत्वादगृह्यमाणोऽपि भवता दूरीभूत एवैष मे स्वर्गच्युतस्य। गृहीतस्तु कदाचिन्मनुष्यलोके लब्धजन्मनः पुनरानन्दयति दृष्टिमिष्टतमदर्शनं चैनम्। अमरलोकाच्च्युता काल-क्रमेण देव्यपि मे प्रियङ्गुसुन्दरी कदाचिदालोकयति। दर्शनाभ्यास-जातपूर्वजातिस्मृतिश्च स्मरति रतिकराण्यसक्तं मया सहोपभुक्तानि स्वर्गवासक्रीडासुखानि। विरहदुःखदत्तोद्वेगाच्च प्रवर्तते यथाशक्ति कुश-लावाप्तिसाधके कर्मणि। एवं च तस्या अप्युपकृतं भवति। संभवन्ति च भवार्णवे विविधकर्मवशवर्तिनां जन्तूनामनेकशो जन्मान्तरजातसंबन्धै-र्बन्धुभिः सुहृद्भिरर्थैश्च नानाविधैः सार्धमबाधिताः पुनस्ते संबन्धाः।

स्मरणानि चात्यन्तविस्मयकराणि पूर्वजातेः । अतो नायमालापो मोहप्रलाप इति मे समर्थनीयः । कदर्थनीयश्च पुनरहं प्रार्थनाभङ्गदैन्यसंपादनेन' इत्युदीर्य कण्ठादवतार्य किंचिदवनतेक्षणो दक्षिणकरेण लग्नधवलनखकिरणमालमुपस्थितनिरवसानसुरलोकविरहव्यथाया विदीर्णहृदयोद्गीर्णगर्भामृतच्छटासारमिव हारमुपनिन्ये । नरेन्द्रोऽपि तेन चर्मचक्षुषामगोचरेण तस्य साक्षान्निजदिव्यरूपाविष्करणेन तेन स्मितोद्भेदपूर्वेण वक्षसि रचितकोमलकराञ्जलिना यत्र प्रथमाभिभाषणेन तेन सुरपतिप्रशंसाप्रकाशनपुरःसरेण विस्तरवता स्ववृत्तान्तकथनेन तेन च दूरं परिहृत्य दिव्यतावलेपस्पृहणीयेन प्रतिग्राहणाय भूयोभूयः कृतेन प्रणयप्रार्थनेन दूरमावर्जितमनाः प्रकृतिनिःस्पृहोऽपि परोपचारेष्वतिस्पृहयालुरिव सत्वरमुपसृतः प्रसार्य करयुगलमग्रतस्तं जग्राह ॥

देवोऽथ सावलक्षितगतिस्तस्मिन्नेव क्षणे झगित्यदर्शनमगमत् । तिरोभूते च तस्मिन्नुपजातविस्मयो नरपतिर्निरीक्ष्य चक्षुषा निश्चलेन तं हारमुत्तरीयाञ्चलैकदेशे बबन्ध । प्रविश्य च शक्रावतारायतनमध्यमाराध्य भगवन्तमतिचिरमादिदेवमागत्य निजसदनमुपपाद्य भक्त्यतिशयेन श्रियः सायंतनीं सपर्यामभिमुखीभूय तन्मुखे निहितनिश्चललोचनो निषसाद । निजगाद च—'भगवति, त्वच्चरणारविन्दसेवानुभावोऽयम्, यदस्मादृशामपि मनुष्यमात्राणामशेषत्रिभुवनमाननीया वासवसमानौजसो वैमानिकाः संनिधिमभिलषन्ति, योगिज्ञानगोचरं चात्मनो रूपमध्यक्षविषयीकुर्वन्ति, प्रकटितसंभ्रमाश्च दृष्टिदानसंभाषणादिना बहुमानेन महिमानमारोपयन्ति । एतच्च यद्यपि अनिमित्तबन्धुना परोपकारपराधीनमानसेन महात्मना तेन दिव्यपुरुषेण स्वाङ्गभूषणीकृतमाभरणमेकं दत्तम्, तथापि त्वदीयमेतत् । अतो न मे शरीर-

स्पर्शमर्हति। दिव्या हि मूर्तयो भाजनं दिव्याभरणानाम्। तेन तावक एव परिवारलोके भवतु। कस्यचिदनुभवतु वादृष्टोदयान्मनुष्यलोकमागतमपि पुनस्त्रिदशलोकस्थितिसमुचितं शोभातिशयम्' इत्यभिधाय तं हाररत्नं देवतायाश्चरणयोः पुरस्तादमुञ्चत्॥

अत्रान्तरे नितान्तभीषणो विशेषजनितस्फातिरास्फालिताशातटैः प्रतिफलद्भिरतिपरिस्फुटैः प्रतिशब्दकैः शब्दमयमिवादधानस्त्रिभुवनमुद्भ्रान्तनयनतारकाकान्तिसारीकृतदिग्भिराकर्णितः सन् सभयमुभयकर्णदत्तहस्ताभिरायतनदेवताभिः कुलिशताडितकुलाचलशिखरसमकालनिपतद्गण्डशैलनिवहनादोद्धुरो हासध्वनिरुदलसत्। उपश्रुत्य च तमश्रुतपूर्वमुर्वीपतिरुपजातविस्मयः पस्पर्श चेतसा कियन्तमपि हासम्, न तु स्वल्पमात्रमपि संत्रासम्। अनुज्झितस्वभावावस्थितिश्च स्थित्वा मुहूर्तमुद्भूतकौतुकस्तदनुसारेण संचारयामास तिर्यग्वलिततारकं चक्षुः। दक्षिणेतरविभागे संनिहितमेव देवताया झगिति दत्तदर्शनं निदर्शनमिवाशेषत्रिभुवनभीषणानाम्, अतिकृशप्रांशुविकरालकर्कशकायम्, अलिकुलकोमलेन प्रसरता समन्ततः कान्तिकालिम्ना कज्जलमयीमिव सशैलद्वीपकाननामुर्वीं कुर्वाणम्, अनतिपुराणशुक्तिकाश्रेणिसितभासा हासदूरप्रकटिताया दन्तपङ्क्तेः प्रतिमयेव पुरः स्फुरन्त्या स्थूलपृथुलया नखपरम्परया प्रकाशितनिजप्रभातिमिरतिरोहतचरणयुगलाङ्गुलिविभागम्, आद्धास्थिनूपुरेण स्थवीयसा चरणयुगलेन रासभप्रोथधूसरं नखप्रभाविसरमनेकवातिकमण्डलं भ्रमणलग्नं रक्षाया भूतिरज इव दिक्षु विक्षिपन्तम्, अक्षुद्रसरलशिरादण्डनिचितेन निश्चेतुमुच्छ्रायमूर्ध्वलोकस्य सगृहीतानेकमानरज्जुनेवोपलक्ष्यमाणेन गगनसीमोल्लङ्घिना जङ्घाद्वितयेन निरन्तरारूढविततव्रततिजालयमलतालशिखरनिषण्णमिव दृश्यमानम्,

उल्बणास्थिग्रन्थिना जानुयुगलेन क्षीणमांसेन च निकाममूरुकाण्डद्व-येन विश्राणितपरस्परगुणप्रकर्षम्, अघूर्णां(?)चनादानं नोद्भ्रान्तगरेण जरदजगरेण गाढीकृतक्षतजकाथरक्तार्द्रशार्दूलचर्मसिचयम्, असृक्प्रवाहपाटलया वैतरणीसरित्सलिलवेणिकयेव पृथुलदीर्घया रोमलतया सीमन्तितकरालकुक्षिकुहरपातालम्, आर्द्रपङ्कपटलश्याममतिकृशतया कायस्य दूरदर्शितोन्नतीनां पर्शुकानामन्तरालद्रोणीषु निद्रायमाणशिशुसरीसृपं सीरगतिमार्गनिर्गताविरलविषकंदलं साक्षादिवाधर्मक्षेत्रमुरःप्रदेशं दर्शयन्तम्, अचिरखण्डितं मन्त्रसाधकमुण्डमिन्दुखण्डश्रद्धया धवलकुटिलान्दंष्ट्रानिर्गमानपहरन्तम्, आसादितं विधुंतुदमिव गलावलम्बितं बिभ्राणम्, अतिभारविघटिताङ्गुलीसंनिवेशगलितमुच्छलितरुधिरच्छटाछोटितायतनस्तम्भकुम्भिकमासा( शा )करिकुम्भस्थलास्थिस्थूलमतिदूरलुठितमपि रक्तासवकपालमनुभावदर्शितात्यद्भुतभुजायामेन पाणिना वामेन ना(?)तथैवोर्ध्वस्थितमाददानम्, दक्षिणेन च प्रतिक्षणव्यापारितनिशितकर्तिकेन वामकक्षान्तरक्षिप्तकंधरस्य दृढनिरुद्धनिःश्वासनिर्गमत्वादध्वरपशोरिव तत्तदतिकरुणमन्तःक्रन्दतो दत्तनिष्फलकृपाणघातस्य वेतालसाधकस्य साधितपक्कम्, उत्सर्पता परिकराशीविषवदनविषपावकेन गात्रपिशितमुत्कृत्योत्कृत्य कीकशोपदंशमश्नन्तम्, कवलितपिशितचर्वणायासचञ्चलेन कपिलतासंविभागदानाय त्रिभुवनोदरचारिणीनामचिररोचिषामारब्धसंज्ञासमाह्वानेनेव क्षयानलवर्चसा कूर्चकचकलापेन कवलितमखिलरोमरन्ध्रनिर्गलद्रुधिरगण्डूषमिव प्रलम्बपृथुलं चिबुकमुद्वहन्तम्, अतिकठिनखर्वपर्वाभिरङ्गुलीवेणुदण्डिकाभिः परिगृहीतैः कुटिलतीक्ष्णायताग्रकोटिभिः कररुहकुद्दालैरसुरकन्यारिरंसया रसातलयानलीकसाधकानुद्धर्तुमिव कृतोद्यमम्, विपुलवर्तिमण्डलमालोलल-

पार्श्वं श्रवणयुग्ममूर्ध्ववलितपुच्छनालनिबिडालिङ्गिताङ्गमुत्फुल्लफणकर्परं कालसर्पद्वयमिवोद्वहन्तम्, शिखिकणारुणया तिर्यग्विसर्पिण्या फणमणिकिरणमालया जटालीकृतसरलभोगेनाला(?)भ्यामलघुना निष्पतन्तमोघेन घोणापुटश्वासमुभयतः पातुमवतीर्णाभ्यां कर्णाभरणविषधराभ्यां द्विधाप्यधःकृतोष्ठपृष्ठलोमलेखम्, मुहुरारुदञ्चता मुहुर्न्यञ्चता मुहुः प्राञ्चता तिर्यगजगरदेहदीर्घपृथुलेन जिह्वालताग्रेण ललाटचिबुकसृक्कप्रान्तगतमार्द्रार्द्रमङ्गरागमेदःकर्दममास्वादयन्तम्, अन्तर्ज्वलितपिङ्गलोग्रतारकेण करालपरिमण्डलाकृतिना नयनयुगलेन यमुनाप्रवाहमिव निदाघदिनकरप्रतिबिम्बगर्भोदरेणावर्तद्वयेनातिभीषणमाभोगिना ललाटस्थलेन सद्यःस्थापितमसृक्पङ्कपञ्चाङ्गुलं पचनाय नरजाङ्गला[ना]नामुपसंगृहीतं चिताग्निमिव सहजभ्रुकुटिधूमान्धकारपरिगतं दधानम्, ऊर्ध्वस्थितेन स्थिरतडित्तन्तुसंतानस्थानकविडम्बिना कपिशभासुरेण केशभारेण भर्त्सयन्तम्, उपरि जाज्वल्यमानज्वालाखण्डमुत्पातधूमदण्डमायतनभित्तिसङ्गिना बलिप्रदीपप्रभाप्रकाशितेन केशनखदशनवर्जमात्मनो निर्विशेषच्छायेन प्रतिच्छायापुरुषेण पार्श्वचारिणा सानुचरमिव दृश्यमानम्, घोणयाप्युत्फुल्लस्फारपुटया धृतातिविकटपत्रपुटयेव पीयमानवदननिर्यद्बसामोदम्, दशनमालयाप्यन्तरालप्रविष्टकुणपास्थिशकलया सकलत्रिभुवनाभ्यवहाराय सहायीकृतानन्तदन्तयेवाक्रान्तमुखकुहरम्, चरणाङ्गुलीभिरपि स्फुरितपाण्डुनिम्नोदरनखाभिर्मुखार्पितकपालकर्पूराभिरिव प्रतीष्यमाणान्तरीयनरचर्मक्षरत्क्षतजकणवर्षम्, अस्थिनूपुरैरपि पदप्रयोगमुखरैर्भयप्रस्तुतस्तुतिभिरिव सततसेवितचरणम्, आभरणभुजगैरपि ज्वलदुन्मयूखफणमणिभिरात्तप्रदीपैरिवावगाह्यमानकज्जलकालकायप्रभान्धतमसां मांसेनापि खादनभीतेनेव सास्रेण परित्यक्तसर्वावयवम्, अवयवानप्यस्थिसारान्-

तिविकृतरूपदर्शनभयात्पलायितुकामानिव स्नायुग्रन्थिगाढनद्धान्दधानम्, आजानुलम्बमानशवशिरोमालमेकं वेतालमद्राक्षीत् ॥

तं च क्रमानुसारिण्या दृशा चरणयुगलादामस्तकं प्रत्यवयवमवलोक्य किंचित्कृतस्मितो नरपतिरुवाच—'महात्मन्, अनेन ते प्रवृद्धेन सह-साकाशसंनिभप्रभाभारभरितककुभा स्फुटोत्फुल्लनयननासापुटेन मुखप्रवृत्त-संततास्रस्रोतसा प्रकटितकरालदंष्ट्रामण्डलेन विदारितविकटसृक्कणानिका-मभीषणश्रवणेन वपुषेव भुवनत्रयत्रासकारिणा हर्षाट्टहासेनजनितमति-महत्कुतूहलं मे। कथय किमेतदसमञ्जसं दृश्यते।' स जगाद—'राजन्, किंचिदन्यत्त्वदीयमेव चेष्टितम्। त्वया हि फलमभिलष्य किंचिदिय-मस्मत्स्वामिनी श्रीरनुदिवसमासेवितुमुपक्रान्ता। सेवकाश्च फलप्राप्तिकामाः प्रथममुपचारेण गृहीतवाक्यं परिग्रहलोकमावर्जयन्ति। ततस्तेन कृतप-क्षपरिग्रहेण आहितसंबन्धाः प्रभूणामशक्तमात्मशक्तिमुपदर्शयन्ति। एष तावज्जगति दृश्यते व्यवहारः। त्वया तु विपरीतः प्रस्तुतोऽयं सेवा-विधिः। तथा हि—स्नपनवस्त्रमाल्यानुलेपनालंकारादिभिः सततमेनां देवतामुपचरसि। यस्तु प्रणयपात्रमस्याः सर्वदा सविधवर्ती कार्यकर्ता जनोऽयं सर्वपरिजनप्राग्रहरस्तमाहारमात्रदानमात्रयापि नामन्त्रयसे। मित्रीकृते हि मयि साधकानामभीष्टसिद्धिः। किमियमैश्वर्यमदनिश्चेतना वितन्यमानमतिमहान्तमपि त्वया पूजोपचारं पश्यति। दृष्ट्वा च किं प्रकृतिचञ्चला चेतस्यवधारयति। कृतावधारणापि किमेकान्तो वीरपुरुषसाहसाक्षिप्तहृदया पक्षपातं गृह्णाति। गृहीतपक्षपातापि किमव-ज्ञया विपक्षीकृतेन मया कृतप्रतिबन्धा बध्नाति वरप्रदानाय बुद्धिम्। तदलमबुद्धिपूर्वकेण बुधजनहासकारिणा निरवधे क्लेशैकफलेन फल्गुनानेन सेवाप्रकारेण। यदि स्फुटमेव फलमुत्कृष्टमीप्ससि,

लिप्ससे वा विघ्नविरहितजपध्यानादिकर्मकामया सेवया मनः प्रसादयितुमचिरेण देव्याः, तदस्मदुपचारपूर्वमद्यप्रभृति सर्वमुपकल्पया-क्रियाकल्पम्। अन्यथा क्लेशो भविष्यति तवैष सेवावेशः।' इति वादिनस्तस्य वचनमनुवर्तमानो मेदिनीपतिर्विहस्य किंचित्सोपहासमवदत्—'सर्वमुपपन्नमभिहितम्। उपदिष्टमक्लिष्टया युक्त्या। प्रबोधिता वयम्। यथा निदर्शितः सूक्ष्मदर्शिना तथैवैष सेवामार्गः। परिग्रहजने संनिधौ सति कोऽधिकारः प्रभूणामग्रपूजायाम्। महती मूढता। गाढमविवेकविलसितम्। अप्रतिविधेया वैधेयतेयम्, यदस्माभिः सर्वसेव्यगुणसंपदुपेतं भवन्तमपहाय प्रमादादिदोषोपहतचित्तवृत्तिभि-रियमग्रत एव देवता सेवितुमुपक्रान्ताः। कृतश्च पूजाविधेरकरणेन कियानप्यबहुमानः। अथ वा जन्मनः प्रभृत्यकृतपरसेवानामत्र लवमात्रोऽपि नास्माकं दोषः। तवैव प्रमत्ततासौ, यज्जानतापि नीतिमार्गमादित एव नोपदिष्टोऽस्मभ्यमेष क्रमः। किमिदानीं कुर्मः। प्रस्तुतमिदं कर्म। कृतश्च निश्चलो मनसि संकल्पः। यावन्नैष परिसमाप्तः कल्पस्तावदल्पाप्यनुवृत्तिरुपचारो वा न कस्यचिद्दैवतस्य विवक्षितफलापेक्षया कर्तव्योऽस्माभिः। अवधार्य चेदन्वीमता(?) न कार्यः। प्रस्तुतेऽस्मिन्नसत्कर्मणि कार्यसिद्धिविषयो विचारो नापि कतिचिद्दिनानि प्रार्थनीयः पूजोपचारो यदि चाभ्यवहारेण प्रयोजनं पूज्यस्य। ततः सज्जा वयं तदुपपादनाय। गृह्यतामयम्, उपयुज्यतां च विविक्तमस्यैव देवतागृहस्य स्पृहणीयतममाश्रित्य कोणमेकमखि-लोऽप्येष देव्या विशेषपूजार्थमाहृतोऽद्य हृद्यानेकफलमूलोपदंशः। दृष्टमात्रः क्षुदुपबृंहणो मोदकादिः प्रभूतभक्त्यपलिः(?)। इत्युक्तवति भूपे भूयोऽप्यसौ सहासमवदत्—'नरेन्द्र, न वयं पक्षिणः, न पशवः,

न मनुष्याः। कथं फलानि मूलान्यन्नं चाहरामः। क्षपाचराः खलु वयम्। व्याघ्राणामिवास्माकमात्मभुजविक्रमोपक्रीतमामिषमाहारः, तस्य चिन्तय प्राप्त्युपायम्। किमनेन कर्णोद्वेगजनकेन द्विजस्येव मदिरास्वादसौन्दर्यकथनेन भक्ष्येतरवस्तुतत्त्वप्रकाशनेन। यदि वान्येऽपि बहवः क्षुद्रसाधकाः संप्रति खलीकर्तुमुद्यताः स्वामिनीम्। तदीयदेहावयवेष्वेव सिद्धा तत्प्राप्तिः। आस्व(स्स्व) तावन्निराकुलः। केवलं याचे किंचन। त्वया हि बहवः कृताः संग्रामाः, हताश्च संख्यातीताः क्षत्रियक्षोणीपतयः। तत्र येन कदाचिदपि नानुभूतो भङ्गः संगरेषु, न दर्शितं वैमुख्यमर्थिजनप्रार्थनासु, न कृतः प्रणामः प्राणसंशयेऽपि शत्रोः, तस्य भुवनत्रयश्लाघनीयचरितस्य नरपतेः प्रकृत्यैव पावनमतिप्रशस्तललितललाटलेखाक्षरमरूढच्छविच्छत्रसदृशाकारमर्पय मे कपालकर्परं प्रत्यग्रमेकम्, यदपवर्जितैरसृग्भिः पुण्यासु कृष्णचतुर्दशीषु दुर्विनीतक्षत्रियनरेन्द्रनिहतस्य जनयितुर्जामदग्न्यमुनिरिव मुहुर्मुहुः करोमि तर्पणम्।' इति ब्रुवाणं च किंचिद्विहस्य पुनरुवाच नक्तंचरं नृपतिः— 'प्रेतनाथ, नान्यथोदितं भवता। तथ्यमेवेदम्। कृताः शतकृत्वो मया संग्रामाः। हताश्च संख्यातीताः क्षत्रियक्षोणीपतयः। किं त्वनेकराजकार्यव्यापृततया कदाचिदकुर्वता दिव्यकार्यपर्यालोचनम्, अतीन्द्रियज्ञानविकलतया स्वयमनावेदितम्, अजानता परेषां हृदयगतमर्थम्, अशृण्वता च युष्मद्विधानामत्र विषये कुतश्चिदप्यर्थित्वमुद्यमं च धर्मक्रियाकल्पविषयम्, अल्पमपि न कृतस्तत्कपालानां संग्रहः। तद्यदि नातिमात्रमवसीदति पितृप्रयोजनम्, अनभ्यर्णवर्ती वा पूर्वसूचितः पुण्यदिवसः, तत्प्रतीक्षस्व कतिचिद्दिनानि, यावत्कचित्तदवाप्तिर्भवति। अथ न सह्यः कालातिपातः, तदिदमेव मे स्वीकुरु शिरः। केवलं

विलोकय, चिरं विचारय च चेतसा । यदि संभवन्ति कतिचिदिह पूर्वसूचिता गुणाः, प्रीयते वा चक्षुरुत्तमाङ्गलक्षणविधेर्विचक्षणस्य, तन्न किंचिदन्यान्वेषणेन ।' स पुनरब्रवीत्—'नृपवरिष्ठ, सुष्ठु शुभलक्षणम् । सुष्ठु चक्षुष्यम् । किं विलोक्यते किं वा विचार्यतेऽस्य जात्यस्येव जातरूपस्य रूपशोभासौभाग्यम् । भाग्यवानहम्, यस्य प्रार्थनामन्तरेण समुपस्थितमिदम् ।' इति व्याहृत्य वामकरतलवर्तिनः कपालस्य कर्णवर्तौ निर्दयावृत्तिकषणप्रकीर्णवह्निस्फारविस्फुरत्स्फुलिङ्गव्रातामुत्पातमेघलेखामिव विमुक्तघनरुधिरबिन्दुवर्षाममर्षचक्रीकृतकृतान्तकोटिवद्विकरालां कालायसकर्तिकां निजघर्ष । हर्षोत्तालकृततुमुलकिलिकिलारवश्च साटोपमेत्य विकटपातिभिः पदैरनतिनिकटमवनमितपूर्वकायः प्रकोष्ठचलितपन्नगप्रतिसरेण समुपनिन्ये सव्येतरकरेण । क्षोणीपतिरप्यजातसंक्षोभः स्तिमितबद्धलक्ष्येण चक्षुषा चिरमवेक्ष्य तां सधीरमुवाच—'क्षपाचरेन्द्र, दिव्यमायुधमिदं नार्हति करस्पर्शमस्मद्विधानाम् । विधानेन महता धार्यमेतन्न यथाकथंचित् । अतस्तिष्ठतु तथैव हस्ते । त्वत्प्रयोजनमसावेव मे सर्वदा सविधवर्ती निवर्तयिष्यति निसर्गनिष्कृपः कृपाणः ।' इति वदन्नेव सविधवर्तिनः कुशलस्तरस्य शिरसि तत्क्षणमेव निक्षिप्तमाक्षेपदूरविक्षिप्ताक्षवलयेन दक्षिणपाणिना जग्राह कृपाणम् । मामेवकांशुमिषविमुक्तपटुविषच्छटाभीषणं च विचकर्ष संकर्षणानुज इव कलिन्दतनयातरङ्गात्कालियम्, इन्द्रनीलखण्डखचिताच्चर्मकोशात् । निष्ठुरकराङ्गुष्ठतर्जनीकोटिमार्जितातितीक्ष्णश्लक्ष्णधारे च तत्र प्रसन्नधवलायतामायुधार्चिधिषयेव विकचविचकिलस्रग्बन्धुरां बबन्ध दृष्टिम् । आबद्धपरिकरश्च कृत्वा देवतायाः प्रणाममूर्ध्वधृतनिःकम्पजङ्घेन वामाङ्घ्रिणा तिर्यगावर्जितेन च दक्षिणे धूमदण्डानुकारिणं कृपाणमुज्झितकृपः स्कन्धपीठे न्यपातयत् ।

अथ भीमकर्मावलोकनोद्भूतभीतिभिरिव स्थायिभिरपि शोकभयजुगुप्साप्रभृतिभिः परित्यक्तधीः, असाधारणधैर्यदर्शिना दाहितव्रीडैरिव सात्त्विकैरपि स्वरवैवर्ण्यवेपथुस्तम्भादिभिरपास्तसंनिधिः, अव्याजसाहसावर्जितमनोवृत्तिभिरिव व्यभिचारिभिरप्यमर्षमदहर्षगर्वोग्रतापुरःसरैरालिङ्गितः सर्वाङ्गेषु भावैः, वामेन विभ्रमदोलायमानविततेन्द्रनीलकुण्डलेन कठिनकण्ठास्थिदलनकुण्ठितकरालधारं करवालमिव साणया निशातुं कृतक्षणेन, दक्षिणेन चावतंसितविततदेवतानिर्माल्यपल्लवेन यत्र घनशिरावलिखण्डखण्डनध्वनिं श्रोतुमवितृप्त्या सहायीकृतापरश्रवणेनेव श्रवणेनोद्भासमानः, विसर्पदतिबहलखड्गप्रभानुलेपश्यामलितविग्रहतया प्रत्येकमेकावलीमौक्तिकादर्शदृश्यमानप्रतिमागतोत्तमाङ्गतया प्रणत्यनारदकुपितपार्वतीप्रसादनार्थमुपक्रान्तद्वितीयकण्ठच्छेद इव रावणः, तत्क्षणमधत्त रमणीयभाषणं रूपम्। अर्धावकृत्तकन्धरे च शिरसि सहसैवास्य केनापि धृत इव स्तम्भित इव नियन्त्रित इवाक्रान्त इव नाल्पमपि चलितुमक्षमत दक्षिणो बाहुः। अतितीक्ष्णधारोऽपि कुण्ठीभूत इव कठिनास्थिकोटिसंदंशदष्ट इव स्त्यानलोहितपङ्कलग्न इव निरायतशिरातन्तुसंयत इव प्रततस्नायुपाशसंदानितबद्ध इव मन्दमपि पूर्वच्छेदतः परेण प्रसर्तुं न शशाक निस्त्रिंशः। किमेतदिति संजातविस्मयश्च नृपतिः स्तम्भनिश्चलाङ्गुलीगाढगृहीतत्सरुं मत्सरादिवानिच्छतो मोक्तुमाच्छिद्य दक्षिणकरादितरेण पाणिना कृपाणं जग्राह। करविमुक्तमौलिबन्धनिरालम्बकंधरे च छेदमार्गमिव सुखच्छेदाय विकटावकाशं कर्तुमधोमुखमवनते शिरसि निर्दयं व्यापारयितुमाहितप्रयत्नस्तत्कालमुल्लासितेन मन्दीकृताखिलेन्द्रियशक्तिना मूर्च्छागमेन विरलविलुप्तसंज्ञः स्वप्न इवाकालजलधरध्वनि-

क्षुभितराजहंसीकुलकोलाहलध्वनिकलमविश्रान्तसंततिना रत्नवलयाव-लीशिञ्जितेन व्यञ्जितोत्तालकरतलावधूननमतिश्रव्यतया सुधारसेनेव श्रवणविवरमध्यापयन्तमश्रुतपूर्वममरसुन्दरीजनस्य हाहारवमशृणोत् ॥

तदनुसारप्रहितदृष्टिश्चाग्रतो नातिनिकटे झगिति दत्तदर्शनाम्, आक्रान्तदशदिशाशङ्खधवलेन देहप्रभाप्रवाहेण क्षीरसागरगतामिव विभाव्यमानाम्, विततदलसहस्रफणावलयशोभिनि पृथुलदीर्घनालभोगे शेषभुजग इव मेदिनीमिन्दुकरपाण्डुरत्विषि पुण्डरीके कृतावस्थानाम्, अब्जिनीखण्डसंचरणसंक्रान्तकमलधर्ममिव सुकुमारारुणं चरणद्वितयमु-द्वहन्तीम्, अस्थूललघुनापि पीवरोरुणा राजमानां जङ्घाद्वितयेन, विततमेखलागुणपिनद्धमच्छधवलं दिव्यदुकूलमम्बुजवनप्रीत्या पद्मिनी-नालसूत्रेणेव कारितमलघुना जघनमण्डलेनोद्वहन्तीम्, आयतिशालि-नीभिः शक्तिभिरिव वलीभिस्तिसृभिरुद्भासितेनानीतिमार्गेणेवातिसूक्ष्म-दृष्टिलक्ष्येण मध्यभागेन भ्राजमानाम्, गतिविलासेन हसितैः सहवा-सिभिः क्षीरोदजलवारणैरुपनीतेन कुम्भाभोगेनेव निरङ्कुशप्रवृत्तेन स्तन-भरेणोद्भासिताम्, उदधिमथने सुधारसच्छटावलयमिव लग्नमानाभिल-म्बकम्बुपरिमण्डलेन कण्ठनालेन मुक्ताकलापं कलयन्तीम्, अलिकुल-क्वाणमुखरया शतमखहृते रावणादिसहोदरोदन्तदानाय प्रहितया पारि-जातदूत्येव स्निग्धसान्द्रया मन्दारमञ्जर्या समाश्रितैकश्रवणाम्, संक्षोभि-तसुरासुरव्रातमलसवलितकोमलाङ्गुलिना वामकरतलेन कज्जलकूटकालं कालकूटमिव केशपाशं पुनः पुनः पृष्ठे बद्धुमामृशन्तीम्, शशिकलासंनि-भललाटभित्तिना कौस्तुभाताम्रबिम्बाधरेण सुधाधवललोललोचनतरङ्गेण मदिरासुरभिनिःश्वासमारुतामोदेन वदनेन्दुना निजसहोदरसमाजमिव समुदितं दर्शयन्तीम्, काभिश्चिदलसवलितकपोलवाक्यजनाभिः

क्षीरोददत्ताभिः परिवारापगाभिरिव निपतदुत्पतद्राजहंसाभिः काभिरपि करसंश्लिष्टयष्टिदीपिकाकिरणपटलपल्लवितदेहलावण्याभिः शैलकटकौषधीभिरिव धन्वन्तरिप्रहिताभिरपराभिः कनकगौरपीनोद्धुरपयोधराभिः पद्मिनीभिरिव सचक्रवाकयुगलाभिर्नालानुकारिणः किरणकण्टकिताम् वेत्रदण्डानुल्लासयन्तीभिरन्याभिराचसदृशसितनेपथ्याभिरादिभूपालकीर्तिभिरिव समीपवर्तिनीभिरमराङ्गनाभिः परिवृताम्, प्रदोषचन्द्रकलामिव विनिद्रकोकनदविनिवेशितकराम्, सुग्रीवसेनामिव स्फुरत्तारनीलाङ्गदाम्, गृहीतसर्वाङ्गीणप्रसाधनामप्येकाङ्गकल्पिताङ्गरागाम्, क्षीरतरवारिवासिनीमपि प्रकटितपृथुप्रतापां श्रियमपश्यत् ॥

अनन्यदेवतासामान्यचिह्नदर्शनेन श्रीरसावित्युपजातनिश्चयोऽपि किंचिदुत्पन्नबिभीषिकाशङ्कः प्राकृतामिव स्त्रियमदर्शितसंभ्रमस्तामपृच्छत्—'भद्रे, का त्वम् । किमर्थं वा देवतायतनमिदमागतासि ।' सा त्ववादीत्—'राजन्, न जानासि माम् । अहं हि सकलभूपालवृन्दवन्दितपादा राजलक्ष्मीस्त्वदभिकाङ्क्षितवस्तुसंपादनार्थमागता । कथय किं ते प्रियं कर्तव्यमिति ।' पार्थिवोऽपि तदवस्थानुरूपदर्शितादरः प्रणम्य तां तदागमनजन्मना हर्षेण करणवैक्लव्येन च दरस्खलितवचनः शनैरलपत्—'भगवति, कृतार्थोऽहम् । यस्य मे समुपस्थितायामसुव्यामन्तिमावस्थायामुपेत्य भगवत्या प्रकाशितमिदमदर्शनीयमन्येषामल्पपुण्यानां मानवानामशेषपापप्रशमनं दिव्यमात्मीयं रूपमभ्युपगता च मनीषितवस्तुसिद्धिरिति । देवि, मेऽभिमतममुष्य महात्मनस्त्वत्परिग्रहाग्रेसरस्य नक्तंचरपतेः प्रयोजनवशादुपदर्शितार्थिभावस्य दातुमुत्तमाङ्गं मया परिकल्पितम् । अर्धकल्पिते चास्मिन्नकस्मादपगतपरिस्पन्दौ संदानिताविव केनाप्यकिंचित्करौ करौ संवृत्तौ । तदनयोर्मम

त्त्वसामर्थ्यलाभो भवति भूयस्तथा प्रसीद, येनाहमनृणो भूत्वा निर्वाणमधिगच्छामि।' देव्यपि श्रीस्तेन तस्यातिमात्रकष्टायामपि दशायामनुज्झितावष्टम्भेन वचसा जनितविस्मयावलोक्य तद्वाक्यश्रवणभावितानामभ्यर्णवर्तिनीनां सखीनामानन्दपुलकितानि वारंवारमास्यकमलानि द्विगुणजातपक्षपाता प्रीतिविकसिततरङ्गवत् यतापाङ्गस्य चक्षुषः क्षरता क्षीरधवलेनांशुविसरेण सुधारसेनेवाप्याययन्ती हिमजलेनेव स्नापयन्ती मलयजाङ्गरागेणेव लिम्पन्ती मालतीमुकुलदामभिरिवाह्लादयन्ती मूर्च्छागमविलुप्तसंज्ञं राज्ञो वपुः पुनरवादीत्—'नरेन्द्र, बाढमविदितमत्स्वरूपोऽसि, तेनैवं वदसि। सर्वदा सौम्यपरिजनपरिवाराहम्। न मे नक्तंचराः संनिधावपि चरन्ति, दूरे भृत्यत्वम्। य एष विकृतवेषाकारधारी वेतालबुद्ध्याध्यवसितस्त्वया, नायं यातुधानः। प्रधानभूतो मत्प्रतीहाराणां महोदरो नाम यक्ष एषः। परीक्षितुमनेन सत्त्वमप्रतीक्षितमदीयागतिना झगित्यागत्य सत्याभ्यासमिदमनेकप्रकारमात्मीयया दिव्यशक्त्या विनिर्मितं मायाजालमखिलमपि ते प्रदर्शितम्। अतस्त्यज विषादम्। उत्सृज मृषागृहीतमिममात्मविग्रहस्य निग्रहविधावाग्रहम्। ब्रूहि चात्मनोऽभिलाषम्। अनेन तव सर्वातिशायिना सत्त्वेन साहसेन धैर्येण चित्तौदार्येण प्रज्ञाविशेषेण पूजाविशेषेण निःशेषितप्रमादनिर्मलेन च व्रतचरणेन चन्द्रमण्डलमिव शिशिरात्ययेन, मानससरस्तोयमिवागस्त्योदयेन, सुकविकाव्यमिव सज्जनपरिग्रहेण, गगनतलमिव शरत्कालागमेन, सप्रसादमपि किमपि मे प्रसादितं हृदयम्। आचक्ष्व कार्यं विचक्षण, किमद्य ते संपादयामि। किं तावन्मदनुभावासादितदिव्यशक्तिः प्रत्यहमितो गत्वा गृहीतविकटप्रसाधनमुद्भ्रान्तवनितावृन्दपरिवृतः कनकगिरिकंदरप्रभानुलिप्तपादपेषु

कल्पतरुतलनिषण्णकिंनरारब्धगान्धारग्रामगीतिरमणीयेष्वितस्ततः प्रवृत्तमुखरमन्दाकिनीस्रोतःसरणिसिच्यमानबालपारिजातालवालकेषु सविभ्रमभ्राम्यदभ्रमूकलभकरावभज्यमानसंतानकसरसपल्लवेषु हरिचन्दनलतागृहोदरप्रसुप्तसुरतखिन्नसुरवनिताभिनन्द्यमानमन्दानिलानीतशीतलसुधाकुण्डशीकरेषु नन्दनवनाभ्यन्तरेषु सविस्मयत्रिदशपालिकावलोकितः क्रीडासुखमनुभवसि । अथाधुनैवाधिगतविद्याधरेन्द्रभावः संकल्पानन्तरोपनतमनल्पवातायनसहस्रालंकृतममलचीनांशुकवितानलम्बमानमुग्धमौक्तिकप्रालम्बमनिलदोलायमानद्वारवन्दनमालाप्रवालमुपहारकुसुमसौरभाध्वमधुकरझङ्कारमुखरमणिकुट्टिमं विमानमधिरुह्य विदग्धवल्लभाप्तसुहृत्कदम्बकानुयातो विलोकयन्विविधान्याश्चर्याणि सशैलद्वीपकाननामुदधिमर्यादां मेदिनीं पर्यटसि । अथ मदीयप्रार्थनाया मुदितपुरंदरानुमोदितेन भरतमुनिना स्वयमागत्य सूत्रितमनाहतध्वनन्मेघमुरजमनोहरमेकदेशोपविष्टतुम्बुरुताड्यमानवीणारणद्गान्धारग्राममागृहीतवेणुकिंनरगणोपगीयमानविबुधसद्मनि प्रसिद्धमूर्च्छनमुद्विलासरम्भाभिनीयमानरघुपुरःसरादिभूपालचरितमुन्नतप्रासादशिखरचन्द्रशालायां रचितरङ्गभूमिरवसरेषु द्रष्टुमागतानामष्टादशद्वीपमेदिनीपतीनां दर्शयसि दिव्यं प्रेक्षाविधिम् । किं बहुना । अन्यदपि यत्ते मनसि वर्तते तत्सर्वमावेदय, येनाचिरात्संपादयामि ।' इति वादिनीमेव तां नरपतिरुपजातसंमदः सप्रश्रयमवादीत्—'देवि, सर्वमुपपन्नमेतत् । किं न संभाव्यते । प्रणतसुरसहस्रमौलिविश्रान्तपादः पुरंदरोऽपि देवस्त्वत्प्रसादादासादयति सुरलोकराज्यसुखानि । वासुकिरपि त्वयि सानुरागायामुरगकामिनीचामरकलापोपवीज्यमानतनुः पालयति पातालनगराणि । कुबेरोऽपि त्वत्संनिधानान्निधीनां नाथो जातः । सागरोऽपि त्वयि संभूतायां

रत्नाकरत्वमुपगतः। तिष्ठन्तु चैते। नीचप्रकृतयोऽपि त्वया परिगृहीता जगति गुरुतां परामागता दृश्यन्ते। तथाहि—प्राणिविशेषास्थिशकलमपि मुख्यः पावनानां शङ्खः, भुजङ्गकुलदूषितमपि वन्द्यं चन्दनम्, प्राकृतजनगृहीतदण्डमपि छायार्थिभिरुत्तमाङ्गोपरिस्थं धार्यते छत्रम्, असकृदासादितकलङ्कोऽपि हरिणाङ्कधवलस्य यशसो भाजनं करवालः, तिर्यङ्मलोऽपि गोमयो हरितः श्लाघ्यः। किं च वर्ण्यते—क्षीरजलधिगर्भसंभवाद्द्वितीया कामधेनुस्त्वम्, सुरद्रुमसहवासिनी जङ्गमा कल्पलता, चक्रवर्तिचक्रकृतार्चना चेतनश्चिन्तामणिः। किं न प्रयच्छसि प्रसन्ना प्रणयिनाम्, किं वा न विदधासि कल्याणमाराध्यमानानुजीविनाम्। यद्यपि त्वया कथंचिदुपजातकृपया मनोरथानामप्यपथभूताः सकललोकहृदयहारिणः सुप्रसादसदृशाः पृथक्पृथग्दर्शिताः समृद्धिविशेषाः, तथाप्येतेषु नास्ति मेऽभिलाषः। अमुनैव पूर्वपुरुषप्रभावोपार्जितेन विभवलेशेन कृतार्थोऽहम्। न मे प्रयोजनं दिव्यजनोचितैरुपभोगैः। अथ येनकेनचित्प्रकारेणानुग्राह्योऽयं जनो ग्राहयितव्यश्च कमप्यभिप्रेतमर्थम्, तदलंमन्येनेदमेव प्रार्थितासि—यथाहमेषामशेषभुवनवन्दितावदातचरितानां चतुरुदधिवेलावधेर्वसुंधराभुजामखिलदिङ्मुखविसर्पतोदग्रप्रतापतया तुलितनिजवंशादिपुरुषादित्ययशसामिक्ष्वाकुवंश्यानामवनीभृतां पश्चिमो न भवामि, यथा च देवी मदिरावती जगदेकवीरात्मजप्रसविनीनामसत्पूर्वपुरुषमहिषीणां महिमानमनुविधत्ते, तथा विधेहि।' इत्यभिधाय लज्जया किंचिदवनतमुखोऽभवत्। देव्यपि श्रीरीषदवनमितवदनतामरसास्यवचसो विवीच्छति तात्पर्यमुज्झितया निस्तरङ्गतारकेण चक्षुषा क्षणमात्रमतिष्ठत्। मुहूर्ताच्च किंचिदुन्नमितवदना शरज्ज्योत्स्नाविशदेन दशनांशुजालकेन सुमनसः प्रसाद-

मिव दर्शयन्ती मन्दं मन्दं विजहास । व्याजहार च—'नरेन्द्र, निज-गोत्रसंततेरविच्छेदाय मदिरावत्याः पुत्रमिच्छसीति निश्चितं मया । केवलमिदं पृच्छामि । किमेष वक्रया वचनभङ्ग्या युक्तिगम्यः कृतोऽर्थः । पुत्रं देहि मदिरावत्या इति व्यक्तमेव किं नोक्तम् । अन्यथोक्ते कुतोऽपि वृत्तान्तमुपलभ्य समुपजातेर्ष्याः कदर्थयिष्यन्ति मामन्या अपि प्रणयिन्य इति कश्चिदाशङ्का । न कश्चिदत्रास्ति दुर्जनः प्रतिपक्षो वा तवास्मत्परिजने, यस्तासां निवेदयिष्यति । एको महोदरः प्रयत्नेन रक्षणीयः । तेन त्वीदृशेष्वतिनिपुणदृष्टिना गोपितोऽपि गाढमवगाढस्त्वदीयालापस्य तात्पर्यार्थः । कथयिष्यति च केनापि प्रकारेण निःकारणापकारी नियतमेष जाल्मः । प्रकृतिकेलिप्रियतया कोपयिष्यति च ताः । काममेवं च बुद्धिकौशलेन रक्षितमपि बलात्तवागतं व्यसनमप्रतिविधेयम् ।' इत्युक्त्वा विरराम ॥

क्षितीशोऽपि तेन प्रसादातिशयशंसिना श्रियः परिहासवादेन द्विगुणतरोपजातसंमदः स्मित्वामन्दमवदत्—'देवि, प्राञ्जलोक्त्या कृतं प्रार्थनमतिव्रीडाकरमिति मन्यमानेन मया प्रयुक्तेयमीदृशी वचनयुक्तिर्न तु भयेन । त्वया हि प्रसादपरया संप्रति कृतः स्वीकारः । पुरंदरा-दप्यहं न बिभेमि, किं पुनर्महोदरात् । किं विलम्बते । यात्वयमिदा-नीमेव गुह्यकः । शक्नोति यदि न रक्षितुं गुह्यम्, आवेदयतु शतगुणीकृत्य मद्भाषितमिदम् । ता अपि सपत्नीबहुमाननिशमनोत्पन्न-मत्सराः कुप्यन्तु कामं पुत्रकाम्यन्तः । किं मे करिष्यन्ति कुपिता अपि । मया नैव ता प्रसादनीयाः । त्वयि कृतप्रसादायामिदानीमप-गता मे तदीयचिन्ता । यथा मदिरावत्यास्तथा तासामपि त्वया पुत्रो जनयितव्यः । एवं च तत्कृता कदर्थना मे नास्ति वृथैव मां भगवती

भीषयते ।' इत्युक्तवति राजनि विहस्य जातहर्षा लक्ष्मीः पुनरवोचत् । —'राजन्, अकृतपर्याप्तमतः परम् । नर्मकर्मणा जिता त्वयाहम् । किं त्वतिमात्रचतुरोऽपि वञ्चितस्त्वमेतेन दर्शितालीकोन्नतिना महापुरुषताभिमानग्रहेण, येनैवमुपदर्शितप्रसादायामपि मयि न किंचित्त्वया प्रार्थितम् । सर्वथा यदस्ति तदस्तु । कस्ते मनोरथानां प्रतिपन्थी भविष्यति । तवाशेषभुवनत्रयख्यातकीर्तिरार्तजनपरित्राणक्षमः क्ष्मापतिवृन्दवन्दितचरणारविन्दो बन्दीकृताष्टादशद्वीपभूपालसुन्दरीभिः सादरविधीयमानशुद्धान्तवधूचरणपरिचर्यश्चतुरुदधिवेलाशिलोच्चयशिखानिखातमणिशिलादारुमयजयस्तम्भो मत्प्रभावादचिरेण भोक्ता भूमिगोचरखेचराधिपतिराज्ययोः प्रतापवान्पुत्रः । यस्योत्पन्नभङ्गचित्राष्टापदपादपीठप्रान्तसततनिषण्णः सविभ्रमोत्क्षिप्तैर्दक्षिणकरैः प्रचलयन्नवसरेषु वालव्यजनकानि विलासयन्नपुत्रिकाविदग्धतां धास्यति प्रकटिताष्टबाहुदेहद्वयो जनोऽयम् ।' इत्युदीर्य भूयो जगाद—'नृपचन्द्र, योऽयमसदृशसभक्तिहृतहृदयेन महापुरुषचित्तवृत्तिसहचरीमौचित्यमुद्रामाद्रियमाणेन चन्द्रातपाभिधानो दिव्यमुक्ताकलापः पूजार्थमुपकल्पितस्त्वया मे, सोऽनल्पमभ्युदयमभिलष्यन्त्या भवत एव मया प्रदत्तः सर्वथा प्रयत्नेन रक्षणीयः । यदा च नवयौवनश्रिया प्रतिपन्नसर्वाङ्गस्तवाङ्गजो भविष्यति तदा तस्य भूषणार्थमुपनेतव्यः । यद्यपि सुचिरकालसंचितेन सततानुगामिना सद्भृत्येनेव शुभकर्मणा कृतरक्षाणां महापुरुषाणां सर्वदापि दूरवर्तीन्येव दुरितानि, तथापि नीतिरनुसर्तव्या, यतोऽस्य संग्रामभूमिमवतरतोऽपि विपक्षदुर्गाणि गाहमानस्य विषमाटवीषु कार्यवशेन विशतोऽन्येषु च संभाव्यमानापत्तिषु स्थानकेषु व्यवहरतोऽसौ विशेषतः संनिधापयितव्यः । सर्वदा निर्विघ्नमस्तु ते

प्रयोजनम् । अनुजानीहि मां गमनाय । मयापि प्रसङ्गेनैव निर्गतया निजनिवासात्कतिचिदप्यहानि दक्षिणाशाविभूषणेषु त्रिकूटमलयादिषु वेलापर्वतेषु क्षीरोदप्रभृतिषु महार्णवेषु नन्दीश्वरप्रमुखेषु द्वीपेष्वन्येषु चातिरमणीयेषु प्रदेशेषु विहृत्य भूयस्तत्रैव तुहिनाचलशिखरवनराजिराजतदर्पणे स्वसद्मनि पद्मनाम्नि महाह्रदे गन्तव्यम्। त्वमपि मदनुज्ञया गच्छाधुना स्वमावासम् । अध्यास्व(स्स्व) राज्यधुराम् । आधेहि विषयोपभोगसुखेषु प्रणयम् । आत्मदर्शनामृतेन विरहाकुलीकृतप्राणाः प्रीणीहि सर्वाः प्रणयिनीः । प्रवर्तय यदृच्छया सुहृज्जनेन सार्धमग्राम्यनर्मालापरहस्यगोष्ठीः । अनुभव तुरगरथसिन्धुराधिरोहणसुखानि । विधेहि कृत्रिमनदीतरङ्गमारुतावतारशीतलेषु प्रमदवनसहकारपादपतलेष्वनुत्तालगुञ्जन्मुरजरवमनोहरमन्तःपुरपुरंध्रिजनेन सार्धमनिवारितमनःप्रसरः पुराणवारुणीपानोत्सवम् । कुरु सफलानि रङ्गशालासु लासिकाजनस्य निजावलोकनेन लास्यलीलायितान्यपराण्यपि नियमग्रहणकालत्यक्तानि । चिन्तय निराकुलः सकलानि राजकार्याणि । अद्यैव तव मया व्यपनीतो नियमनिगडग्रन्थिबन्धः ।' इत्यभिधाय दत्त्वा च शंसितप्रभावमवतार्य करतलाद्बालारुणाभिधानं प्रधानरत्नाङ्गुलीयकमीषत्प्रचलितोत्तमाङ्गा कराञ्जलिबन्धसमकालस्मितमुखी झगित्यदर्शनमगात् ॥

गतायां च तस्यां सविषादविस्मयः स्थित्वा पार्थिवः क्षणं कोणमेकमायतनस्याश्रित्य परिचारकैः पूर्वमेव प्रकल्पितं कुशतल्पमगात् । निषण्णस्य चास्य संजातपरमनिर्वृतेरतीतमनुष्यभावमिव देवभूयंगतमिव सर्वलोकविलक्षणतामापन्नमिवाणिमादिगुणाधिष्ठितमिव भुवनत्रयसृष्टिसंहारक्रियाक्षममिव देवताकृतबहुमानमात्मानं मन्यमानस्य, क्षणं शक्रावतारगमनमुत्प्रेक्षमाणस्य, क्षणं ज्वलनप्रभस्य रूपसंपदं

निरूपयतः, क्षणमुत्सृष्टदिव्यताभिमानमधुराणि तदाभाषणवचांसि चिन्तयतः, क्षणमिन्द्रसदसि नाकिभिः प्रस्तुतामात्मगुणस्तुतिं हृदयेनावर्तयतः, क्षणं शक्रावतारायतनलब्धस्य मुक्ताफलहारस्य प्रभावमद्भुतं भावयतः, क्षणमात्मनः कण्ठच्छेदकर्मणि कठोराशयतां विमृशतः, क्षणमादरव्यापारितासेः स्वभुजदण्डस्य सर्वशक्तिविघातमकाण्ड एव जातमालोचयतः, क्षणमग्रतः सहसैव दर्शितदिव्यनिजरूपाङ्गराजलक्ष्मीं ध्यायतः, क्षणं तस्याः प्रकटितप्रसादातिरेकस्पृहणीयानि श्रवणामृतस्यन्दीनि जन्मफलभूतानि जल्पितानि स्मरतो विस्मयमयीव कौतुकमयीवाश्चर्यमयीव प्रमोदमयीव क्रीडामयीवोत्सवमयीव निर्वृतिमयीव धृतिमयीव हासमयीव सा विभावरी विराममभजत ॥

जातप्रभोद्भेदायां च पाकशासनककुभि शयनादुत्थितस्य दुर्विनीतनिरवशेषप्रभातावश्यकविधेरवसरोपस्थायिना स्वकर्म संपादयितुमादृतेन दृतिवारिभिर्वारिकजनेन विरजीकृतविविक्तलतायामविरलप्रसूनप्रकरभाजि देवतागृहप्राङ्गणवितर्दिकायामुपविष्टस्य नातिनिकटवर्तिना निर्वर्तितप्रातःसवनस्नानक्रियेण सद्यो जलक्षालनविमलनिरायामा क्षौमधारिणा क्षितावुपविष्टेन विशिष्टाप्तपरिचारकगणेनोपास्यमानस्यास्य दर्शनार्थिनः सकलदर्शनार्थपरिभावनालब्धबुद्धिप्रकर्षा महर्षयः श्रोत्रियाः प्रधानमन्त्रिणोऽमात्यवृद्धा मूर्धाभिषिक्तनृपतयो महासामन्ता ज्ञातयः सुहृदः समग्रनगरलोकाग्रेसराश्च पौराः समाजग्मुः ॥

प्रतीहारसूचिताश्च प्रविश्य यथोचितकृतप्रणामाः परिजनविश्राणितेषु यथायोग्यं स्वासनेषूपाविशन्। क्षणमात्रनिभृतैश्च तैरपूर्ववदनच्छायावलोकनोल्लसितचित्तवृत्तिभिर्देवताप्रसादविषये कृतप्रश्नः शक्रावतारगमनपुरःसरं राजलक्ष्मीस्वस्थानगमनपर्यवसानं सर्वमेव

यथावृत्तं प्रदोषवृत्तान्तमकथयत् । आदिष्टान्यतमपरिचारकोपनीतं च तं त्रिदशादासादितं दिव्यहारमङ्गुलीयकं चादर्शयत् । तत्क्षणोपजातपरमप्रीतिभिश्च तैः कौतुकवशेन मुहुः कथामावर्तयद्भिः, मुहुः प्रभावमावर्णयद्भिः, मुहुर्धर्मसामर्थ्यं समर्थयमानैः, मुहुः सात्त्विकतामुदाहरद्भिः, मुहुः सत्यादिगुणगणं गृणद्भिः, मुहुर्महिमानमुत्कीर्तयद्भिः, मुहुः साहसिकतामुद्धट्टयद्भिः, मुहुः पुण्यपरिणतिं प्रपञ्चयद्भिः, विस्मयस्मेरदृष्टिभिरनेकप्रकारमभिनन्द्यमानः परां मुदमधत्त । प्रस्तुतकथाविच्छेदे च तैः प्रवर्तितो गृहगमनाय किमपि ध्यात्वा तिर्यग्वलितदृष्टिरनतिदूरोपविष्टमनुल्बणोदारवेषाकारधारिणं महोदधिनामानं प्रधानरत्नाध्यक्षमैक्षत । ससंभ्रमोपसृतं च तं विनयवामनीकृतदेहायामं वामपाणिस्पृष्टवसुधातलमितरकरधृतोत्तरीयपल्लवप्रान्तमुद्रितमुखमुन्मुखेक्षणं सादरमवदत्—'भद्र, चन्द्रातपाभिधानोऽयं हारः प्रतिदिवसमर्चनीयानां चिन्तामणिप्रभृतीनां प्रधानरत्नानां मध्यवर्ती कर्तव्यः । अयमपि बालारुणाख्यो दिव्याङ्गुलीयकालंकारः स्वमर्यादातिवर्तिनां दुष्टसामन्तानां दमनाय दक्षिणपथमधितिष्ठतो वज्रायुधस्य प्रस्थापनीयः । वक्तव्यश्च तत्प्रधानप्रणयी विजयवेगः—एष यामिनीयुद्धेषु विषमशक्रसैन्यसंनिरुद्धस्य वज्रायुधस्य पाणिप्रणयितां त्वया नेतव्यः ।' 'तथा' इति तेनाङ्गीकृतादेशश्चोत्थाय तैः प्रधानराजलोकैः परिवृतः प्रवर्त्यमानकुलदेवताविशेषपूजम् अभ्यर्च्यमानमुनिजनम् आरभ्यमाणगुरुभक्तिगौरवम् आराध्यमानचिन्तामणिगणम् आरभ्यमाणदिग्देवताबलिकर्मक्रमम् क्रियमाणदीनानाथलोकशोकोच्छेदम् आरब्धनिर्विच्छेदसांतानिककर्मकाम्यक्रतुशालम् आगृहीतकनकभृङ्गारेण हरितकुशगर्भपाणिना पुरोहितेन तत इतः प्रकीर्यमाणशान्त्युदकशीकरम् उप-

कल्प्यमानपञ्चमीश्राद्धम् अधिगतविविधपूजाप्रीतमानसैर्द्विजन्मभिः शत्रुमण्डपाजिरमण्डलकसंनिधावाबद्धमण्डलैर्मन्त्रोच्चारविरतौ युगपद्धुष्यमाणनृपतिसंतानोदयम् अहरहः श्रोत्रियविश्राणनार्थमाह्रियमाणानां कुण्डपरिमण्डलाम्नीनां गवामुत्कर्णतर्णकानुसृताभिः परम्पराभिरापूर्यमाणबाह्यकक्षान्तरम् आघ्रातधूपपरिमलाधिष्ठाभिरनेकभङ्गिभिः कृताङ्गभङ्गाभिराभङ्गुरभ्रुकुटिभीषणमुखीभिरग्रतो विनयविरचिताञ्जलिना राजकुलवृद्धाजनेन किं किमित्याकुलाकुलमापृच्छ्यमानाभिः क्षुद्रप्रव्रजिताभिरभिलषितवस्त्वनुगुणैर्वचोभिराश्वास्यमानपरिजनम् उपनीतकुसुमफलताम्बूलेन पुरोवर्तिना नृपतिज्ञातिलोकेन होराकृष्टिषु नियुञ्जानेनाङ्गुष्ठकादिप्रश्नं प्रति प्रवर्तयता कर्णपिशाचिकाविधानेष्ववधापयता दृष्टशुभस्वप्नफलानि पृच्छता दिवानिशमुपास्यमाननैमित्तिकम् अवितथादेशसामुद्रविदाख्यातप्रसवलक्षणानां क्षोणिपालकन्यानामुद्वाहनाय राज्ञः प्रणयिलोकैः प्रवर्त्यमानामात्यम् अवधीरितापरकथेन स्थानस्थानेषूपविष्टेन देशकालान्तरितनरेन्द्रपरिज्ञानानि प्रशंसता विवक्षितपुरुषफलावाप्तिदृष्टान्तैरभीष्टदेवतासेवाप्रभावमुद्भावयता निरपत्यपूर्वनृपतिपुत्रलाभोपायप्रधानाः पौराणिककथाः प्रस्तावयता देवद्विजप्रसादादिहापि सर्वं शुभं भविष्यतीति प्रकृते योजयता राजलोकेनातिवाह्यमानदिवसम् आप्तोपदिष्टदृष्टप्रत्ययौषधपानप्रसक्ताभिः स्निग्धमधुराभ्यवहारिणीभिरनल्पगुणोपेतम् अपेतदोषैरपि वज्रमणिभिर्वर्जितं जात्यरत्नजातमाभरणकलापार्पितं कलयन्तीभिर्वक्रतादिदोषवन्ध्यानि श्रद्धाप्रवणेन चेतसा ज्ञातीनां द्विजातीनां च गृहेषु प्रशस्तफलानि प्रहिण्वतीभिर्लक्षणाभिज्ञतया गृहीतवामकरतलाङ्गुष्ठमूलस्थूलरेखासंख्यानां सखीनां मुहुर्मुहुः श्रुतेन श्रुतिसुखेन वचसा स्मयमानमुखमृगाक्षीभिः प्रथमालापजिघृक्षया

च देव्याः पुत्रो भविष्यति न वेति संनिधावेव परिचारिकाभिरनुयुज्यमानाप्रगल्भशिशूनां भीतभीतेन मनसा वचनमाकर्णयन्तीभिरुज्झितान्यकर्तव्येन वृद्धसंप्रदायागतानि विविधौषधानि प्रयुञ्जानेन महानरेन्द्रलिखितानि मन्त्रकण्डकानि बध्नता दृष्टप्रत्ययप्रतीतपरिव्राजकोपदिष्टनीत्या स्नपनमङ्गलानि प्रवर्तयता शुद्धान्तजरतीजनेन शश्वत्क्रियमाणगर्भग्रहणोपचाराभिः पुत्रकाम्यन्तीभिरन्तःपुरकामिनीभिर्विधीयमानविविधव्रतविशेषम् पञ्जरशुकैरपि प्रस्तुतवादिभिर्बन्दिभिरिवोच्चार्यमाणमङ्गलम् अन्तःपुरसारिकाभिरपि परिमितव्याहारिणीभिराराध्यजरतीभिरिव वितीर्यमाणराजवनिताशीर्वादम् अर्भकैरपि विनयनिभृतैः प्रवीणपुरुषैरिव निवार्यमाणक्षुद्रदासीपरस्परकलहम् सर्वतश्च प्रशान्तेन शुचिना शुद्धवेषधारिणा परिजनेनाधिष्ठितम् उत्साहमयमिव प्रयत्नमयमिव श्रद्धामयमिव विनयमयमिवाचारमयमिव राजकुलमव्रजत् ॥

तत्र च समाहृतसमस्तोपकरणेन परिजनेन यथाविधि विहितमज्जनोपचारः सकललोकाचारकुशलाभिः ससंभ्रममितस्ततो विचरन्तीभिर्वारवनिताभिः कृतावतारणकमङ्गलः क्षणमात्रं विलम्ब्य ताम्बूलकर्पूरातिसर्जनविसर्जितपुरोधःप्रमुखमुख्यद्विजाति 'उत्तिष्ठत । व्रजामो देवतायतनेषु' इत्यभिदधानः संनिधानभाजं प्रणयिजनमासनादुत्तस्थौ । अनुत्थितासन्नराजलोकपरिवृतश्च तत्कालमेकहेलयोच्छलितेन संमूर्छिता दिगन्तरेषु मुहुर्मुखन्यस्तकरतलप्रतिस्फलनविस्फारितनिनादानां बन्दिनां जयशब्दकलकलेन कथितनिर्गमो द्विजावसरमण्डपान्निर्जगाम ॥

सत्वरनिषादिढौकितकरेणुकारूढश्च पश्चादधिरूढेन ताम्बूलकरङ्कवाहिना विधूयमानचामरः पुरःप्रधावितोर्ध्वीकृतकनकवेत्रप्रतीहारनिर्दिश्यमानमार्गेण गृहीतविविधहेतिना पदातिनिवहेन विराजमानः पृष्ठतः प्रप-

लितेन च संभ्रमोत्तालगतिना गन्धोदकक्षीराज्यदधिभृतः शातकुम्भकुम्भानुद्वहता जलार्द्रकर्पटावगुण्ठितविचित्रकुसुमदामगर्भान्वेत्रकरण्डकान्कलयता मलयजकाश्मीरकृष्णजाकृष्णागुरुकर्पूरपूर्णानि रत्नभाजनानि बिभ्रता स्कन्धदेशारोपितांश्च विचित्ररूपान्महार्हवस्त्रभारकान्धारयता गृहीतशस्त्राप्तपुरुषाधिष्ठितेन प्रेष्यलोकेनानुगम्यमानो राजकुलान्निरगच्छत् । गत्वा च शक्रावतारे प्रथममेव विहितपूजासत्कारो नगरदेवतायतनेषु सर्वेष्वानुपूर्व्या विचचार । चिरदर्शनादभिनवीभूतकौतुकस्य चास्य यदृच्छया पुरप्रासादसुरसदनकूपोद्यानवापीसहस्रसंकुलामकाल एव प्रकटितोत्सवैः पौरलोकैः प्रतिभवनमुत्तम्भितानेकरागवस्त्रध्वजप्रभाविस्तारितापूर्वसंध्यामयोध्यां पुरीं पश्यतः, क्वचिददर्शनादुन्मनीभूतमानसं मान्यमृषिजनं गत्वा तदाश्रयेषु दर्शनेनानन्दयतः, क्वचिदुत्थाय सादरमग्रतः कृतनमस्काराञ्जलिबन्धान्नगरवृद्धान्सगौरवमालपतः, क्वचित्सितकुसुमदामदर्शनपुरःसरमावेदितनिजप्रयोजनद्विजातिजनमवधानदानेनानुगृह्णतः, क्वचिद्दर्शनपथावतीर्णेषु शीर्णदेवतायतनेषु कर्मारम्भाय सपदि संपादितपूजासत्कारान्सूत्रधारान्व्यापारयतः, क्वचिदासन्नसेवकनिवेदितदानविच्छेदासु दानशालासु दीनानाथपथिकसार्थस्य सविशेषमन्नपानशयनौषधादिदानमधिकृतैः प्रवर्तयतः, क्वचित्स्वखानितेषु सरःसु तटरोपितानां वयस्वच्छादिविटपिनां पालनार्थमुद्यानपालानुद्यमयतः, मार्गघटितं च सूक्तवादिनं दरिद्रयाचकसार्थमर्थसंभारेण भूरिणा कृतार्थीकुर्वतः, तीव्रतिग्मांशुकरनिपातोपतापितः स्वदुःखमाचिख्यासुरिव प्रत्याससाद मध्याह्नसमयः । सबलमुद्धृतहरित्कुशेन प्रातरेव धवलितोदयाचलद्रुमशिखरमवचित्य तारकाकुसुमविसरमुल्लसितेन मन्दमन्दपदक्रमेण प्रेर्यमाणस्यन्दनो नाकमन्दाकिनीस्नानमिव संप्रधार्य मनसि विहायसो मध्यमध्यारुरोहाम्बुरुहिणीनाथः ॥

क्षितिपालशिथिलितकरग्रहाः खेदनिःश्वासानिव समुत्स्रष्टुमुष्णानन्भस्वतः स्वैरास्वैरमारेभिरे ककुभः। तरुमूलदृश्यमानश्यामपरिमण्डलच्छायावल्याचलवदातपदाहविच्छेदाय देहनिहितार्द्रपद्मिनीदला इवालक्ष्यन्त नगरोपान्तवनभुवः। पर्याकुलितपर्यन्तगृहनिवासिगणिकाजनाः संवेदना इव सुरगृहाङ्गणेषु रे सुरतश्रान्तदेवलकवदनवातनिर्भराध्मातकुक्षयो विशृङ्खलं घूपवेलाशङ्खाः प्रभिन्नशङ्खक्षरन्मदासारसिक्तराजपथाः प्रतस्थिरे जलावगाहाय। सलयमग्रतः प्रहतपटुमृदङ्गपटहाः पट्टहस्तिनः कपाटदारुपाशकनिर्दयास्फालनवाचाला निग्रहोन्मुखापणिकसंवृतपण्यासु विपणिवीथीषु प्रत्यापणद्वारमघटन्त कालायसतालकानि। क्रमेण च कठोरतां प्रपन्ने दिवसतारुण्ये किंचिदुपरतपौरकोलाहलायां नगर्यां विनिर्गतग्रामलोकस्तोकसंगमेषु शृङ्गाटकेषु प्रहृष्टजरठच्छात्रसत्वरोच्चार्यमाणग्रन्थादिग्रथितदेवतास्तुतिश्लोकासु, वन्दिताचार्यचरणशिष्यगणसंध्रियमाणनिजनिजपुस्तकासु, क्षणमात्रप्रवृत्तयदृच्छालापरमणीयासूत्तिष्ठन्तीषु विद्यामठव्याख्यानमण्डलीषु, अनुचरगृहीततैलामलककङ्कतेषु प्रस्थितेषु स्नानाय सरयूतटानि तिलदर्भपत्रिकापूर्णपत्रपुटपवित्रपाणिषु श्रोत्रियेषु न्यञ्चच्चञ्चुशकुनिपीयमाननिम्नविश्रान्तसारणिजलासु, विरतारघट्टक्रमसमुच्छ्वसत्सलिलमज्जत्सोपानासु गृहकर्मविरताभिर्गेहिनीभिरवगाह्यमानासु भवनवापीषु तृषितकलविङ्कचक्रवालाकुलितपर्यन्तेषु घूर्यमाणेषु द्विजकुमारिकाभिः कुटजलेन निष्कुटलतामण्डपावलम्बिषु प्रपिकाकर्परेषु करार्पितोन्मृष्टतारताम्रभाजनासु दिवसलक्ष्मीष्विव सभास्वन्मण्डलासु हिण्डन्तीषु देवतायतनमण्डलेषु विमलाम्बरधरासु वृद्धासु भर्तृसंध्योपासनोत्सुकासु गृह्णन्तीष्वभ्यु(?)क्षणमनुक्षणावलोकितगलन्तिकामूलसंगलज्जलकणासु द्विजातिगृहिणीषु गृहाभिमुखतरुशाखासीन-

वायसकुलावलोकितबलिषु हूयमानेषु वैश्वदेवानलेष्वध्ययनमुखरेष्वितस्ततो भ्रमत्सु गृहपतिभवनवनखण्डभ्रमरेषु भिक्षाचरेषु प्रवातपट्टशालावलम्बितपञ्जरे पाकपिञ्जराणि कलयति तरुफलानि संवृतालापे शुकसारिकाकलापे निवृत्तरसवतीधूमेषु समुपलिप्यमानाजिरभूमिषु प्रक्षाल्यमानासनेषु मार्ज्यमानकांस्यरजतादिभाजनेषु भोजनशालासंचार्यमाणविविधाहारपाकेषु प्रतोलीशिखराधिरूढे पुरोहितपरीक्ष्यमाणाध्ययनमुखरोन्मुखद्विजेषु सर्वतः संवृतेषु सत्रिणां भवनेषु भूमिपतिरवलोकिताभिमतनगरीप्रदेशः समासादितावसरैः श्रवणमूलमागत्य मध्याह्नकृत्याय प्रवार्तितो मागधश्लोकैरधिकृतैश्च राजलोकैः प्रववृते शनैः शनैः स्वनिवासमागन्तुम् । अवहिताधोरणचालितवारणश्चोर्ध्वीकृत्य विधृतेन तत्कालमाक्रान्तचूडामणिं दिवसमणिमदृष्टपूर्वमाराद्द्रष्टुमागतेन पौर्णमासीहिमगभस्तिनेव निवारितललाटंतपातपःशिलातपत्रेण हयखुरोद्धूतरथ्यारेणुधूसरितनेपथ्यैरातपम्लानमौलिदामभिः सर्वतोऽनुगम्यमानो नृपतिभिरुपर्युपरि संदानितानेकवन्दनमालमूर्ध्वविधृतवेत्रयष्टिभिः प्रथममेव सत्वरप्रविष्टैरितस्ततः प्रहितदृष्टिभिर्द्वारपालैर्निरीक्षिताशेषकक्षान्तरमन्तरिक्षोल्लेखिभिरनेकशतसंख्यैर्येषां सितप्रासादैः सर्वतः समाकुलं राजकुलमाससाद ॥

द्वारदेशे च तस्य विधृतवाहनस्तिमितमावासगमनाय तिर्यगुन्नमितमुखसंज्ञया प्रस्थाप्योभयतः पार्थिवसमूहमन्तः प्रविश्य द्वितीये द्वारे वारणादवततार । निवारितपरिवारलोकश्च द्वारपालैः परिमिताप्तराजपुत्रपरिवृतश्चरणाभ्यामेव गत्वा मध्यमां मण्डपिकां तन्मध्यभागे तत्क्षणोपलिप्ताया निरन्तरक्षिप्तसरसपुष्पप्रकरसुरभेरास्थानवेदिकायाः पृष्ठभागे प्रतिष्ठापितमुभयतः संयोजितमृगाङ्कमणिदारुनिर्मितोदारमन्तर्वारणकम-

नुपृष्ठमाहितोच्चकाञ्चनपीठमीषज्जरठकुमुदगर्भदलावदातमच्छधवलधौतपट्टांशुकपटाच्छादितं दन्तपटमध्यास्त । व्यपास्तसकलविहारकालकल्पितवेषः प्रक्षालितचरणपल्लवश्च परिचारकगणेन सत्वरोपसृतधृतकरककिंकरावर्जितेन शिशिरवारिणा प्रक्षाल्य बलसंक्षोभधूलिधूसरश्रमस्वेदलवलेखं मुखेन्दुमग्रतः स्थापिते मणिपतद्ग्रहके प्रक्षिप्य कतिपयानुदकगण्डूषानुपस्पृश्य परिमृज्य चाभ्यग्रहस्तसाटकग्राहिसत्वरोपढौकितेन वस्त्रपल्लवेन सहस्तपल्लवं वदनमादरगृहीतजलार्द्रतालवृन्तेनान्यतमपरिचारकेण मन्दमन्दमुपवीज्यमानो मुहूर्तमिव स्थित्वा द्वारदेशस्थकटुककटुरवाकृष्टधावमानसंभ्रान्तवारिकम्, उत्सारितक्लान्तपुष्पवलिनलिनायमानकुट्टिमोत्सङ्गम्, अङ्गणोपान्तपुञ्जीभूतभूरिभुञ्जानकलोकम्, औत्सुक्यतरलारालिकश्रेणिसंचार्यमाणानेककाञ्चनस्थालीसहस्रम्, आदरव्यापृताक्षपौरोगवनिरीक्ष्यमाणक्षुद्रपरिजनप्रवेशनिर्गमावस्थानम्, अनिलताडितोद्दण्डकाण्डपटकप्रस्तुताकाण्डताण्डवम् आहारमण्डपमयासीत् ॥

तत्र विविधवितीर्णविततरत्नस्थालशतशबलितक्षितितले नृपासनासन्ननिषण्णभिषजि संनिधापितशुकसारिकाचकोरक्रौञ्चकोकिलप्रमुखपत्रिणि तत इतः प्रेङ्खदरुणसुकुमारपाणिपल्लवाभिः कल्पलताभिरिव संचारिणीभिश्चित्ररत्नाभरणदिव्यांशुकधराभिर्वाररमणीभिरुपनीयमानमनोभिलषितानेकभक्ष्यपेयप्रकरो यथास्थानमुपविष्टेन प्रधानपार्थिवगणेनान्येन च प्रणयिना राजलोकेन परिवृतः कुर्वन्नन्तरान्तरा सह सुहृद्भिर्नर्मभोजनकर्म निरवर्तयत् । उपस्पृश्य च समाघ्रातधूपधूमवर्तिरुद्वर्त्य दूरं कर्पूरमृगनाभिसंभेदसंभृतामोदेन घ्राणेन्द्रियानन्दिना चन्दनद्रवेणाग्रहस्तो गृहीत्वा च ताम्बूलमप्रतिकूलभाषिभिरशेषकलाशास्त्रकृतपरिचयैः परचित्तविद्भिः सुहृद्भिरनुगम्यमानो गन्धसलिल-

च्छटासेकशिशिरीकृतसकलभित्तिक्षणापतत्पवनपुञ्जगुञ्जन्मणिगवाक्षगुञ्जामपराह्णरम्यामावासहर्म्यशिखरप्रान्तवर्तिनीं दत्तवलभिकामगच्छत्॥

तत्र च सितस्वच्छमृदुदुकूलोत्तरच्छदमुदग्ररत्नप्रतिपादुकप्रतिष्ठमुभयपार्श्वविन्यस्तचित्रनेत्रगण्डोपधानमध्यासितविशालमणिशिलावेदिकाङ्कं विद्रुमदारुपर्यङ्कमधिशयानस्तत्कालसेवागतैर्गीतशास्त्रपरिज्ञानाय दूरारूढगर्वैर्गान्धर्विकोपाध्यायैः सह वेणुवीणावाद्यस्य विनोदेन दिनशेषमनयत्। अस्तशिखरपर्यस्तमण्डले च तरणावुत्तीर्य कृतसकलसांध्यकृत्यो विधाय देवतासपर्यामागृहीतविकटशृङ्गारवेषो घटितपरिवेषैः सर्वतः परिवृतो वृतासिपट्टप्रभापटलपोषितप्रदोषतिमिरैः शरीररक्षाविधावधिकृतैर्वीरपुरुषैर्द्वारदेशोपविष्टसोपायनानेकप्रधाननगरलोकमनेकभङ्गरचितरङ्गावलीतरङ्गितमसृणमणिकुट्टिमोत्सङ्गमविरलप्रकीर्णपुष्पप्रकरमखिललोकप्रार्थनीयसंगमाभिर्मर्त्यलोकलक्ष्मीभिरिव राजलक्ष्मीं द्रष्टुमेकहेलयोपगताभिरनर्घ्यरत्नाभरणभूषिताङ्गयष्टिभिर्वारयोषाभिरापूर्यमाणपर्यन्तं क्वचित्सुखासीनसचिवपुत्रविचार्यमाणनव्यकविनिबद्धकाव्यगुणदोषविभागं क्वचिदाबद्धमण्डलीकवैपञ्चिकप्रपञ्च्यमानललितपञ्चमग्रामरागं क्वचिद्वाञ्छिताधिकारसेवकचारपरिवार्यमाणविकटवेत्रासनोपविष्टप्रधानसचिवं क्वचिल्लिख्यमाननिःसंख्यराजाज्ञालेखमुद्रासिन्दूरपूरारुणीकृतदिवं यत्र क्वचिच्चतुरपरिहासरञ्जितराजगणिकाकटाक्षकणकृतार्थीकृतपूर्वसंसृष्टविटसामन्तं क्वचिददानरुष्टदुष्टप्रतीहारहठनिर्धार्यमाणरोषदष्टौष्ठकण्ठव्रातं सर्वतश्च प्रकटिताहंकारैः परुषहुंकारवित्रासितजनैरुद्धतांस्तर्जयद्भिर्मान्यलोकं कृताञ्जलिपुटैरावर्जयद्भिरूर्ध्वस्थितानुपवेशयद्भिरनुपयुक्तान्निष्काशयद्भिरधिकृतान्स्वकर्मसु व्यापारयद्भिर्वावदूकानमूकव्रते धारयद्भिर्महाप्रतीहारैः कृतावेक्षणं द्वारदेशादपक्रान्तसकलपदातिपरिवारैरल्दंशुमणिमुकुटभास्वर-

शिरोभिराखण्डलच्छिन्नपिच्छैर्गिरिभिरिव शिखरदीप्यमानवज्राग्निभिरि-तस्ततो निषण्णैरेकैकानुचरकृतसाहायकैर्महादण्डनायकैरध्यासितमध्य-मतिभूयस्तया च राजलोकस्य कृच्छ्रलभ्यनिर्गमप्रवेशावस्थानमास्थान-मण्डपमगच्छत् ॥

तत्र च नृपतिर्देवताराधनव्यतिकरेण चिरकाललब्धावसरमतिदूर-दर्शितादरैः प्रधानदौवारिकैः प्रविश्य प्रविश्य प्रत्येकशः कारितप्रणा-मसुपनीतविविधोपायनकलापं द्वीपान्तरायातमवनीपतीनां प्रधानप्रणधि-लोकमवलोकनासनदानसंभाषणादिना यथोचितं प्रयुक्तेनोपचारेण पूजयित्वा स्थित्वा च क्षणं विसर्जितस्थानलोकः स्तोकशुचिसमाचार-परिचारकपरिवृतः सर्वतः कृतालोकेन पुरतः प्रसर्पता गतिरभसदोलाय-मानकज्जलस्निग्धनीलशिखाकलापेन दीपिकानिवहेन वेत्रधारीसमूहेन च समकालमावेद्यमानवर्त्मा शुद्धान्तमगच्छत् ॥

तत्र चाविरलविप्रकीर्णपुष्पबलिशबलितातिमसृणमणिकुट्टिमे विकट-पत्रभङ्गविचित्रचामीकरस्तम्भविरचिताचारुण्यपरिविस्तारिततारनेत्रपटवि-ताने वितानकप्रान्तलम्बमानलोलमुक्तास्रजि ज्वलद्रत्नप्रयष्टिप्रदीपप्रक-टितप्रशस्तभित्तिचित्रे सुकल्पिताचरणतल्पतलोपशोभिनि शय्याशिरो-भागनिहितधौतकलधौतनिद्राकलशो विशालवेश्मनि कृतावस्थानां निवर्तितनिरन्तराहारग्रहणेन निगृहीतवृत्तिना सकलराज्यसुखोपभोगे-ष्वतिदुष्करेण व्रतचरणेन भर्तुरदर्शनेन च प्रकामकर्शितशरीरामुज्झिता-लंकारामप्यकृत्रिमेणकान्तिसुकुमारतादिगुणपरिगृहीतेनाङ्गमाधुर्येण सुक-विवाचमिव सहृदयानां हृदयमावर्जयन्तीं ज्योत्स्नावदातनिर्मलाम्बर-धारिणीं राकारजनिमिव वारंवारमविगताधिकविकाशसंपदा मुखेन परिपूर्णमिन्दुमण्डलं तुलयन्तीमुपनीतविविधवस्त्राभरणमुत्सवागतं बन्धु-

वनितावर्गं सहस्रगुणमूल्यैरंशुकै रत्नालंकारैश्च संभावयन्तीं शक्रावतारगमने सबहुमानेन, वैमानिकदर्शने सविस्मयेन, दिव्यहाराङ्गुलीयकालंकारलाभे सपरितोषेण, वैतालरूपाद्यावर्णेन सत्रासेन, कण्ठच्छेदसमये समासादितमूर्च्छेन, राजलक्ष्मीनर्मभाषितश्रवणे सहासोल्लासेन, भाविखेचरचक्रसाम्राज्यसुतवरप्राप्त्यवसरे समारूढपरमानन्दनिष्पन्देन मनसा, पार्श्ववर्तिपरिजननिवेद्यमानं पत्युरतिक्रान्तयामिनीवृत्तान्तमाकर्णयन्तीमनतिदूरवर्तिनीभिः संनिधापितसितकुसुमदामदूर्वाक्षतदधिलवाभिरमलकाञ्चनस्थालविनिहितोच्छिखज्वलत्पिष्टमयमङ्गलप्रदीपाभिः प्रत्यग्रविरचितचतुष्कचारुणि मणिवितर्दिकापृष्ठपीठे प्रतिष्ठापितविततहेमपट्टाभिर्मुहुर्मुहुर्द्वारदेशप्रहितलोचनाभिः प्रतिपालयन्तीभिः क्षोणीपालागमनमतिरुचिरवेषाभिरन्तःपुरविलासिनीभिः परिवृतां मदिरावतीमद्राक्षीत् ॥

दृष्ट्वा च दूरविकसितस्मितार्द्रदृष्टिस्तां ससंभ्रमकृताभ्युत्थानां करे गृहीत्वा तत्र मणिवेदिकापृष्ठवर्तिनि समीपोपविष्टैर्युगपदुत्थाय विहितप्रणामैः प्रधानान्तर्वंशिकैः सादरमुपदर्शिते स्पर्शवति हेमविष्टरे न्यवेशयत्। उपविष्टश्च दक्षिणं पार्श्वमाश्रित्य तस्याः क्रमेणैताभिः सकललौकिकाचारकुशलाभिर्वारवनिताभिः प्रयुक्तमवतारणकमङ्गलमन्वभवत् ॥

अथ पुरोहितपुरःसरेषु विहितसायंतनस्वस्त्ययनकर्मस्वपक्रान्तेषु प्रमोदसलिलप्लुतेक्षणासु दत्त्वा कृतानुदीरिताशीर्षु निर्गतासु बान्धववृद्धासु प्रस्थितेषु यथा स्वमधिकारसदनानि सौविदल्लेषु प्रारब्धपरिहासपेशलकथासु स्थित्वा मुहूर्तमपसृतासु सव्याजं प्रियसहचरीषु प्रकटिताङ्गरागशुक्तिषु प्रमृष्टमणिदर्पणासु समुत्सर्पितविलासदीपवर्तिषु संनिधापितकुसुमपटवासताम्बूलरत्नालंकारपटलकासु निर्यातासु शुद्धान्त-

शय्यापालिकासु विविक्ततामुपगते द्वारकपाटसंघटनघनविसर्पदगरु-घनसारधूपोद्गारसौरभे वासभवने भूमिपालस्तिर्यगावलितकण्ठकाण्डेन वदनपुण्डरीकेण प्रत्यवयवं विलोक्य स्पृष्ट्वा च करतलेन मन्दमन्दमानन्दनिर्यत्पुलककलिकाकोरकितानि मदिरावतीगात्राणि किंचिदाकुञ्चितेक्षणः सकृप इव खिन्नाक्षरोद्गारं शनैर्व्याजहार—'देवि, दृढमायासितासि । मयैव गाढकृतनिश्चयेन त्वदर्थसिद्ध्यर्थमध्यवसिते देवतासमाराधनविधौ किमिति निष्कारणमियन्ति वासराणि प्रकृतिकर्कशजनोचितैर्व्रतकर्मभिः कदर्थितोऽयं सततसुखोचितस्त्वयात्मा । किमर्थमेषा मदङ्कशय्याशयनलालिता ललिताङ्गिशायिता निरावरणासु स्थण्डिलस्थलीषु स्थलारविन्दकेसरसरससुकुमारा काययष्टिः । किमिति निर्दये निसर्गपेलवं मध्यभागमनुदिवसमुपवासैः कर्षयन्त्याकृतप्रकृतिकर्कशस्यास्य कुंचयुगलस्य साहाय्यकमहो ते बालिशत्वम्, अहोऽनालोचकत्वम्, अहो यदृच्छाकारिता ।' इत्यभिधाय सत्वराकृष्टसंनिकृष्टविलासोपकरणपटलकः सविलेपनां सालंकारां सतिलकां सावतंसां सशेखरां स्वकरेण तां चकार ॥

दृष्ट्वा च विरतनिमेषया दृष्ट्या सुचिरमतिचारुणा तेन वेषग्रहणेन तैश्च तत्कालमाविर्भूतैः प्रियप्रेमातिशयजन्मभिः स्मरविकारैर्द्विगुणतररम्यदर्शनां सुदृढमाश्लिष्य शयनीयमनयत । तत्रैव च तया सह सुष्वाप । स्वल्पावशेषायां च क्षपायामधोमुखविषाणकोटिनोर्ध्वचरणेन लाञ्छनमृगेण विधृतमूलाग्रभागव्यत्यये व्रजत्यस्तमस्ताचलचकोरकामिनीमन्दमन्दावान्तविच्छायविरसचन्द्रिके चन्द्रमसि प्रतिवेलमुन्नतनतशिखेषु तत्क्षणमुदयमानमरुणमिव वातायनान्तरेणावलोकयत् ।

१. कृशे मध्ये सति कुचयुगस्यातीव स्थूलत्वमिति भावः. २. उपभुक्त.

मुनिजप्रभापहारभीतेषु वासभवनप्रदीपेषु प्रभातपरुषमारुताहतासु तनुतमिस्रच्छेदपल्लवकृतनिवेशमवश्यायजलबिन्दुजालमिव नक्षत्रनिवहमजस्रमुज्झतीष्वाशालतासु पर्यायविघटमानाष्टदिग्भागदलं विकटायमानकुक्षिकोटरमरविन्दमिव मधुपक्षदिग्वेष्वलिकुलेषु गगनमपहाय तत इतः प्रयात्सु संध्यारागरञ्जितेषु रजनीतमःसु राजा। राजतगिरिशिखरमधिरूढायाः श्वेतवसनस्रग्विलेपनालंकारकमनीयमूर्तेर्मदिरावत्याः शैलराजदुहितुरिव हेरम्बमम्बरादवतीर्य पुरःस्थितमपारपरिमलान्धैः सर्वतो निपतद्भिरश्रान्तझङ्कारमुखरिताशामुखैरहमहमिकया विलुप्यमानकपोलमदवारिनिर्झरमलिकुलैः कुचकुम्भविन्यस्तविकटपुष्करेण करेणाकृष्याकृष्य स्तन्यमापिबन्तं स्वप्ने सुरेन्द्रवाहनं वारणमपश्यत्। उपशान्तनिद्रश्च मङ्गलतूर्यनिर्घोषेण सप्रहर्षमुत्थाय प्रथमतरमुत्थितायाः 'देवि, संपन्नास्ते गुरुजनाशिषः। प्रसन्ना समासन्नैव देवी राजलक्ष्मीः। भविष्यत्यशेषभूभृच्चक्रचूडारत्नमचिरेणैव सूनुः।' इत्युदीर्य प्रकटितादरो मदिरावत्याः स्वप्नमाचचक्षे। सापि बद्धावधाना सविस्मयव्रीडमवनतेन शिरसा तमश्रौषीत्॥

आनन्दभरविजृम्भमाणोद्दामपुलकोपचितसर्वावयवा च प्रतिपन्नेव सद्योगर्भेण द्विगुणमुपजातशोभा तत्क्षणमजायत। स्थित्वा च किंचित्कालमुपस्थिते च राज्ञि निर्गत्य रतिगृहाद्यथाक्रियमाणमुचितव्यापारमन्वतिष्ठत्। अनतिबहुषु च व्यतीतेष्वहस्त्वनन्तरोज्झतौ स्नाता शरद्दिवसकरमूर्तिरिव भास्वरं तेजो बभार गर्भमुदरेण। निवृत्तरजःसङ्गापि पाण्डुतामगच्छत्। चलितुमसहापि खेलालसपदन्यासमकरोत्। दधत्यापि तनुतातानकमुपचिता बभूव गात्रयष्ट्या। कृष्ण-

१. खण्डा एव. २. संध्यारुणत्वान्मधुपक्षदिग्वत्त्वम्. ३. दिवि लालसलम्पटपदः, खेला क्रीडा तयालस. ४. श्यामेन तारकेणोचितां युक्ताम्.

तारोचितामपि क्षीरधवलामधत्त दृष्टिम् । तथा च प्रकृतिमन्दापि तस्या गतिरमन्दायत । पीनापि जघनमण्डली पीनतामभजत । सततमात्मनाधः कृतस्य मध्यस्य गौरवं पश्यन्तौ श्लथत्वमासेदतुः दयितनिर्दयाश्लेषसुखरसस्य च स्मरन्तौ शुचेव श्याममुखतां जग्मतुः स्तनौ । प्रवृद्धयोश्च काममनयोः स्वेन रूपेण भारमुद्वोढुमक्षमेव क्षामतां मुमोच मध्यलक्ष्मीः । अनपत्यतादर्शनदुःखतप्तां निर्वापयितुमिव बन्धुतामायताः प्रसस्रुः पदन्यासेषु निःश्वासाः । प्रतिदिवसमुपचीयमानगर्भा च सा सकललोकाश्चर्यकारिणोऽभिलाषविभ्रमानभृत । तथा हि—वासभवनाङ्गणभ्रमिषु खिन्नाशरदात्प्रसन्ने मानससरःपयसि ससखीजना स्नातुमियेष । मध्यंदिननिदाघजनिता उत्कण्ठायल्लका पल्लवितकल्पपादपलताकुलेषु कुलगिरिनितम्बारामेषु रन्तुमभिललाष । विबुधवृन्दपरिवृता शाश्वतेषु सागरान्तरद्वीपसिद्धायतनेषु सांध्यमारब्धमप्सरोभिः प्रेक्षानृत्यमीक्षितुमाकाङ्क्षत् । अग्रतः प्रपञ्चितविचित्राख्यानकेन श्रव्यवचसा कथकनारीजनेन विविधं विनोद्यमानापि दिव्यकथासु कर्णं ददौ । विधृतविकोशपुष्करेण तथा निजकरे यथा सुभटनिकरे दृष्टिमनयत् । [1]अपास्तरणपरिकरं प्रकामगुणवन्तमपि भृत्यलोकं पर्यङ्कमिव [2]सावज्ञमैक्षत । सर्वदिग्व्यापिना पत्युरपि प्रतापेन समतप्यत । प्रह्वीकृताशेषभूभुजा गुरुजनस्यापि गौरवेण ग्लानिमगमत् । अप्रणयिनापि प्रार्थिता सर्वस्वमदित । कृतापकारेऽपि करुणापरा प्राणिनिवहे बभूव ॥

पूर्णेषु च क्रमेण किंचित्सातिरेकेषु नवसु मासेषु सारतिथिवारकरणाश्रितेऽतिश्रेयस्यहनि पुण्ये मुहूर्ते यथास्वमुच्चस्थानस्थितैः कौतु-

---

१. अपगतप्रस्तरण. २. गर्भालसत्वाद्भृत्यवर्गेऽवज्ञा.

क्वादिव शुभग्रहैरवलोकिते विशुद्धे लग्ने, लग्नचारुतादर्शनजातपरितोषायामिवोर्ध्वमुख्यां होरायामग्रत एव जातेन सहितमखिलप्रजाप्रमोदेनाद्वितीयरूपमजनयत्तनयम् । उत्पन्नमात्र एव च कार्यान्तरनियन्त्रितोऽप्यननुपालितपरस्परसरभसपदन्यासरणितनूपुरैः पुत्रजन्म स्वयमाख्यातुमुत्सुकैरिव पुरः पुरोभवद्भिः पादपल्लवैः प्रकटितसंभ्रमः पूर्णपात्रग्रहणाय भूमिपालाभिमुखमचलत । सकञ्चुकिकिरातकुब्जकल्लमूकवामनोऽनेकशतसंख्यः शुद्धान्तवारस्त्रीजनः प्रमुदितपौरजनजयजयारावपीवरः प्रतिभवनमाहतानामसंख्यकाहलाशङ्खझल्लरीमुरजपटहानामनुसृतः पटीयसा झात्कृतेन वादित्राणामाह्वयन्निव नर्तनाय व्योम्नि वैमानिकवधूवृन्दमाकारयन्निव महोत्सवालोकनाय दिक्षु लोकपालपरिषदमादिशन्निव रङ्गावलीयोग्यरत्नानयनाय पृथ्वीतलोपान्तेषु पाथोनिधीन्बभ्राम । मथनभ्रान्तमन्दरविघूर्णितमहार्णवध्वानघर्घरो जगति नान्दीघोषः । प्रसर्पन्नितस्ततः प्रस्तुतपरीहास इव तत्कालमधिगतविकाशासु प्रमुदितास्विव दिक्षु चिक्षेप । पिष्टातकपिञ्जरसरोजकिंजल्कजालमुद्यानानिलः । कृताध्ययनभङ्गविद्वज्जनविसर्जितानि प्रष्टीकृतैकैकवठरच्छात्रहस्तार्पितविशालपूर्णकलशानि युगपदुच्चारिताशीःपरम्परावचनवाचालानि चेलुरन्तःपुराभिमुखमखिलानि विद्याशुभ्रशालान्तेवासिमण्डलानि । प्रचलितारुणपाणिमणिपल्लवमन्दोलितानि नीललीलालकभङ्गमाभङ्गुरमुरोजस्तबकभारेण रणरणिततारररत्नाभरणमालनिलाहतकल्पलतावनमिव ननर्त सान्तःपुरं नगरनारीवृन्दम् ॥

अवनीश्वरोऽपि परमोत्पन्ननिर्वृतिर्जलकटाहक्रोडनिक्षिप्तनाडिकानिहितचक्षुषा गणकनिवहेन निश्चित्य देव्याः प्रसवलग्नमागतेन मुहुर्मुहुरनेकप्रकारैः कृतोपवर्णनमाकर्ण्य जन्मग्रहबलं बालकस्य कृतम-

ज्जनादिकृत्यशुभे मुहूर्ते निवर्तितानुचरलोकः परिगतप्रान्तमुत्खातखड्गैः समन्ततो वीरपुरुषैः प्रशस्ततरुपल्लवास्तृतमुखेन द्वारशाखासङ्गिना मङ्गलकलशयुगलेनावभासितमुदारगन्धोद्गारगुग्गुलुधूपधूमान्धकारदूरीकृतदुष्टचक्रवक्राक्षिसंचारमचिरधौतचरणाभिः प्रविश्य साशीर्वादमन्तःप्रकीर्णकुसुमाक्षतकणाभिर्बन्धुवृद्धाभिराबद्धमङ्गलगीतकोलाहलमदत्त बाह्यपरिजनप्रवेशेन प्रशस्तालापिना सकललौकिकाचारकुशलेन 'कुरुत हरिचन्दनोपलेपहारि मन्दिराङ्गणम्, रचयत स्थानस्थानेषु रत्नचूर्णस्वस्तिकान्, दत्त द्वारि नूतनं चूतपल्लवदाम, विकिरतान्तरुत्फुल्लपङ्कजोपहारम्, कारयत सर्वतः शान्तिसलिलक्षेपमकृतकालक्षेपम्, आहरत भगवतीं षष्ठीदेवीम्, आलिखत जातमातृपटलम्, आरभध्वमार्यवृद्धासपर्याम्, निधत्त पर्यन्तेषु शयनस्य सद्योभिमन्त्रितां रक्षाभूतिरेखाम्', इत्यादि जल्पता तल्पनिकटोपविष्टेन शुद्धान्तजरतीजनेन क्रियमाणविविधशिशुरक्षाविधानमविरतचलत्तालवृन्तनिर्वाप्यमानसनागरक्षोदपानोदकशरावमधिकोदञ्चितात्मभिरचञ्चलावस्थानैरुत्थाय विस्मितैरिव त्रिभुवनातिशायिशोभमर्भकरूपमवलोकयद्भिर्मङ्गलप्रदीपैः प्रकाशिताभ्यन्तरमदूरस्थितात्मव्यापारसत्वरसूतिकं प्रियायाः प्रसूतिगृहमविशत् ॥

प्रविश्य च सतर्षमुद्भूतप्रहर्षस्मितो विस्मयस्तिमितपक्ष्मणा लोचनयुगेन स्फुटविभाव्यमानसकलचक्रवर्तिलक्षणां यस्यां प्रतिक्षणमवलोक्य सूनोस्त्रिभुवनविलक्षणामवयवश्रियममन्दनिर्गतानन्दाश्रुबिन्दुरप्रतिपादनीयां सुखमयीं कामपि दशां प्राप । निर्गत्य च विमोचिताशेषबन्धनः सदृशमाधिपत्यस्य भूतेरुदारतायाः प्रमोदस्य च निजस्य विस्मायितजगत्त्रयं मासमात्रमनुदिवसमुत्सवमकारयत् ॥

अतिक्रान्ते च षष्ठीजागरे समागते च दशमेऽह्नि कारयित्वा सर्वनगरदेवतायतनेषु पूजाम्, मानयित्वा मित्रज्ञातिवर्गम्, अभ्यर्च्य गुरुजनम्, दत्त्वा समारोपिताभरणाः सवत्साः सहस्रशो गाः सुवर्णं च प्रचुरमारम्भनिःस्पृहेभ्यो विप्रेभ्यः स्वप्ने शतमन्युवाहनो वारणप्रतिर्दृष्ट इति संप्रधार्य तस्यैव स्वप्नस्य सदृशमात्मीयनाम्नश्चैकदेशेन समुदायवाच्येन चार्थेन समर्थितानुहारं **हरिवाहन** इति शिशोर्नाम चक्रे ॥

क्रमेण च प्रसवदिवसादारभ्य तत्कालोपजातप्रसवाभिरभिनवयौवनोपचितपरिमण्डलस्तनीभिरव्यङ्गनीरोगाङ्गयष्टिभिरिष्टे विप्रयोगादिभिर्दुःखैरनुपतप्ताभिराप्ततया निपुणमवधृताभिर्धात्रीभिरनवरतमुपचर्यमाणस्य शुद्धपक्षचन्द्रमस इव प्रतिदिवसोपचीयमानदेहावयवकान्तेरखिलवेदोक्तविधिविदा वेधसेवापरेण स्वयं पुरोधसा निवर्तितान्नप्राशनादिसकलसंस्कारस्य यस्य समाहृतसमग्रमङ्गलोपकरणाभिरन्तःपुरवृद्धाभिस्त्रिसंध्यमारभ्यमाणावतारणकक्रियस्य सर्वायुर्वेदपारगैर्भिषग्भिर्मन्त्रसिद्धिलब्धप्रसिद्धिभिश्च महानरेन्द्रैरतन्द्रितैर्मुहुर्मुहुः प्रतिजागर्यमाणस्य प्रकटितसंभ्रमाभिरन्तःपुरिकाभिराहूयाहूय गाढमाश्लिष्यमाणस्य स्थानस्थानारोपितमहाप्रभावानेकमणिभिः प्रधानभूषणैः प्रसाधितललितसर्वाङ्गस्य धृतायुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य स्वभावरम्येषु मणिकुट्टिमेषु क्रीडाशैलकटकेषु नन्दनवनप्रासादकेषु कृत्रिमापगापुलिनेषु च कपोलदोलायमानकमनीयकाकपक्षैः क्षितिपालदारकैः सह क्रीडासुखमनेकप्रकारमनुभवतो निरङ्कुशप्रचारस्य पञ्चवर्षाणि तस्यान्तःपुरेऽतिचक्रमुः ॥

अवतीर्णे च षष्ठे किंचिदुपजातदेहसौष्ठवस्य व्यक्तवर्णवचनप्रवृत्तेर्विनयारोपणाय राजा राजकुलाभ्यन्तर एव कारितानवद्यविद्यागृहः

सम्यगावेशितगुरुकुलानामवगताखिलशास्त्रमर्मनिर्मलोक्तियुक्तीनामाम्नायलब्धजन्मनामसन्मार्गगतिनिसर्गविद्विषां विद्यागुरूणामहरहः संग्रहमकरोत्। उपनिन्ये च तेभ्यः शोभनदिनमुहूर्ते निर्वर्तितसमस्तेतिकर्तव्यः स्नावमनुपहतसूक्ष्मक्षौमकल्पितोत्तरासंगमनुलिप्ताङ्गमामोदिन्यमलयजरसेन प्रत्युरसमामुक्तमुक्ताकलापमुपरचितरोचनातिलकरुचिरललाटमुत्तमाङ्गघटितमालतीमुकुलगण्डमाल्मवदातवेषतया सविशेषदर्शितादरमभ्युत्थितायाः पुरः सरस्वत्याः सितांशुधवलया शरीरच्छाययेव च्छुरितमात्मजमवनिपतिपूजाविशेषवर्धितप्रीतयश्च तन्निर्विशेषदर्शिनः पुरःसरमशेषाण्यपि यावन्नोहीनि शास्त्राणि तस्मै क्रमेणोपादिक्षत् ॥

कुमारोऽपि सतताभियुक्ततया गुरूणां नियन्त्रणपरतया दुर्विनीतसंनिधेः स्वाधीनतया सर्वागमोपनिबन्धानां कुशाग्रीयतया च निजबुद्धेरल्पेनैव कालेन तेषामभ्यन्तरोऽभवत्। अमुक्ताभियोगश्च दशभिरब्दैश्चतुर्दशापि विद्यास्थानानि सह सर्वाभिरुपविद्याभिर्विदांचकार। कला शास्त्रं च निरवशेषं विवेद। विशेषतश्चित्रकर्मणि वीणावाद्ये च प्रवीणतां प्राप। भुजबलं चास्य विस्मापितसुरासुरं केसरिकिशोरस्येव सहजं शारीरमभवत्। आरब्धकार्यस्य त्रिभुवनेऽप्यशक्यमविजेयमसाध्यं च किमपि न प्रायेणाभूत्। एवं च परिणताशेषशास्त्रमासादितसकलास्त्रविद्वन्नरमुपलब्धसर्वबुधजनसाधुवादमारूढनवतारुण्यलक्ष्मीलब्धपरिपूर्णसर्वावयवशोभमनुमोदितविद्यागुरुजनेन हरिवाहनमतिक्रान्ते षोडशे वर्षे हर्षनिर्भरो राजा विसर्जितैराकारणाय सादरमुदाराकारवेषैः प्रधानपुरुषैरनुगम्यमानमतिभूयसा विभवेन स्वभवनमानिनाय। निवर्तिताखिलगृहप्रवेशमङ्गलश्चास्य नगरबाधायामलघुवप्रालंकृतप्राकारलङ्घिताभ्रमदभ्रतोरणस्तम्भमुभयतो निखातशातकुम्भपूर्णकुम्भो-

द्भासितद्वारदेशमनेकगजतुरङ्गशालाभिरामं कुमारभवनमकारयत् । कर्तुकामश्च यौवराज्याभिषेकं तस्य साहायकार्थमाज्ञाभरसहं प्रज्ञया पराक्रमेणाकारेण विनयेन वचनविन्यासेनोद्यमेनापरैश्च त्यागशौर्यगाम्भीर्यादिभिः प्रभुगुणैर्धृतानुकारमुर्वीपतिकुमारमादरप्रेषितैः प्रणिधिपुरुषैरनिशमुर्व्यामन्वियेष ॥

एकदा च तं प्रातरेवास्थानमण्डपोपविष्टमध्यासितविकटहेमविष्टरमुत्खातखड्गैः कृतनिरन्तरावस्थितिभिरूर्ध्वस्थितैराबद्धपङ्क्तिभिः शरीररक्षाधिकारनियुक्तैर्वीरपुरुषैरुभयतः परिक्षिप्तमनतिनिकटनिरन्तरासीननिभृतवल्लभराजलोकमभ्यर्णवर्तिनीभिरनवरतचामरोत्क्षेपचलितकलाविकाञ्चनवलयाभिर्वारविलयाभिरुपवीज्यमानवपुषमुषःकालसेवागतेन सह प्रविश्य कतिपयप्रणयिभी राजसूनुना प्रणम्य सविनयमवनीतलोपविष्टे स पितृचरणविन्यस्तानिश्चलदृष्टिना हरिवाहनेनोपास्यमानमागृहीतचित्रकनकवेत्रलता प्रतीहारी प्रविश्य क्षितितलन्यस्तजानुहस्तयुगला सविनयं व्यजिज्ञपत्—'देव, संप्रत्येव दक्षिणापथादागतो दक्षिणदण्डाधिपतेर्वज्रायुधस्य प्रसादभूमिर्विजयवेगनामा प्रधानपुरुषः सकलपुरुषार्थसिद्धिसंपादकं देवस्य पादयुगलं द्रष्टुमुत्कण्ठितो द्वारि तिष्ठतीत्याकर्ण्य देवः प्रमाणम् ।' अवनिपालस्तु संस्मृतवचनेन तस्याः पूर्ववृत्तमङ्गुलीयकप्रेषणवृत्तान्तमधिगतप्रीतिः 'प्रवेशय' इति तां सादरमवदत् । अथ पार्थिववचनानन्तरमेव सा 'यदाज्ञापयति देवः' इत्युक्त्वा सत्वरमास्थानमण्डपान्निर्जरामोक्षणमात्रनिर्गतायां च तस्यां द्वारदेशप्रहितलोचनो महीपतिः प्रविशन्तमीषत्क्षामवपुषमुपरचितराजदर्शनोचितवेषमचिरस्नातमपि मार्गवातातपमुष्टगात्रत्वक्तया मलिनमिवोपलक्ष्यमाणमतिचिरदर्शनादपरिचितमिव परकीयमिवान्यथाभूतमिव

राजकुलमाकलयन्तमवनिपालदर्शनोत्सुकतया च संभाषणगोचरागतानिष्ठानपि सकृद्दृष्टानिव राजपुंगवानल्पविस्तरमालपन्तमुत्तरीयपटगोपियितोपायनेन पश्चाद्व्रजता पुरुषेणानुगम्यमानं विजयवेगमपश्यत् ॥

दृष्ट्वा च कृतस्मितो दूरादेव संभ्रमवता संभाषणेनैनमनुजग्राह । सरभसोपसृतं च तं कृतप्रणाममासक्तकुट्टिमरजोधूसरललाटजानुकरमुद्भुपविष्टमन्तिकोपनीते सविनयमासने प्रीतिप्रसन्नतारकेण चक्षुषा क्षणमात्रमवलोक्य जगाद—'विजयवेग, कुशलमखिलवीरचक्रप्रकाण्डस्य महादण्डाधिपतेः पृथिव्यामप्रतिहतायुधस्य सराजलोकस्य वज्रायुधस्य ।' स च किंचिदुज्झितासनो विनयविरचिताञ्जलिः प्रणम्याब्रवीत्—'अद्य कुशलम् । यास्मिन्नितरजन इव विसर्जिताहंकारग्रन्थिरित्थं स्वयमादिशति सकलत्रिभुवनाभिनन्दितप्रभावो देवस्त्वदनुभावप्रसाधिताखिलदुर्वृत्तरिपुराजन्यकेन सैन्याधिपतिना विज्ञापितोऽस्मद्वचनेन पश्चाच्चुम्बितमणिकुट्टिमः येन प्रणामः ससंभ्रममवनताश्चार्चयन्ति देवस्य चरणनखचिन्तामणिपरंपरां पुरःप्रकीर्णचूडामणिकिरणचक्रवालबालपल्लवैर्मूर्द्धनि मूर्द्धाभिषिक्तपार्थिवकुलोद्भवा भवदत्त-भीमभानुवेगप्रभृतयः सपरिजना राजानः' इत्युदीर्य भूयोऽप्यभाषत—'देव, बालारुणाभिधानं दिव्यमङ्गुलीयकरत्नं पुरा यत्प्रेषितं देवेन दण्डाधिपस्य तद्वृत्तं तेन कालमेतावन्तमात्मसंनिधावधुना च करदीकृतसकलदाक्षिणात्यक्षोणिपतिना तेन मत्पार्श्वे प्रहितमिह । मयाप्यदो निरवद्यमणिभिर्भूषणगणैः समेतमखिलरत्नकोशाध्यक्षस्य महोदधेः ससाक्षिकं समर्पितमित्यवधारयतु दिव्यदृष्ट्या देवः' इति वदन्तं च तमुपजातकौतुको नृपः सस्मितमवादीत्—'विजयवेग, कंचित्कृतत्वेन

१. कदाचिदपि.

कश्चिदुपकारः संगरेषु सेनापतेस्त्वदीयस्य ।' स जगाद—'देव, स कृतो येन कश्चिदन्यः करोति । आकर्णयतु देवः । इतः समनन्तरातीतवर्षे निवृत्तास्वविरलजलासारवर्षासु वर्षासु प्रवृत्ते संवर्तितसिन्धुपूरपयसि परिणमत्कलमकपिलायमानकैदारिके बद्धस्तम्बतृणसंबाधग्रामसीमूतिजनितविजिगीषुपार्थिवजनोत्साहे शरत्समये सेनापतिरर्थशास्त्रपरामर्शपूतमतिभिरमात्यैः सहकृतकार्यवस्तुनिर्णयः प्रशस्तेऽहनि समस्तबलपरिवृतश्चरणतलमृदितभुजबलावलिप्तारिभूपालशिरःशेखरं कुसुमशेखरनामानमवनिपालमुन्मूलयितुकामः कुण्डिनपुरात्काञ्चिमण्डलाभिमुखमचलत् । क्रमेण चाबद्धदृढकक्षाभिराटोपकम्पमानविततकेतुमेव वनराजिभिरभ्यर्थनापदेशस्तम्भितोदयमगस्त्यमुनिमभियोद्धुमुच्चलिताभिर्विन्ध्यशिखरावलीभिरिव करिघटाभिरन्धकारितैराज्ञाकृष्टानां दुष्टसामन्तानामनीकैरापूर्यमाणकटकविनिवेशः काञ्चिदेशमविशत् । कुसुमशेखरोऽपि किंचित्सदर्पतया तमुपसर्पितुमनीहमानो हीनबलतया च योधयितुमपारयत् । कालातिवाहनमत्र प्राप्तकालमिति चेतसा निश्चित्य संवर्गितसमग्रोपकरणकलापः शास्त्रमार्गानुसारेण दुर्गसंस्कारमनवरतमन्वतिष्ठत् । अन्वहं च दह्यमानासन्नग्रामकक्षामुपहतबहिर्जलाशयामन्तःप्रवेशितप्रभूतधान्यामुपसंगृहीतप्रचुरयवसेन्धनामुदक्तजीर्णवापीकूपपङ्कां निष्कासितनिःशेषासारलोकां विषमितप्राकारमूलसमभूतलामवतारमार्गदुर्गामीक्षतखातवलयां निवारिताविज्ञातजननिर्गमप्रवेशामप्रमत्ताप्तपुरुषगुल्मकप्रतिपन्नसकलप्रतोलिरक्षां पाणिक्षेपणीयपाषाणकूटस्थपुटितप्राकारासन्नस्थलामनियतावस्थानहयसप्तिसैन्यसततशून्यपर्यन्तां प्राकारशिखरोत्सङ्गसूत्रितविचित्रयन्त्रनिचयां काञ्चिनगरीमकरोत् । अपरित्यक्तसमराभिलाषश्च सहायकधेयसविधवर्तिनामवनिपालानामनुसंधानाय प्रधानदूतमहरहः प्राहिणोत् ।

पृतनाधिपोऽपि प्रकृत्यमर्षणः प्रणिधिपुरुषेभ्य उपलभ्य तस्य तथाविधं समारम्भमधिकोपजातसंरम्भः सरभसप्रधाविताभिरनीकिनीभिरागत्य विहितोपरोधः पर्यन्तेषु काञ्च्याः स्कन्धावारममुञ्चत् । कृतासारसंरोधश्च प्रावृषेण्यजलधरव्यूह इव पौरलोकानां महान्तं सातङ्कमकरोत् । सामन्ताश्च सज्जीकृतसमदसामजघटाविघटनाय दुर्गस्य तेन कृतविसर्गाः क्रमेण निर्जग्मुः । आविष्कृताटोपदुःप्रसहैश्च तैः सह प्राकारशिखरवर्तिनः कुसुमशेखरराज्यलोकस्यान्योन्यकृतनिर्भर्त्सनानि समत्सरसुभटसिंहनादबधिरीकृताभ्यर्णवासिजनकर्णघोरणिनीरन्ध्रपाषाणक्षेपक्षणमात्रस्थलीकृताम्बरतलानि निर्दयप्रहततूर्यरवपर्यासितकातरकरशस्त्राणि यन्त्रविक्षिप्तभ्रमितप्तसतैलच्छटाविघटमानविकटपदातिगुम्फानि बद्धस्फुरतिरोहितपुरुषखन्यमानप्राकारमूलबन्धानि क्रोधदष्टौष्ठवण्ठश्रूयमाणदुर्गस्थवैरिनिष्ठुराक्रोशानि शिरस्थितफरकफारकप्रार्थ्यमानप्राकारखण्डीप्रवेशानि तृणपूलकोल्कानलप्रदीप्तकरिसारिनिःसरद्विहस्तहस्त्यारोहाणि वेगलम्भाभ्रमितप्तनाराचविलीयमाननृपतिकाञ्चनमुकुटानि कुठारताडितप्रतोलीकपाटनिःस्वनानुसारनिपतत्प्रबलपाषाणवर्षाणि कृतकलकलग्रामीणावलोक्यमानप्रहारविकलविद्रवद्द्विपघटानि भयानकानि च कुतूहलकराणि च क्रोधजनकानि च हासावहानि च विनोदभूतानि च निर्वेददायीनि च प्रतिदिनमायोधनान्यभवन् ॥

एवं च काञ्चीग्रहणरक्षणविधावधिरूढगाढाभिनिवेशयोरभिनवोढदम्पतिकरपल्लवयोः कियानप्यतिपपात कालम् । एकदा वसन्तसमये प्राप्ते च समागतायामनङ्गोत्सवतिथावतीते निशीथिन्याः प्रथमयामे राजद्वारमागतासु द्वितीययामगजघटासु रसिते प्रदोषावसरतूर्ये श्रुतावसरतूर्यरवसंभ्रान्तेषु दत्तपर्याणानाह्लादोपवाह्यवाजिनो राजद्वारमतिरंहसा

प्रधावितेषु परिवर्द्धकेषु यथायामं निरूपितायामिकेषु निजनिजकर्मशालाभ्यो निर्गतेषु चिरनिरोधखिन्नतनुषु योनिषु पुरःसरद्भिन्नदीपिकेषु व्रजत्सु निजशिबिराणि तारतरकरेणुघण्टाक्वणितसूचितेषु सामन्तेष्वापणिकसंवृतसायंतनपण्यसंततिषु विकटायमानेषु विपणिवीथीश्चतुःपथेषु शिबिरपर्यन्तबद्धगुल्मकेषु स्थित्वा स्थित्वा युगपदारटत्सु बाह्यतम्रपदातिवृन्देषु विश्रान्तजनरवत्वात् निरङ्कुशप्रसरेष्वितस्ततः श्रूयमाणेष्वापानकमृदङ्गध्वनिषु शयनमन्दिराङ्गणनिहितशय्यानिषण्णे संनिहितकतिपयप्रणयिनि प्रारब्धमदनजागरस्य जायाजनस्य गीतकान्याकर्णयति परितः परित्यक्तविग्रहकथानिरवग्रहमनसि सेनाधिपे सहसैव संत्रासितकटकलोकत्रासतरलमन्दुरातुरङ्गश्रेणिश्रुतः सत्वरापसृतपृष्ठप्रसुप्ताधोरणानामपहायापहाय पांशुतल्पाण्युत्तिष्ठतामिभपतीनां चरणशृङ्खलारणितजरठेन जर्जरीकृतः कण्ठगर्जितेन गजगर्जितारवश्रवणकुपितानां पञ्जरकेसरिणां सरभसकरास्फालितशलाकाप्रतिनादबृंहितेन बहलीकृतः पूत्कृतेन प्रतिसैन्यमाहतानां प्रसृततारतरकाहलाक्वणितकाहलेन संनाहपटहानामुन्नादितः कोलाहलेन ससंभ्रमोत्थितानां तत इतः प्रधावताम्, 'आहरत रथवरूथानि, कल्पयत मातङ्गान्, आरोहत तुरङ्गान्, अङ्गीकुरुत तनुत्राणि गृहीतशस्त्राणि' इत्यनवरतमाघोषतामधिकारिपुरुषाणां श्रवणपरुषेण पोषितस्तारतुमुलेन व्याप्लुतेन निर्भरभरितसकलत्रिभुवनोदरो महानुदभूत्कलकलारवः । तं च प्रलयकालजृम्भितमहाभैरवाट्टहासभैरवं रवमाकर्ण्य समुपजातरिपुबलावस्कन्दपातशङ्को नायकस्तत्काललब्धावसरेण भृत्येनेव रणरसेन बद्धविकटरोमाञ्चकवचेन प्रेर्यमाणो विजृम्भितातिभीषणभ्रुकुटिसंकटायमानललाटभित्तिरमर्षदशनदष्टच्छदो दक्षिणकरेणाच्छिद्य परिचारकहस्तादुत्पाततडिल्लतानुकारिणं कृपाण-

मितरपाणिना प्रेङ्खयन्विचित्ररत्नखण्डखचितकितवकौतुकाष्टापदं प्रकोष्ठविनिविष्टमष्टापदफलकमतिबहलेन तिर्यग्विसर्पता खड्गप्रभापटलेन मलिनितमाबद्धविकटकालायसकङ्कटकमिवोरःकपाटमुद्वहन् रभसदूरपातिभिरभिमुखप्रकटितासियष्टिमात्मच्छायामभिहन्तुमिव पुरःप्रवर्तितैः पादैः आकम्पितक्षितिपराक्षेपदूरोच्छलितहारविप्रकीर्णेन नीहारनिकरस्पर्द्धिना किरणविसरेण संवर्द्धयन्निवारातिसैन्यसंदर्शनाय चन्द्रातपप्रभुमार्गप्रधावितेन संभ्रमस्खलितगतिना वीरलोकेन गमनवेगानिलाकृष्टेनेवानुसृतगतिरतिजवेन राजकुलान्निरगच्छत् । द्वारदेशावस्थितश्चाग्रतो दत्तदृष्टिरतिवेगादापतन्तावतिशयच्छेकपाटहिकताडितपटहनादपटुतरेण दूरादेव खुरपुटध्वनिना प्रकटीकृतावुरःकपाटघटितातनुत्राणौ तत्क्षणविपाटितकाषायपटार्द्धान्तपीडितोत्तमाङ्गौ गृहीतनिशितप्राशमुष्टिताग्रामेन किंचिदुत्क्षिप्तवल्गौ(?)दक्षिणेन च करतलेन त्रासतरलिताश्वतुरगतिर्यगवलोकितोत्क्षेपाङ्कसामुद्वहन्तावश्वदर्शनसरभसप्रधावितैः शिबिरे वेसरैरिव धूसरैः खुररजोभिः पश्चादनुगम्यमानावनवरतदोलायमानजङ्घाकाण्डतया तुरगपृष्ठवर्तिनावपि धावताविवोपलक्ष्यमाणा चासन्नवर्तिना शिबिरलोकेन किं किमेतदिति संभ्रान्तेन पृच्छ्यमानौ मनोरथाविव मनसो जीवाविव जवस्य वारिकाविव वायोरुत्सेकाविवौत्सुक्यस्य विगतपर्याणतुरङ्गमाधिरूढौ काचरक-काण्डरातनामानौ प्रज्ञाततमावश्ववारावद्राक्षीदप्राक्षीच्च—'सत्वरमरे, किमेष कटकक्षोभः' इति । अथ तौ समीपमेत्य त्यक्ततुरगावुरगाविव सर्वाङ्गस्पृष्टभूतलौ प्रणम्य युगपत् 'चतुर्दण्डनाथ, संप्रत्येव संनद्धसकलकरितुरङ्गयोधमाबद्धवीरपट्टपादातभीषणमरुणनेत्रपताकापटपल्लवितरथनिरन्तरमुत्तरप्रतोलिमार्गेण निर्गतं काञ्च्याः कृतसमस्तसमरसामग्रीकमहितानामनीकममर्षपरवशं च

पौरुषावलेपेन तृणलघूनस्मान्मन्यमानमतिजवेन प्राप्तमभ्यर्णेऽस्य कटकस्य वर्तते इति श्रुत्वा प्रभुः प्रमाणम्' इत्युक्त्वा विरेमतुः ॥

सेनापतिस्तु तत्तयोराकर्ण्य कर्णामृतकल्पं जल्पमुपजातहर्षो रणरसोत्कर्षपुष्यत्पुलकजालकः सजलजीमूतस्तनितगम्भीरेण स्वरेण तत्क्षणादिष्टकिंकरससंभ्रमास्फालितमानद्धस्फुटप्रतिशब्दमिव दर्शयन् ध्वनन्तमाजिदुन्दुभिमभ्यर्णचरमनुचरगणं रथानयनार्थमादिक्षत् । नचिराच्च तेनान्तिकमुपनीतमुभयतः प्रचलदतिचारुपत्रमुदरनिनिहितमहाहिभीषणानेकास्त्रं पत्ररथराजमिव रथाङ्गपाणिरध्यास्य रथं यथासंनिहितेनात्मसैन्येनानुगम्यमानो युगपदाहतानां कुपितयमहुंकारानुकारिभाकारभैरवमतिगम्भीरमारसन्तीनां समरढक्कानां ध्वनितेन पातयन्निव सबन्धनान्यरातिहृदयानि, तारतरव्याहारिणां बन्दिवृन्दानां हृदयहारिणा जयशब्दाडम्बरेण मुखरिताम्बरः शिबिरान्निरगच्छत् । कृतव्यूहविरचनश्च समरसंक्षोभक्षमायामुपान्तभूमावस्थात् ॥

अथाकर्णितसमरभेरीनिनादजृम्भितानन्दाः सरसरोचनारचितललाटतिलकबिन्दवो दूर्वाप्रवालदन्तुरैः शिरोभिरभ्यर्णचारिचारणोच्चार्यमाणवीर्यसंपदस्त्वरितपदसंचाराभिरागत्य करिघटाभिः समन्ततः ससामन्तचक्राः परिवारयांचक्रुरेनं सेनापतयः प्रत्येकपातितस्निग्धदृष्टिना च तेन सप्रसादमादिष्टाः प्रणम्य निजनिजस्थानेषु तस्थुः ॥

अथ निशीथानुभावभास्वरेण विषममुन्मीलिता निमीलिता च दीपकानिवहेन पिशुनितममञ्जुकूजत्काहलमाकर्ण्यमानतारपरुषहयहेषारवमितस्ततः श्रूयमाणगम्भीरगजगर्जितमावेगतर्जिताश्वैर्वारंवारमश्ववारैरावेद्यमानागमनमग्रस्कन्धताडितोद्धुरसमरढक्कमढौकत । चक्षुषः पथि प्रतिपन्थिबलमविरलनिरस्तशरनिकरशीकरासारडामरं च तद्दुर्वाररभसमुद्दामकलक-

ल्व्याप्तसकलदिङ्मुखमभिमुखप्रधावितेन जलदागमसंक्षुभितममरापगापूर-जलमिव लवणजलधिना प्रत्यगृह्यतासङ्कुलेन । परस्परवधनिबद्धकक्ष-योश्च तयोस्तत्क्षणमाकुलितसकलजीवलोको युगपदेकीभूतोदारवारिरा-शिरस्रजलविसरवर्षिघनपदातिघोरो मुदितयोगिनीमृग्यमाणलोकपालच-षकः प्रचलितरसाकुलभूभृच्चक्रवालकृततुमुलः प्रसृतरभसोत्तालगजदान-वारिरार्तत्रिदशदारिकान्विष्यमाणरमणसार्थो निपीतनरवशाविस्वरविसा-रिशिवाफेत्कारडामरः सतारकावर्ष इव वेतालदृष्टिभिः, सोल्कापात इव निशितप्रासवृष्टिभिः, सनिर्घातपात इव गदाप्रहारैः, ससंवर्तकाम्बुददु-र्दिन इव करिशीकरासारैः, सोत्पातरविमण्डल इव कीलालितकरालच-क्रमुक्तिभिः, सवैद्युतः सूर्य इव जवापतज्ज्वलितशक्तिभिः, सखण्ड-परशुताण्डव इव प्रचण्डानिलधूतध्वजसहस्रैः, सकालाग्निधूम इव प्रकुपितसुभटभ्रकुटीतमिस्रैरजायत । महाप्रलयसंनिभः समरसंघट्टः सर्व-तश्च गात्रसंघट्टरणितघण्टानामरिद्वीपावलोकनक्रोधधावितानामिभपतीनां बृंहितेन, प्रतिबलाश्च दर्शनक्षुभितानां च वाजिनां ह्रेषितेन, हर्षोत्ताल-मूलताडिततुरङ्गबद्धरंहसां च स्यन्दनानां चीत्कृतेन, सकोपधानुष्कनिर्द-याच्छो(द्धो)टितघानां च वाययष्टीनां टंकृतेन, खरक्षुरप्रदलितदण्डानां च पर्यस्यतां रथकेतनानां कटुत्कारेण, निष्ठुरधनुर्यन्त्रनिष्ठ्यूतामुक्तानां च निर्गच्छतां नाराचानां सूत्कारेण, वोगाह्यमानविवशवेतालकोलाहलघनेन च रुधिरापगानां घूत्कारेण, प्रतिरसितसंभृतेन, समरभेरीणां भाङ्कारेण, निर्भराध्मातसकलदिक्चक्रवालं यत्र साक्रन्दमिव साट्टहासमिव सास्फोटन-रवमिव ब्रह्माण्डमभवत् । अनन्तरं च सेनाभराक्रान्तमेदिनीमूर्च्छान्ध-काराकृतिः कवलयितुमिव सशैलद्वीपकाननं त्रिभुवनमुल्ललास लासकस्तं-रुणजलधरपटलशङ्कया विमुक्तकलकेकाविलापानां वनकलापिनामाब्रह्मलो-

क्रमेणाक्रमण्डलाकाण्डसैंहिकेयो रजःसंघातः प्रतिक्षणमुद्धुरैर्गुणध्वनिभिरज्ञायत धनुष्मतामिषुव्यापारः शाक्रशिखिकणाद्योतेन, पदमदीयत प्रचलितैः प्रत्यरिपदातिभिः अविदित्यात्मीयपरविभागेन, व्यलम्ब्यत मुहुर्मुहुरुद्धूर्णहेतिनापि सुभटलोकेन, प्रभूतपिशिताभ्यवहारजनिततीव्रोदन्येन कर्दमप्रायमपीयत क्षतजापगाम्बुकौणपगणेन ॥

एवं च भीषणाबद्धतुमुले कुतूहलोच्चालकालदूताकुलितदशदिशि क्रव्यादकुलविलुप्यमानवीरलोके नृत्यत्परेतपरिषदि कृतान्तमहोत्सव इव निर्भरं प्रवृत्ते समरसंरम्भे क्षीयमाणेषु क्षितिपतिषु निपतत्सु पादातेषु सीदत्सु सादिषु व्रजत्सु विधुरतायामाधोरणेषु प्रहारविकलकायेष्वितस्ततः परिज्वलत्सु शून्यासनेषु सप्तिषु स्फुरत्कृपाणचक्रत्रिशूलकार्मुकप्रायप्रहरणदुरालोकायामनेकशवमुण्डमालामालितवपुषि चण्डिकायामिव रूपपरिवर्तेन कृतसंनिधापलक्ष्यमाणायां क्षितावमर्षमय इव क्रौर्यमय इव वैरमय इव व्याजमय इव हिंसामय इव विभाव्यमाने जगति त्रिभागशेषस्थितौ त्रियामायाममर्षगतमरणशङ्कानिरङ्कुशप्रवृत्तिभिर्वीरलोकैरहं प्रथमिकया प्रार्थ्यमानयशसि पर्यायेण जयपराजयावासादयति सति सैन्यद्वये सहसैव शक्रसैन्यादसह्यरभसो मृगयुमार्गणप्रहारताडित इव मृगारातिराकर्णितदुर्नरेन्द्रमन्त्रपद इव महाहिराघ्रातविपक्षचारणमन्दगन्ध इव वनकरेणुरनिललोलपताकापटसहस्रमरिकुलप्रलयाय मुक्तशिखमिवोत्खातशल्यपुरुषकृतपरिक्षेपं रथमारूढः प्रौढकालायसकवचगूढकायैः पुनरुक्ततर्जितसारथिभिरभङ्गुरभुजबलाभिमानैरनतिभूरिभिरवनिपतिपुत्रैरनुगम्यमान एको नृपकुमारः कुमारसदृशाकृतिरतिरंहसा निररी[र]मत् । निर्दयास्फालितधनुर्ध्वातिदूरोल्लसितेन श्यामलितदशदिशाकुटिलविषमेण भ्रुकुटिवलिलेखात्रयेण धूमोद्गमेनेवानुमीयमा-

नहृदयप्रदीप्तमन्युरभिमन्युरिव चक्रव्यूहस्य सेनापतिपुरोभागपुञ्जितस्य राजसमूहस्य संचरदनेकरथसहस्रदुःप्रवेशमविशन्मध्यमनुवर्तितक्षत्रधर्मैर्महाबलैर्नरपतिभिरेकैकशोऽभिमुखीभवद्भिः क्षणमात्रमन्थरितरथगतिः 'वज्रायुध वज्रायुध' इति सगर्वं व्याहरन्वाहिनीभर्तुरन्तिकमधिगच्छत्॥

सेनाधिपोऽपि गम्भीरमधुरेण तेन व्याहृतध्वनिना प्रथमजलधरस्तनितेनेव विंद्यः(?) सद्य एवोद्भिन्नसरसरोमाञ्चकन्दलः कोपविस्फारितपुटेन कवलयन्निव तारकोदरप्रतिबिम्बितं सप्रगल्भचलितपक्ष्मणा यत्र लोचनद्वयेन सतुरङ्गरथमातङ्गपार्थिवं प्रतिपक्षम् 'इत इतः पश्य माम्' इति व्याहरन्नेव वाहितरथः समेत्य तस्येक्षणयत्वे(?)समस्थितः। वारंवारमन्योन्यकृततर्जनयोश्च तयोराकर्णाचकृष्व(?)मुक्तास्तुल्यकालमास्वादितगलामिषाविसारिणो लङ्घितदिशो दूराध्वगाराजकार्योपयोगिनस्तीक्ष्णाः परितोषितसुराङ्गणाः सुपर्वाणो महाजवा वाजिनश्चापल्यतोषिताः क्षितिपालदारकाविषमाश्च मण्डलभेदिनः प्राप्तमोक्षादन्तदीर्घनिद्रामहासंनिपाताः स्वेच्छाविहारिणः खेचरान्निजस्वभावा लब्धसु(शु)द्धयः कचिद्घातिका इव सूतमारणोद्यताः, कचिद्राजाध्यक्षा इवाकृष्टसुभटग्रामकङ्कटाः, कचिद्वलयकारा इव कल्पितकरिविषाणाः कचित्कितवा इव लिखिताष्टापदसारफलकाः, कचित्पतङ्गा इव पक्षपवनान्दोलितदीपिकाखण्डार्चिषोऽभिलषितगजदानामार्गणतामुन्मिषितनीलत्विषो बाणतां द्विधाकृतोद्दण्डपुण्डरीकाः कादम्बाभिधामारावमुखरिताशामुखाः शिलीमुखाभिख्यां मुख्यामुद्वहन्तः, सायकाः प्रसस्रुः। अतिसंहततया च तेषामन्तरितचक्षुरिन्द्रियाः पुरोवर्तिनामपि वीराणां रणमति(ती)न्द्रियेण चक्षुषाद्राक्षुरमरपङ्क्तयः। समीपेऽपि त्रिदशतां भटजनमुपागतं न स्वयानमारोपयितुमपारयन्नप्सरसः। समासन्नस्यापि न कबन्धस्य

स्कन्धरुधिरधारया कपालान्यपूरयन्परेतयुवतयः। निरुद्धचन्द्रालोकबद्धान्धकारेषु च रुधिरनिम्नगातीरेषु प्ररूढतालतरुवनशङ्कया निर्विशङ्कमध्यासितोर्ध्ववेतालमण्डलमध्याभिरमराङ्गनाभिररम्यन्त समरासादिताः पतयः। मुहूर्ताच्च प्रीतहृदयः स नरपतिकुमारः सेनाधिपतिमवदत्—'वज्रायुध, तवानेन सकललोकविस्मयकारिणा भुजबलेन धनुरिवावर्जितं मम निसर्गस्थमपि हृदयम्। आशैशवादपारपौरुषमदोन्मादपरवशस्य मे शतशः संगरेषु संवृत्तः प्रवेशः। जातश्च सहस्रसंख्यैर्धन्विभिः सह समागमः। नतु जनितमेवंविधं केनाप्यपरेण कौतुकम्। अतिवाहितश्च पुरः करकलितकार्मुकेण काल एतावान्। तदेतर्हि कृत्वा मनः सविशेषसावधानं प्रहर सर्वात्मना। विधेहि च स्वशक्त्या महात्मन्, आत्मनो रक्षामेष(व)मुच्यसे। भुजबलाभिमानस्य भङ्गादलम्बितासमक्षमसमक्षमस्य सामन्तलोकस्य मर्त्यलोकावाससौख्येनेति व्याहृन्येव, वेगाकृष्टचापयष्टिरुदपातजलधर इव जलधारासारमन्धकारिताष्टदिगन्तरालसूत्रिताकालप्रदोषमनवरतमुत्पतद्भिर्नभसि भीषणैर्ज्यानिनादैरिशिरोभिश्च व्याहृतविसर्गस्तूयमानमिव, सुभटशस्त्रपातरणितेन प्रणम्यमानमिव, भूमिनिक्षिप्तमूर्धभिः कबन्धैरर्च्यमानमिव, निपतदातपत्रकुसुमैः स्यन्दनैः क्षिप्यमाणलाजमिव, उच्छलकुम्भमुक्ताफलाभिः करिघटाभिरभिषिच्यमानमिव मुक्तासृग्वृष्टिभिः प्रहारव्रणैर्दीयमानचक्राभिघातमिव, विलोलमणिकुण्डलैः क्ष्मापालमुण्डैः प्रबलपरिवारपरिगतमिव, शरच्छेदैर्मूकं मांसभेदे मन्दं मेदसि मुखरमस्थिषु मन्थरं स्नायुग्रन्थिष्वसंख्यमसृजत्। मार्गेण व्रातमतिवेगव्यापृतोऽस्य तत्र क्षणे प्रोत इव तूणीमुखेषु, लिखित इव मौर्व्याम्, उत्कीर्ण इव पुङ्खेषु, अवतंसित इव श्रवणान्ते तुल्यकालमलक्ष्यत। वामेतरः पाणिरविर-

लशरासारत्रासिता हंसीव मेघागमे पल्वलमनवलोकिताश्रयविसंस्थुला सैन्यपतिवक्षस्थलममुञ्चत् । राजलक्ष्मीरुद्भ्रान्तहृदया च क्षणं बाहुशिरसि, क्षणं धनुषि, क्षणं कृपाणधाराम्भसि, क्षणमातपात्र(पत्रे), क्षणं मदाध्वजेषु क्षणं चामरेष्वकुरुत स्थितिम् । अहं तु तां तस्य वज्रायुधस्य विपदमप्रतिविधेयामुपनतामवलोक्य किंकर्तव्यतामूढः स्तम्भित इव मुहूर्तमतिष्व(ष्ठ)म् । प्रलयवशाच्च प्रत्यानीतधैर्य इतश्चेतश्च धावता हृदयेन तस्य प्राणपरिरक्षणोपायान्मृगयमाणः सततमासन्नवर्त्यपि व्याकुलतया मुहूर्तमपसृतं स्मृतेर्झगिति तत्पुरा परमेश्वरेण प्रहितमङ्गुलीयकं बालारुणमस्मरम् । उच्छ्वसितहृदयश्च तदभिनन्द्य बहुप्रकारमादरकृतप्रणामः पाणिना दक्षिणेनोदक्षिपम् । आक्षेपश्चलद्वाणिश्च तत्क्षणमरातिबाणोन्मथितकेतुच्छत्रकार्मुकं सेनान्यमुच्चैस्तरेण स्वरेणावोचम्—'दण्डाधिप, कृतं तावदपरायुधपरिग्रहेण । गृहाण बालारुणाभिधानमिदममोघं प्रहरणम् । अनेन परिगृहीतभुजदण्डशक्तिर्विधेहि निरवग्रहप्रसरस्य विद्विषः प्रतापखण्डनम् । अकाण्ड एव निर्व्याजपौरुषतया मा स्म विस्मरः स्वामी(मि)कार्यम् । असौ तु सासूय इव तन्मदीयवचनमवधार्य कृतावधीरणो रणरसोच्छ्वसितगात्रयष्टिराविष्ट इव 'रे रे दुरात्मन्! दुर्गृहीतधनुर्विद्यामदाध्मातद्रविणाधम, बधान क्षणमात्रमग्रतोऽवस्थानम् । अस्थान एव किं दृप्यसि । पश्य ममापि संप्रति शस्त्रविद्याकौशलम्' इत्युदीर्य निर्यत्पुलकमसी(सि)लताग्रहणाय दक्षिणं प्रसारितवान्बाहुम् । अरिवधावेशविस्मृतात्मनश्च तस्योल्लसितकोपसाटोपकम्पिताङ्गुलौ कराग्रभागे गृहीत्वाङ्गुलीमेकां तदहमङ्गुलीयकमतिक्षिपम् । अधिष्ठितश्च स तदीयच्छायया तत्क्षणमेव दिग्नागदन्तमुशल इव वज्रप्रतिमया, महाहिभोग इव मणिप्रभया, समुद्रोर्मिरिव वाडवार्चिषा, कामप्यभिरामतामधृष्यतां पर्यपुष्यत् ॥

अथ तस्य संनिहितदीपिकाः खण्डकरदण्डताडिताः कोपेनेव प्रजज्वलुः। प्राज्यतेजसो मणयः प्रक्षिपुश्च दिग्मुखेषु क्षेपीयः कटाक्षानिव दीर्घारुणानंशून्। तैश्च प्रभापीतचन्द्रातपैर्यैः समन्ततः परामृष्टमभिनवार्ककिरणस्पृष्टमिव कुमुदकाननं सद्य एव निद्रया प्रत्यपद्यप्रतिपक्षसैन्यमुद्दामदानपङ्कलग्नानीव नोद्धर्तुमङ्कुशानि शेकुः। अनेकपक्कपोतकूटेभ्यो निषादिनः सुराङ्गनादर्शनोपारूढमदेव सद्योऽमुकुलायतदृष्टिः सुभटानां कृतकचग्रहकालदूताकृष्यमाणानीव शनैः शनैरवनेमुः। परिशिथिलकन्धरासंधीनि शिरांसि योद्धानां द्विपटितमुष्टिबन्धविगलिताशयश्च कृपाणिकाग्रहणस्पृहयेव पेतुः। जघनपार्श्वेषु प्रहारदानाय दूरोत्क्षिप्ता दक्षिणपाणयः पादा[ः] तस्यार्धावकृष्टश्रस्तकार्मुकनिरस्ताश्चार्धपथे एवाधोमुखीबभूवुः। अप्राप्तशरव्यास्त्रपयेव सायका धनुष्मताम्, दृष्टसुरवधूविभ्रमाविर्भूतमदनार्तानामिव प्रावर्तनजम्भिकामुखेषु रथारोहाणाम्, स्वप्नदृष्टाचिरविमुक्तोद्बाष्पनिजजायाया जनितदुःखानामिव प्रसस्रुरायतानि श्वसितान्यश्ववाराणाम्, श्रवणप्रविष्टारातिसिंहनादमुहूर्तविस्फारिताप्यघटतामर्षलोहितायमानजडपुटा दृष्टिः सामन्तानाम्, अव्यापृतवामकरतलालीनरश्मिपाशाश्चोर्ध्वीकृतप्राग्जनावष्टम्भेन विसंस्थुलावयवास्तस्थुः सारथयः। एवं च तेनातर्कितोपनतेनाप्रतिविधेयेन दैवेनेव लुप्तपुरुषकारेण, जरागमेनेव मन्दीकृताखिलेन्द्रियशक्तिना, महापुरुषेणेव गोपायितसमस्तात्मगुणेनानायुःपरिक्षयेण मृत्युना सर्पदंशेन विषवेगेनानभिघातजेन मूर्च्छान्धकारेणादोषसंक्षोभजन्मना संनिपातेनानुन्मीलिततारकेण तमसा, महानिद्रावेगेन युगपदभिभूयमाने वैरिसैन्ये सवीरवर्गाग्रेसरो राजकुमारो रोषदष्टाधरोष्ठमुज्झितरथपृष्ठमुद्घूर्णकृपाणमभिमुखमतिरंहसा समापतन्तं सेनापति-

मवलोक्य तत्सेनापतिवधाय धनुषि निवेशितमसितलोलदीधितिजटाल-फलधारमरातिरुधिरपानतृष्णया प्रसारितजिह्वासहस्रमिव सद्य एव समहृतसंहृतानेकप्रतिपक्षप्राणं बाणमुत्सृष्टचापयष्टिश्च तत्क्षणं क्षात्रसमर-नीतिप्रियतया पृथक्कृत्य परिवारतः कृपाणमात्मानं च वे(व)नादवतरन्नि-द्रावेगविगलितपरिस्पन्दः स्पन्दनोत्संगमगमदप्रान्तरे लब्धरोषनियति-नावसराणि 'हत हत, उपसर्पतोपसर्पत, गृह्णीत गृह्णीत' इत्यनवरतकृत-कोलाहलानि बद्धवेगद्विरदपृष्टसारिदोलायमानस्खलनसायासप्रासपूलानि चलितरथचीत्कारचकितशाकिनीचक्रवालार्धावलोकितान्युद्घूर्णत्कृपाणपा-दान्तपदपातकम्पितधराण्यभवन्त सर्वतोऽस्मत्सैन्यराजन्यकानि ॥

सेनाधिपस्तु तस्य महात्मनस्त्रिभुवनाभिभाविना भुजवीर्येण निर्व्या-जमावर्जितमनास्तानि तथाविधप्रकटितसंरम्भाणि सर्वतः प्रधावितान्यव-लोक्य संभ्रमोत्क्षिप्तबाहुयुगलो गद्गदिकागृह्यमाणगलनिर्गलदपर्याप्ताक्षरम् 'रे रे सदेवस्योत्तरकोशलेश्वरस्य पादपङ्कजेभ्यः शय(प)ते, योऽस्मै कुप्यति' इति स्वशक्त्या व्याहरन्पुनः पुनरादिष्टसूतसत्वरप्रवर्तितरथेन रथेन तं प्रदेशमागच्छत् । अद्राक्षीच्च तं समासन्नदीपिकालोकप्रका-शितमासक्तसान्द्रसमररेणुधूसराभिरामवपुषमोषधीनाथमिव पार्वणमस्त-पर्वतप्रस्थे पृथुनि रथपृष्ठे पर्यस्तमासादितविजयरिपुस्तस्य दर्शनपरि-जिहीर्षाय(र्षया) च निमिषितेक्षणारविन्दमाजिविपन्नसुभटजीवितसंजि-घृक्षयायातयमदर्शनागतया यमुनयेवाबद्धविकटतरङ्गया भ्रुकुट्यान्वका-रितललाटभित्तिमुपरि रिपुशिलीमुखासारेणाधस्ताच्चरणरभसरोमाञ्चजाल-केन जर्जरितमुल्लसितमिव मूर्च्छान्धकारमुन्निद्रतापिच्छनीलमस्थूलं कालायसकवचमुरःस्थलेनोद्वहन्तमुत्सृष्टचापयष्टिना वामेन दक्षिणेन च स्फुरितदीर्घनखकिरणेन तत्क्षणभ्रष्टकरवालान्वेषिणेव पाणिना विरार्द्र-

मानमुपात्तकेतुस्तम्भविन्यस्तदेहभारैश्च निद्रां दूरमुग्नकण्ठनालैरात्मयोधैः परिवृतं प्रसुप्तसरःकुमुदमध्यवर्तिनमिव प्रतिमादिनकरमव्याजसौर्यावर्जितहृदयैश्चागत्यागत्य वीरवृन्दैर्वन्द्यमानबाणवृणोद्गीतरुधिरबिन्दुनिकरं कुमारम्। उपजातविस्मयश्च निश्चलस्निग्धतारकेण चक्षुषा सुचिरमवलोक्य तदवलोकनप्रीतमनसा समीपवर्तिना सामन्तलोकेन सह बहुप्रकारमारब्धतद्वीर्यगुणस्तुतिस्तस्मिन्नेव प्रदेशे मुहूर्तमात्रमतिष्ठत्। तद्वृत्तान्तश्रवणसकुतूहलश्च निपुणतरमपि व्यापारितया दृष्ट्या यदा प्रतिपक्षपक्षैकमपि पुरुषं चैतन्यालिङ्गितं ना(न्य)द्राक्षीत्, तदास्य चामरग्राहणीमप्राक्षीत्—'बालिके, कथय कोऽयम्, कस्य वापत्यम्, किमभिधानः, किंनिमित्तमनि(न)पेक्षितात्मविनिपातः पतङ्ग इव पावके सहसैवास्मिन्नस्मत्सैन्ये प्रविष्टः। किमर्थमसमर्थसहायेनानेन साहसमिदमतिदुष्करं कर्माध्यवसितम्। कया प्रत्याशयानेन शक्तेनापि शत्रुवधकर्मणि मत्कृतो दिवस एवाभियोगः। किं फलमभिलष्य निर्व्याजपौरुषेणाप्यङ्गीकृतः क्षुद्रक्षत्रियलोकसूत्रितः सौप्तिकयुद्धमार्गः'। सैवमापृष्टा सेनाधिपेन किमपि ध्यात्वा परामृष्टनयनबाष्पसलिला विलोक्याभिमुखमन्तर्दुःखावेगपिशुनमत्यायित(?) निःश्वस्य च शनैरवादीत्—'महाभाग, किं कथयामि मन्दभाग्या। कीदृशोऽयमिदानीं कथ्यते। गन्ता खल्वस्तमस्य कथा। कथ्यमानापि कीदृशी भवत्येतदवस्थस्यास्य पूर्वावस्था। तथापि श्रूयताम्—एष खल्वशेषद्वीपावनीपालमौलिमालामलनदुर्ललितपादयुगलस्य युगायतभुजप्राकाररक्षितनिजक्षितेरवधीरितविषधरेन्द्रवदननिःश्वासविषवेगेनागणितकालकूटज्वालागणनामपेक्षितरामविशिखशिखिशिखाडम्बरेण विज्ञातवाडवदहनदाहवेदनावेगेन जलनिधिनाप्यसोढनौतन्त्रपरिवृढप्रयाणसंमर्दस्य यस्य प्रमद-

सैन्यकरिविषाणकोणविघटितत्रिकूटकटकभित्तेरवस्कन्दपातभीतेनेव सर्वदा शर्वरीषु विहितप्रचारेण नक्तंचरचक्रवर्तिना लङ्केश्वरेणापि सततमभिशङ्कितोत्साहस्य सिंहलद्वीपभर्तुर्महानरेन्द्रस्य चन्द्रकेतोरात्मजः सर्वातिशायिना भुजवीर्यविलसितेनास्त्रशिक्षाकौशलेन च विस्मायितसकलपार्थिवः पार्थवत्पृथिव्यामेकधन्वी समरकेतुर्नाम । सोऽयं महाबलतया बाल एवाधिगतयौवराज्याभिषेकः सकलसागरान्तरालद्वीपविजिगीषया गतोऽपि दूरमतिसत्वरः पितुराज्ञया राज्ञोऽस्य कुसुमशेखरस्य साहायकं कर्तुमासन्नवर्तिभिः कतिपयैरेव नृपतिभिरनुप्रयातः काञ्चीमनुप्राप्तः । स्थितश्चात्र पञ्चषाण्यपि दिनानि दूनचेतोवृत्तिः । अद्य तु प्रातरेव हेतुना केनापि विधृतोदारशृङ्गारवेषः परिमितैरेव सह सुहृद्भिर्नरेन्द्रभवनोद्यानभूषणं गतः स्मरायतनमासीनश्च । तस्य द्वारदेशे विशन्तमनवरतगंतमुपरित(?)निमेषेण चक्षुषा निरीक्षमाणो नगरनारीजनं स्थितो दिनमशेषमवशितायां च यात्रायामधिकतरमारूढगाढा रतिः कारयित्वा मकरकेतोः पुरःसरोजिनीपत्रशयनमिहेवसयाद्य शयनीयम्' इत्युदीर्य विसर्जितासन्नपरिजनः केनापि विधेनातिवाह्य प्रदोषमागत्य चार्धरात्रसमये शिषिरक(?)स्मादेव सज्जीकृतसकलनिजबलः, 'कुमार, नायं क्रमो नयस्य' इति विनिवार्यमाणोऽपि मन्त्रिभिः, 'युवराज, विरम्यतामितो दुरध्यवसायात्' इति निरुध्यमानोऽपि बन्धुभिः, 'कल्याणि, अङ्गीक्रियतां पाशलग्नम्' इति निवर्त्यमानोऽपि मौहूर्तिकैः, 'देव, प्रतिपाल्यतामनुयाति सैन्यम्' इति विज्ञाप्यमानोऽपि प्रधानलोकेन, 'विद्वन्, निवेद्यतां कुसुमशेखरस्य' इति वारंवारमभिधीयमानोऽपि विबुधवर्गेण, निर्गतः काञ्च्या आकृष्यमाणश्च व्यसनैषिणा पुरो विधिना प्रणिधि(धा)नेनानातेन प्राप्तो भुवमिमामवस्थां च ।' इत्येवमावेदयन्त्यामेव तस्या-

मुपजातदुःखावेगेव प्रगलिततारका तनिमानमभजत रजनिः। अमरीभूतसुभटनिर्दयाश्लिष्टसुरवधूहारमुक्तामौक्तिकविसरमिव तुहिनजलबिन्दुनिकरं ववर्ष गगनतलम्। अरुणालोकतरलितानि वेतालवृन्दानीव तिरोबभूवुस्तिमिराणि। रणभूमिशोणितावलोकनमन्त इव पाश्चात्यशैलशिखरे(?)स्खलद्विकलपादः पपात तारापतिः आसक्तबालारुणप्रभाप्रभावपिहितवीर्यः सिंहलेन्द्रसूनुरिव निमिमील नक्षत्रराशिरुत्सृष्टतरुकुलायकोटराणि प्रशान्तप्रहारभयानीव विरतयोधशरवृष्टिसावकाशे विहायसि व्यचरन्(न्ना)नाकुलानि पत्ररथकुलान्यपर्वचलितवीरवर्गभिन्नसूर्यमण्डलरुधिरप्रवाह इव पूर्वदिग्भागमरुणीचकार संध्यारागः। भयानकाजिभूमिद(?)र्शीनापजातत्रासा इव सुदूरमपसस्रुराशादिग्मुखश्रस्ततनुतमिश्रविश्रान्तविरलतारकाशोकलम्बितालक तत्र लग्नबाष्पजललवा द्रविडराजलक्ष्मीरिव तत्क्षणं रराज रजनिः। व्याजविजितसिंहलेन्द्रसुतपराभवरोषित इव पुरस्तादुल्ललास लोहितायमानवपुरुष्णदीधितिः। एवं च प्रवृत्ते प्रत्यूषसि विपक्षविजयाभिलाष इव विलीने तमसि प्रसरति दिगन्तरेषु देवस्य प्रताप इव पातङ्गे महसि सहसैव प्रत्यबोधि सकलमपि तद्विरोधे सैन्यम। असावपि कुमारः प्रन(ण)ष्टनिद्राविकारो वज्रायुधमाविषादम् 'व्रज। विश्रब्धमेहि। न तावत्प्रहरामि यावन्न त्वया न प्रहृतम्' इत्यविशदाक्षरं पूर्ववासनावशेन व्याहरत्सु चिरनिद्राविमर्दजडपुटोदरमुदमीलयदीक्षणयुगलम्। अवलोक्य च पुरः परिवेष्टितरथमरातिलोकमात्मानं च तदवस्थमुपजातगुरुविषादो लज्जया पुनर्मोहान्धकारमविक्षत्॥

सेनापतिरपि तेन तस्यातर्कितेनासंभावनीयेनादृष्टपूर्वेण प्रत्युज्जीवनेन जनितविस्मयः प्रहर्षमन्दतारकेणानन्दजलबिन्दुसेकादिव विकसता

नयनारविन्दद्वयेनोद्भासमानस्तत्कालमासादितमहालाभमिव प्राप्तसकलकल्याणमिव समृद्धाखिलकाममिव फलिताशेषगुरुजनाशिषमिव कृतार्थमात्मानं मन्यमानो मुहूर्तं स्थित्वा तस्मिन्क्षणे भयतरलेक्षणस्य विपक्षकक्षीकृतस्वामिदर्शनविषण्णबुद्धेरन्धीभूतसकलदिशः कांदिशीकस्य शक्रलोकस्याश्वासनार्थं समन्तादभयप्रदानपटहमदापयत् । तदीयसारग्रहणोद्यतं चात्मसैनिकलोकं न्यवारयत् । आसन्नसरिति निर्वर्तितस्नानक्रियश्च दत्त्वा संगरसमाप्तप्राणेभ्यो बान्धवेभ्यः प्रणयिभ्यश्च शोकदीर्घश्वासतरलिततिलोदकं निवापाञ्जलिनादिश्य चायुधप्रहारक्षतमर्मणामरातियोधानामौषधकर्मण्याप्तजनम् । अधिरुह्य च ससंभ्रमाधोरणोपनीतं प्रधानजयवारणमारोप्य पुरः प्रत्यग्रयशःसुधाधवलवपुषमभ्युदयमङ्गलकलशमिव सिंहलाधिपसुतमारब्धयुद्धकथालापवाचालेन प्रणयिना राजपुत्रलोकेनानुगम्यमानः शनैः शनैः शिबिरमागमत् । क्रमेणासाद्य निजभवनमुपपादितसमस्ततत्कालोचितकरणीयो निर्वर्तितप्रत्यवसानादिकर्मणः समरकेतोरभ्यन्तर एव स्थितिमकल्पयत् । अधिशयिततल्पस्य च परिचारक इव स्वयं व्रणपट्टबन्धनादिक्रियामन्वतिष्ठत् । आप्तचिकित्सितप्रारब्धोपचारं च तमनतिचिरेणैव प्रगुणीभूतवपुषं प्रशस्तेऽहनि स्नातमुपनिमन्त्र्य सादरममात्यैर्बन्धुभिः सुहृद्भिरपरैश्च प्रधानपुरुषैः सहितमात्मगृहमानयत् । कृतभोजनोपचारं च तं वितीर्णकुसुमविलेपनवसनालंकारमुपनीतविविधवस्तुवाहनं प्रत्यर्पिताहवगृहीतनिःशेषकरितुरङ्गस्यन्दनं च विधाय विनोद्य च मुहूर्तमरतिच्छेदकारिभिः कथालापैरभिमुखो भूत्वा कृताञ्जलिरवादीत्—'कुमार, सकलजगदेकवीरस्य करदीक्षिता शङ्खसागरान्तरद्वीपभूपतेर्विपक्षव्यसनसंकटगतैर्महद्भिरपि भूमिपालैरपेक्षणीयसाहायकस्य चतुरुदधिविख्यातपार्थिवप्रथम-

सूनोः कथंचिद्विधिवशाद्ग्रहायातस्य राजादिपरेण परिकल्पितात्पवृत्तिर-स्मद्विधो जनः किं ते प्रियं करोतु। केन वा कृतेनोपकारेण प्रीतिम-धिगच्छतु। तथापि यद्यनुग्रहबुद्धिरस्मासु तदेतदङ्गीकुरु। सततमादे-शकारिणा समीपदेशस्थितेन मया प्रतिपन्नसकलपृथ्वीव्यापारभरनिरा-कुलो मदीयमाधिपत्यपदमथ तुच्छमिति मन्दाभिलाषस्तदा स परिजन इतो गत्वा तदेव पित्रा प्रतिपादितमतिप्राज्यवैभवमध्यास्स्व निजमेव यौवराज्यम्। मा च मन्यथा यथाहमेतेन निर्जित्य विहितानुग्रहः कथमिदं करोमि। कोऽहं तव पराजये धृताधिज्यधन्वानमन्योऽपि किमस्ति जगति यस्त्वां समरकर्मणा करोति विमुखम्। यत्तु मुख्यैर्नृ-पतिभिः समं समकालमेव नीत्वा वश्यतामिहानीतोऽसि, स तु प्रभा-वोऽन्यस्य कस्यचित्। अथवा किमनेन दूरस्थोऽपि दृष्टमात्रेण येन प्रन(ण)ष्टसकलचेष्टस्तदा समिति संजातोऽसि तदेव ते प्रकटमुपदर्श-यामि' इत्युदीर्य तत्कालमादिष्टनिकटराजलोकढौकितमनेकमहाप्रभाव-माणिक्यखचितमुद्रसं(म)ङ्गुलीयकरत्नमग्रतो दर्शयन् 'कुतः प्राप्तमेतत्' इति पृष्टश्च देवस्य शक्रावतारगमनात्प्रभृति पूर्ववृत्तं ज्वलनप्रभदेववृ-त्तान्तमखिलमपि राजलक्ष्मीस्वस्थानगमनपर्यवसानं यथाश्रुतमकथयत्। सोऽपि तच्छ्रुत्वा किंचिदुपशान्तचिन्तासंज्वरः शत्रुभुजबलोत्कर्षसंभाव-नाकृतामवज्ञाबुद्धिमात्मनि श्लथामकरोत्। अब्रवीच्च—'दण्डाधिप, बाढमावर्जितोऽहममुना दूरविनिवारिताहंकारप्रवेशपेशलेन त्वदीयसौज-न्येन। सदृशनिन्दाप्रशंसो मुनिरपि क ईदृशमात्मगुणापलापबद्धकक्ष-मरातिपक्षोत्कर्षवर्णनामुखरमखिलराजलोकसमक्षमुल्लपति, यादृक्त्वया सकलदिगन्तविश्रुतपराक्रमेण दक्षिणापथचक्रवर्तिना गदितम्। न केवलमव्याहतप्रसरया वातसंहत्या महत्त्वयापि ते तिरस्कृतं भुवनमेतत्।

कथमिव न प्रस(श)स्यते स राजा देवराजप्रभृतिभिः, यस्य वेश्मनि व्यवहरन्ति सद्यःकृतापकारे शत्रावपि वितीर्णप्राणसर्वस्वाः स्वभुजविक्रमोत्कीर्तनावसरेऽपि परकीयसामर्थ्यसमर्थनपरास्तद्विद्धा राज्यचिन्तकाः प्रधानसचिवाः। सर्वमुचितमनुचितं च करणीयं मया त्वदीयवचनम्। केवलमिदानीं न वक्तव्योऽहमन्यत्किमपि। यदि च पक्षपातबुद्धिर्मयि ततः किमजाया(यत)। कुरु कृतार्थं मे चक्षुः। तमेव दर्शय प्रीतिविस्तारितेक्षणवदनेन वज्रिणा त्रिदशसंसदि स्तुतगुणमसमसाहसावर्जितराजलक्ष्मीदर्शितप्रत्यक्षनिजरूपविभ्रममपेतरजसं राजर्षिम्। उपजाततर्षोऽहमतितरां तदङ्घ्रियुगलावलोकने।' इति वदन्तं तं प्रीतहृदयो दण्डाधिपः प्रत्यवादीत्—'कुमार, यद्येवमद्यैव कुरु प्रस्थानम्।' इत्युदीर्य निरवद्येऽह्नि शिक्षयित्वा बहुप्रकारमनुचरीकृतप्रचुरपदातिचक्रेण कृत्वा मया सततकृतसेवं देवपादान्तिकमजीगमत्। सोऽहमादाय तमुदग्ररभसं प्रस्थितः पथि वहन्नहरहः प्रयाणैरलघुभिर्विलङ्घितानेकनगरग्रामजनपदः क्रमेणास्यानन्तरातीतायां विभावर्यामिह नगर्यां प्रविष्टः। दृष्टं चाद्य पुण्योदयेन सुचिरकालाभिकाङ्क्षितदर्शनं चरणकमलद्वयं देवस्य, एतां च दिव्याङ्गुलीयकप्रभावावेदनप्रसङ्गागताम्। अवनिपतिराकर्ण्य विजयवेगतो वज्रायुधसमरकेतुसमरवार्तामास्थानवर्तिना नरपतिसमूहेन सहितं परं विस्मयमगच्छत्। अव्याजशौर्यावर्जितश्च न तथा लब्धविजयेषु सुहृदिव वज्रायुधे यथा विपक्षे समरकेतौ बबन्ध पक्षपातम्। तथाह्यस्य चिन्तयन्नचिन्तितात्मपरसैन्यगुरुलाघवां मनस्वितास्, विभावयन्नेकरथेन कृतमहारथसमूहेषु मध्यप्रवेसां(शां) साहसिकताम्। विचारयन्विधृतपौरुषप्रकर्षमरातिपरिभाषणेष्वरोषपरुषमालापविभ्रमम्, अवधारयन्ननादरनिरस्त्रीकृतनिखिलपरचक्रनायकं सायकव्या-

पारमतिचिरमतिष्ठत् । अनुरागतरलितश्च तत्रैव गत्वा तं द्रष्टुमिव परिष्वक्तुमिव संभाषयितुमिवाभ्यर्चितुमिव स्वपदेऽभिषेक्तुमिव चेतसाभिलषितवान् दर्शनोत्सुकश्च पुनरवोचत्—'विजयवेग, क्वास्ते स सिंहलेश्वरसूनुः कदा च सोऽस्मान् द्रक्ष(क्ष्य)ति ।' स जगाद—'देव, स स(श)क्रावतारोद्यानसंनिधे रमणीये सरस्वाः परिसरे निवेशितशिबिरस्तिष्ठति । दर्शनं तु यदैव देवः प्रसीदति तदैव करोति ।' तच्छ्रुत्वा नरपतिरासन्नवर्तिनमत्युदारवेषं साकारवपुषमभ्यर्हितमशेषस्यापि परिग्रहस्य महत्सु कार्येषु व्यापारणीयं हरदासनामानं महाप्रतीहारमाकारणाय तत्क्षणमेव तस्य प्राहिणोत् । स गत्वा सपरिवारस्तदावासे कृतसमुचितोपचारो बहुप्रकारोपवर्णितं नरेन्द्रानुरागनिर्वृतं कृताञ्जलिपुटस्तं राजकुलमानिनाय, प्रावेस(श)यच्च । दर्शितप्रश्रयातिरेकोऽभ्यन्तरं प्रविष्टं च तं धृतविदग्धोज्ज्वलवेषकतिपयासपदातिपरिवृतम्, आलोकनोपजातसंक्षोभसरभसापसृतेन द्वारवर्तिना राजलोकेन दीयमानमार्गम्, अग्रयायिना विनयपेशलालापेन दौवारिकजनेनागम्यमानम्, आत्मप्रतिबिम्बकैरिव समानरूपैः समानवयोभिः समानवसनालंकारधारिभिरव्यभिचारिभिः प्रधानराजपुत्रैः परिवृतम्, [१]उपान्तप्ररूढकल्पपादपविटपमिव पारिजातपोतम्, दिगन्तरव्यापिना कुवलयदलश्यामलेन स्वदेहप्रभासंतानेन तिरोहितसर्वाकारम्, अन्तुराशिजलमध्यवर्तिनं मैनाकमिव विभाव्यमानम्, अनवरतमुन्मिषता निसर्गस्निग्धेन कर्णपूरमौक्तिकस्तबकेन कृत्तिकापुञ्जेनेव [२]कुमारशब्दविप्रलब्धेन कृतमुखालोकम्,

---

१. उपान्ते निकटे प्ररूढाः कल्पपादपस्य विटपा यस्य पारिजातपोतस्य तम्, समानराजपुत्राणां कल्पपादपेनोपमा. २. कुमारस्य स्कन्दस्य शब्देन रथात्या विप्रलब्धेन कुमार आगच्छेति कुमार विजयस्वेत्यादिशब्देन.

हराट्टहासद्युतिहासिना दूरमुल्लसितेन हारप्रभावलयेन वक्षस्थलनिवासिन्याः श्रियः क्षीरोदमिव दर्शयन्तम्, अतिबहलकेयूरपद्मरागांशुरञ्जितैश्चिरप्ररूढैरपि सरसैरिवारिशस्त्रप्रहारैः स्थपुटितोरःस्थलम्, तरुणतामरसताम्रतलस्य सविलाससंप्रेङ्खतः पाणियुगलस्य विसर्पन्तीभिर्धवलनखदीधितिभिरम्बुधारभिरिव सावष्टम्भचरणपातभरपीडितामुक्षन्तं क्षितिं क्षितिपतिसमरकेतुमद्राक्षीत्। दृष्ट्वा च संमुखचलितवदनो वारंवारमादरप्रणिहितप्रासादाङ्गदृष्टिरासन्नसर्पिणा महाप्रतीहारेण कारितप्रणाममादरप्रणतिलग्नकुट्टिमोपहारकुसुमकिंजल्कसारीकृतशिरोरुहमेह्येहीति दूरादेवाह्वयत्।

उपसृत्य चरणान्तिके भूयः कृतप्रणामं च मे प्रेम्णातिदूरं प्रसारिताभ्यां भुजाभ्यामाकृष्याह्व(ङ्क)मारोपयत्। आश्लिष्टमुक्तं च तं विनयादनादृतसंभ्रमाधिकृतढौकितविकटवेत्रासनमासन्नोपविष्टमुन्नमितपक्ष्मणा निश्चलनिबद्धलक्षेण चक्षुषा निरीक्ष्य साचीकृतसि(शि)रोधरः सुचिरमीषत्स्मितः समभाषत—'वत्स, स्वागतं ते। साधुकृतं यदत्रागतोऽसि। अनेन तव निसर्गसुन्दरेण दृष्टमात्रेण देहाकारेण पुरुषकारेणेव श्रुतेन श्रोत्रमानन्दितं मे किमपि नेत्रयुग्मम्। धन्यस्त्वमेको जगति यस्मादुपजातमात्मनः पराजयं विजयमिव सभासु शंसति प्रीतिविकसिताक्षो विपक्षलोकः। तोकमुपजनयता भवन्तमस्तोकसंचितसुकृतसंभारेण धारितो धुरि समस्तानां पुत्रिणामात्मा महात्मना सिंहलेश्वरेण। तेजस्विसंगमेषु स्फुरदधिकौजसा सहजमार्दवगुणोपेतेन स्थिरप्रकृतिना त्वयैकेन भूषितं पुरुषरत्नेन परुषतरलैर्बहुभिरपि पाषाणरत्नैः परिकृताय प्रायो न गृहं स्पृहयत्यद्य सिंहलद्वीपाय सर्वथा कृतार्थोऽहम्। अद्य फलितो मे दक्षिणापथविजयः। श्लाघनीयतां गतमिदं राज्यमद्य।

अधिगतपरिपूर्णशोभेयमुपजाता सभा। शिरश्छेदसाहसदर्शनादधिकपरितुष्टया दिव्याङ्गुलीयकार्पणव्यपदेशेन देशान्तरादानीय दत्तोऽसि मे। द्वितीयस्त्वमात्मजो राजलक्ष्म्याः। सामान्यममुना कुमारेण सह तवेदं राज्यमास्व। यदृच्छया भावितभूरिनिर्वृत्तिर्मनसि मा स्म मंस्थाः यथाहमानीतः परैरिति। न कश्चिदप्यत्र परः। सर्वोऽप्येष तव पर्वतस्येव मैनाकस्य पर्यन्तवर्ती सपक्षो भूभृतां वर्गः। स्वर्गोद्यानवनलेखाचारुरेकैव दूरे तिलकतात्मचम्पकैलालवङ्गपुन्नागबहुला दक्षिणार्णवोपकण्ठवनराजिः। अपरस्तु सर्वः सनीडः क्रीडोपकरणग्रामः। सर्वथा कुरु स्थिरमवस्थानाय चेतः। यच्चिन्तयसि तत्कृत्स्नमपि तवाचिरेण संपत्स्यते समीहितमिह।' इत्युक्त्वान्यतो विवर्तितमुखः पादपीठान्तिकोपविष्टमनवरतसंचारितस्नेहार्द्रलोचनं समरकेतुवदने हरिवाहनमवादीत्—'वत्स, एष समरकेतुर्गुणैः समधिकं समं चात्मबन्धुवर्गे प्रधानपुरुषमपश्यता मया तवैव सहचरः परिकल्पितः। अस्य कल्पायुषा त्वया दर्पणस्येव सद्वृत्तस्य कलङ्करहितात्मनो मत्पुरस्कृतस्य सर्वकालमभिमुखेन भवितव्यम्। सुविदितदण्डनीतेः सौविदल्लस्येव निजपरिग्रहः सततमायत्ततां नेयः। भोगसुखसाधनैकहेतोः सुकृतकर्मण इव दानादिक्रियाभिः कर्तव्यमजस्रमुपबृंहणम्। सुश्लिष्टपरिवारस्य तरवारेरिव निशास्वपि स्वसंनिधौ विधेयमवस्थानम्। अन्वहं चायमापत्स्वपरिहारेण, संपत्स्वादरातिशयेन, समानगुणेषु गौरवोत्कर्षेण, विवादेषु पक्षग्रहणेन, नूतनार्थलाभेषु संविजनेन, नर्मस्वमर्मोद्घाटनेन, मन्त्रणेष्वदूरीकरणेन, दारसंनिधावविकारदर्शनेन, प्रणयकलिकोपेषु लयमनुनयेन, उत्सवेष्वग्रपूजासंपादनेन, प्रारब्धवस्तुनिर्वहणेषु स्तुतिप्रपञ्चनेन, प्रतिपन्नकार्येष्वविसंवादनेन, सर्वत्र चातिविश्वासदर्शनेन

परसंख्यमानेय एष ते भ्राता च भृत्यश्च सचिवश्च सहचरश्च।' इत्युक्त्वा विसर्जितास्थानराजको नृपतिरासनादुत्तस्थौ । कुमारोऽपि 'यदाज्ञापयति तात' इत्यभिदधानः करे गृहीत्वा **समरकेतुं** निषिद्धपरिजनः शुद्धान्तसंचारोचितेन परिचारकगणेनानुगम्यमानो **मदिरावती**भवनमगच्छत् ।

तत्र च कृतप्रणामो मातुर्दर्शयित्वा **समरकेतुं** कृतसकलतद्वृत्तान्तसंकथः स्थित्वा चिरमवाप्तवस्त्रभूषणेन तेनानुगम्यमानः स्वावासमागच्छत् ।

तत्र चारब्धनिजनिजकर्मणा सूदचारप्रमदाप्रायेण **मदिरावती**परिजनेन यथायोग्यमुपपादिताः समाहृतसकलप्रधानलोकेन **समरकेतु**नान्येन च प्रणयिना राजसमूहेन सहितः स्नानभोजनादिकाः क्रिया निरवर्तयत् । अपराह्णसमये च तस्याहारमण्डपाजिरनिषण्णस्य निकटोपविष्टविशिष्टेष्टराजलोकस्य राज्ञा समादिष्टः **सुदृष्टि**नामाक्षपटलिकः प्रविश्य पट्टकारोपितनिरवशेषविशेषमभ्यर्णवर्तिभिरनेकैः कश्मीरादिमण्डलप्रतिबद्धैः प्रधाननगरग्रामैरुपेतं कुमारभुक्तावखिलमुत्तरापथमर्थयांबभूव । **समरकेतो**श्च सर्वदायसहितानङ्गजीवानङ्गादिजनपदान्प्रायच्छत् । एवं च दर्शितप्रसादेन नृपतिना प्रतिदिवसमापाद्यमाननवनवसत्कारयोः, नियुक्तनिजपरिवारया सादरं **मदिरावत्या** चिन्त्यमानस्नानासनविलेपनादिशरीरस्थितिसाधनयोरनुजीविनोः, राजपुत्रजनस्य पात्रतानुसारेण संविभक्तस्वभुक्तिनगरग्रामनिवहनिश्चिन्तयोः, दुष्टदायादसमवष्टब्धराज्यैरागत्यागत्य दिङ्मुखेभ्यो निजपदार्थिभिः पार्थिवकुमारैरनवरतगृह्यमाणसेवयोः, नरेन्द्रसेवया प्रतिदिनमवन्ध्यीकृतोभयसंध्ययोः, दूरीकृतदुष्टसामन्तसख्योपचारव्यवहारयोः, गुणानुरागिभिराग-

न्तुकफलार्थिभिश्च द्वीपान्तरनराधिपैर्वासोभिराच्छादनै रत्नालंकारैर्विलेपनैः फलैरायुधैर्यानैरन्यैश्च निजदेवसंभवैरपूर्ववस्तुभिः सततमुपचर्यमाणयोः, उपचीयमानया तारुण्यलक्ष्म्या प्रतिक्षणमुल्लासितैः रूपबललावण्यादिभिः शरीरैरन्तःकरणजैश्च सत्यशौर्यावबोधवैदग्ध्यपुरःसरैर्गुणगणैरगणितक्रममाक्रम्यमाणयोः, अतिसुखपराङ्मुखेन धूर्जटिललाटलोचनाग्निनेव हृदयेनानङ्गीकृतकंदर्पयोः, दुष्टजनपदृष्टिदोषसंरक्षणार्थमिव पौरलोकेन स्वान्तेषु सततधार्यमाणयोः, शरदिन्दुमण्डलालोकेऽप्यप्रगुणितगुणेन सुरभिसमयेऽप्यघटिताभिनवमार्गणेन जलदागमेऽप्यनाकृष्टचापयष्टिना दृष्टदुर्वारभुजपराक्रमोत्पन्नसंत्रासेनेव दूरस्थेन मकरलक्ष्मणा लक्षीकृतदेहयोः, कदाचिन्निजनिजास्त्रकौशलदर्शनेन कदाचित्पदवाक्यविचारेण कदाचित्प्रमाणप्रमेयस्वरूपनिरूपणेन कदाचिदभिमतागमग्रन्थार्थसमर्थनेन कदाचिदसद्दर्शनोक्तयुक्तिनिराकरणेन कदाचिन्नीतिशास्त्रनिबन्धपाठेन कदाचित्कलाविषयविचारकेलिकलहेन कदाचिद्रसाभिनयभावप्रपञ्चोपवर्णनेन कदाचिद्वेणुवीणामृदङ्गादिवाद्यविनोदेन कदाचिच्चिरंतनकवीन्द्रकाव्यमुद्राभ्यसनेन भावुकैः सुहृद्भिर्विद्वद्भिश्च सह रममाणयोः, एकत्र कल्पिताशनस्नानासनशयनयोः, सदृशवेषालंकारधारिणोः, शाक्यशिष्ययोरिवानुपजातविप्रयोगदुःखयोः, सुखमया इव धृतिमया इव अमृतमया इव प्रीतिमया इवातिचक्रमुः । कतिपयेऽपि दिवसा यथोत्तरं प्रकटितप्रसादेन नृपतिना दृश्यमानोऽपि सुतनिर्विशेषमीषदपि **समरकेतु**र्नोत्सेकमगमत् ।

अपहाय भुजवीर्यमन्वकृत **हरिवाहन**स्य सर्वानपि गुणानात्मगुणगणेन प्रगुणितश्च परमया भक्त्या प्रीत्या च निःसामान्यया राजानमिव तमहर्णि(र्नि)शमसेवत । **हरिवाहनो**ऽपि तद्गुणानुरञ्जितमनाः स्वमदृष्टेऽपि **समरकेतौ** विपक्षजनपद इव जिगीषुः परां मुदमवाप्त् ।

एकदा च स ग्रीष्मसमये प्रातरेवोत्थाय निर्वर्तितस्नानभोजनादिविधिरुदधिजलल्लुलितवासुकिमुक्तनिर्मोकनिर्मलं परिधाय वासोयुगलमुन्निद्रमल्लिकासु कुलरचितशेखरो मदान्धमधुकरध्वानवाचालैरचल इव मैनाकनामा, निर्झरौघैरंसशिखरावलम्बिभिर्धूलीकदम्बप्रालम्बैरभिनवैरुद्भासमानः, शिरीषतरुकुसुमकल्पितकर्णपूरः, कर्पूरपरिमलभुवाचन्दनद्रवेणाविहितसर्वाङ्गीणाङ्गरागः, तत्कालापनीतरत्नोपलशकलशीतलममलमुक्ताफलप्रायमल्पमुद्वहन्भूषणकलापम् । अच्छकान्तिरथ दर्पणप्रतिबिम्बितैः प्रीतिनिश्चलचक्षुषो जनस्य सर्वतः सहस्रसंख्यैर्विलोचनैः शबलितगात्रयष्टिः, ऐरावताधिरूढः सहस्राक्ष इव साक्षादुपलक्ष्यमाणः, निक्षिप्तनिजवेषानुरूपनिःशेषनेपथ्यस्य तत्क्षणगृहीतसितस्रग्णेर्निषादितां प्रतिपद्य सिन्धुरस्कन्धमध्यासितस्य **समरकेतो**रधिस्कन्धमर्पितोभयबाहुपाशः, पश्चिमासनाध्यासिना ताम्बूलदायकेन प्रतिवेलमुद्धूयमानकनकदण्डडामरैकचामरः, तुलितगत्वरतमालतरुखण्डेन मायूरातपत्रमण्डलेन जयन्त इव संक्रन्दनानुचरीकृतेन बालजलधरव्यूहेनान्धकारिताग्रिमभूमिरग्रेसरेण सरयूतटासङ्गि **मत्तकोकिलं** नाम बाह्योद्यानमगच्छत् ।

प्रविश्य च तत्र परिमिताप्तराजपुत्रपरिवृत इतस्ततस्तत्कालबद्धमुग्धकुण्डलानि नवपरिमलाकृष्टवाचालषट्पदकुलानि धूलीकदम्बगहनानि, कादम्बकुलनिषेवितोद्दण्डकमलिनीपत्रखण्डाश्च तटपाटलाकुसुमवासिताम्भसः क्रीडादीर्घिकाः, निदाघतप्ताध्वगरचितपल्लवतल्पांश्च सलिलपरिपूरितालवालवलयितमध्यान्माधवीमण्डपान्वातायनासीनवनिताकरप्रचेयतरुफलांश्च सुधापङ्कधवलान्प्रासादकानवलोकयन्नचिरफलितजलजम्बूनिकुरम्बमुद्गतस्तोककुसुमसुषमकेतकीस्तम्बमुच्चोच्चरच्चीत्कारमु-

स्वराणां प्रेङ्खतामनवरतमुद्धाटकानां घूर्णमानैर्नभसि नभस्वदाघट्टनजर्जरैर्जलतुखा(षा)रजालकैर्जडीकृतनिदाघकर्कशार्ककरवितानमापानकमृदङ्गरवजनितशृङ्गारैर्नगरीजनैर्वनशिखण्डिभिश्च युगपदारब्धताण्डवैर्मण्डितलतामण्डपमदूरवहदगाधनीरं सरय्वास्तीरपरिसरमुपासरत् ।

तत्र च संनिधाने मकरध्वजायतनस्य नितान्तसुभगे भूविभागे प्रथममेवागत्य परिजनेन सूत्रितम् । अनतिमात्रोत्थितस्य प्रस(श)स्तविस्तारभागकूजितानुमीयमाननीलपल्लवप्रभमभान्धकारावगुण्ठितकलकण्ठकुलस्य लम्बमानबहलफललुम्पिस्तम्बभारदूरावर्जितोदारविटपस्य जलतुषारवर्षिणा सरलितसमदहंससारसारवेण नभस्वता स्वैरमान्दोलितसान्द्रशाखामण्डलस्य तरुणसहकारखण्डस्य मध्ये महता बालकदलीवनेन कवचितम्, अचिरविकचानामजिराशिरीषशाखिनामलिविघट्टितैर्गलद्भिर्बलिशुकशकुनिगलनालनीलैः प्रसूनस्तबकैराकाशजाह्नवीशैवलैरिव शैत्यलोलैरनुसृतपुरोभागम्, प्रतिभित्तिलम्बितविचित्रविश(स)सूत्रचामरम्, प्रतिद्वारमाबद्धहरितचन्दनप्रवालवन्दनमालम्, प्रतिस्थ(स्त)म्भमारोपितहिमशिलाशालभञ्जिकम्, प्रतिगवाक्षमुपनिहितकालागुरुधूपघटितम्, सतारागणमिवाङ्गरागमणिभाजनैः, सान्धकारमिव परिमलाकृष्टमधुकरपटलैः, सज्योत्स्नमिव चीनांशुकवितानैः, अतिशिशिरतया च जलकलशैरपि निबिडकर्पटावगुण्ठितकर्णैरुत्पन्नशिरोवेदनैरिवाधिष्ठितम्, उद्यानहंसैरपि चञ्चुसंपुटधृतमृणालसूत्रपिण्डैः प्रावरणपटवानार्थिभिरिवेतस्ततो धावद्भिरध्यासितम्, आक्रीडगिरिभिरपि वारंवारमुच्चरत्तारमयूरकेकैराकारितनिदाघतप्तापरशिलोच्चयैरिवामुक्तसांनिध्यम्, अङ्घ्रिपैरपि परस्परसंवलितशाखैरभिलखि(षि)तनिरन्तरशरीराश्लेषैरिव परीतम्, अरतिविनोदस्थानमिव, सागरविप्रयोगे सरय्वाः, दुर्गनि-

वेशमिव ग्रीष्मनिर्दयावस्कन्देषु शिशिरस्य दाहज्वरचिकित्सागृहमिव दिवसकरमण्डलप्रवेशेषु चन्द्रमसः शिशिरोपचारमन्दिरमिव वज्राग्निसंतापातिवाहनेषु हिमगिरेः, उपरि वर्षतां च प्रावृषेण्ययन्त्रजलधराणामुद्धुरनिनादनर्तितमयूरमण्डलेन निपतता समन्तादश्रान्तसंतानेन निरन्तरन्यस्तचन्द्रमणिशिलाप्रणालविगलितेन स्थवीयसा पाथसां प्रवाहेण प्राकारवलयेनेव फाटिकेन प्रान्तेषु कृतपरिक्षेपम्, अम्लानमल्लिकामाल्यरचितशेखराभिः श्रवणावलम्बिशैवलवल्लरीहरितायमाननवमधूकपाण्डुगण्डस्थलाभिः कण्ठकन्दलामुक्तहिमगुलिकाहारहासितोन्नतस्तनकलशाभिरसितोत्पलनालवलयाधिष्ठितप्रकोष्ठकाण्डाभिः पदे पदे रणितमधुकरजालकिंकिणीचक्रवालेन बकुलमालामेखलागुणेन परिक्षिप्तघनजघनभागाभिर्घनसारसंपर्ककर्कसा(शा)मोदेन स्पर्शेन्द्रियहारिणा हरिचन्दनरसद्रवेण संपादिताप्रपदीनचर्चाभिर्जलार्द्रबिश(स)सूत्रसंव्यानवाहिनीभिरुद्यानदेवताभिरिव संभूयोपस्थिताभिरभिनवयौवनाभिर्वाररमणीभिरध्यासितविततवातायनम्, अतिविचित्रानेकचित्रशालं जलमण्डपमगच्छत् ।

प्रविश्य च तत्र कतिपयाप्तसहचरसहायो विभावयन्नितस्ततस्तस्य रचनाविचित्रतामतिचिरं विश्रामी(?) विरतकौतुकश्च क्वणद्भिरग्रतः श्वासपरिमलावकृष्टैरलिभिरभ्यर्थित इवानल्पमेकं कुसुमतल्पमध्यास्त । निषण्णं च तत्र तमुपसेवितुमतीव सेवाकुशलाः कलाविदो विदितसकलशास्त्रतत्त्वाः कवयो वाग्मिनः काव्यगुणदोषज्ञा विज्ञातविविधपुराणेतिहासकथाः कथाख्यायिकानाटकादिप्रबन्धबद्धरतयो रतितन्त्रपरम्परापरामर्शरसिकमनसः प्रियदर्शना विदग्धोज्ज्वलवेषवपुषः परिहासशीलाः स्वभावपेशलोक्तयः प्रत्येकमावेदिताः प्रतिहारेण राजपुत्राः

प्राविशन्। अपरेऽपि तत्कालसेवोचिताः सवयसः प्रधानारजलोकाः संनिदधुः।

यथास्थानमुपविष्टैश्च तैः सह प्रस्तुतविचित्रकथालापस्य चित्रपदभङ्गसूचितानेकसुन्दरोदारार्था प्रवृत्ता कथंचित्तस्य चित्रालंकारभूयिष्ठा काव्यगोष्ठी। तत्र च पठ्यमानासु विद्वत्सभालब्धख्यातिषु प्रहेलिकाजातिषु चिन्त्यमानेषु मन्दमतिजनितनिर्वेदेषु प्रश्नोत्तरप्रभेदेषु भाव्यमानासु प्रसन्नगम्भीरभावार्थासु खग्रङ्गकगाथातसु(?) विमृश्यमानेषु बाधानुपदसंपादितोत्सेकेषु बिन्दुमात्राक्षरच्युतकश्लोकेषु हस्यमानेषु दीर्घकालानुभूतनिष्फलचिन्तामौलेषु प्राज्ञंमन्येषु प्रकाश्यमाने साधुवादविधेनाबुधानां बोधरभसे विजृम्भमाणा निर्भरं शिष्याणां कौतुकरसे काव्येष्वतीव रसिकः सर्वदा निकटवर्ती कुमारस्य नर्मपात्रं सकलराजपुत्राणां मञ्जीरनामा बन्दिपुत्रः किंचिदुपसृत्य हरिवाहनमवोचत्—'कुमार, प्रक्रमागतमेव किंचिद्विज्ञाप्यसे। कुरु क्षणमात्रमेव धनदानेनानुग्रहमस्यैव समनन्तरातिक्रान्तस्य मधुमासस्य शुद्धत्रयोदश्यामहमहमिकोपदर्शितनिजविभवविच्छर्देन नगरीनिवासिना भुजंगलोकेन भक्त्या प्रवर्तितं पात्रोत्सवमवेक्षितुमिदमेव सर्वतो विरचितविचित्रवस्त्रध्वजविधानमात्तकनकशृङ्गवेश्याङ्गनाभुजङ्गजनपरस्पराब्धजलसेकयुद्धं भगवतो मकरध्वजस्यायतनमागतोऽस्मि। विस्मयस्मेरचक्षुषा च प्रविशता मया प्राङ्गणसहकारपादपस्य मूले मृणालसूत्रवलयितग्रीवाविभागं मध्यभागविन्यस्तमुग्धस्तनमुखमुद्रेण स्त्यानतुहिनपाण्डुरत्विषा शोषाधिगतकाठिन्येन चन्दनपङ्कवेदिकाबन्धेन संदानितोभयान्तमभिमतवियोगविधुराभीरकामिनीकपोलपाण्डुताडीपत्रखण्डमवलोकितम्। आदाय च सकौतुकेनोत्तरीयवस्त्रैकदेशे

नियम्त्रितम् । अवसितायां च यात्रायां निजनिवासमागतेन विजने निविश्य कौतुकावेशात्कस्येदमिति सर्वतो निरूपितम् । अपश्यता च पृष्ठे नामाक्षराणि तत्क्षणमेवापनीय मुद्रामुद्वेष्टितम् । दृष्ट्या च तत्र ललितपदसंनिवेशासान्द्रमृगमदमषीपङ्कलिखितैः प्रत्यग्रकुङ्कुमपत्रभङ्गशोभिभिः कृष्णागुरुधूपवाससंभृतसौरभातिरेकैरभिनवमौक्तिकक्षोदविशदवर्णेन पुण्यपरिमलमुचा कर्पूरचूर्णेन समन्तादवतीर्णैर्निरन्तरैरपि परस्परासंस्पर्शिभिरवाप्तपरिणतिप्रकर्षैरपि सुकुमारसर्वावयवैरक्षरैरुपेता दुरवबोधतात्पर्यवस्तुरेकैवार्या । परिभाविता च वारंवारमादरव्यापारितहृदयेन । नतु तदीयं हृदयमवगतम् । तदादिशतु कुमारः सर्वमेवानुक्रमेण किं तत्पत्रकं केन प्रेषितं कस्य वा प्रेषितं किमत्र कार्यं विवक्षितम् ।' इत्युदीर्य विशदवर्णोच्चारया गिरा सप्रगल्भमार्यामिमां पपाठ—

गुरुभिरदत्तां वोढुं वाञ्छन्मामक्रमात्त्वमचिरेण ।
स्थातासि पत्रपादपगहने तत्रान्तिकस्थाग्निः ॥

अस्यां च पठ्यमानायामवहिताः सर्वे सभासदो बभूवुः । परिभावयतामेव च तेषां पाठसमकालमेव प्रज्ञाबलेन मुधा कोसलाधिपतिसूनुरवदत्—'सखे, यत्तदासादितं त्वया तथाविधं ताडीपत्रकम्' असाध(व)नङ्गलेखस्तावत् । स च कयाचिदीश्वरकन्यया समारूढप्रौढयौवनया गुणानुरागप्रगुणितेन स्वचेतसा विदत्वाप्तसहचरीजनेन वा भूयो भूयः प्रवर्तितया कुमारीजनसहोत्थानपत्रपामपहाय कस्यचित्पूर्वमेवानुरागपिशुनैरिङ्गिताकारैरभिनिन्दित एकान्ते पांशुप्रयुक्तप्रार्थनस्य सततनुसतताानुवृत्तिपरोऽपि गुरुभिस्त्वदीयैर्नाहमनुगृहीतो भवत्याः प्रसादेन, तदिदानीमनिच्छतोऽपि मे दुरात्मनानेन मदनवह्निना दह्यमान-

मिदमनुचितेनापि विधेनाजीवितस्वामिनीं कर्तुमिच्छति त्वामतर्कितोपायान्तरं हतहृदयम्, अतो नाहमत्रापराधीति दूतीमुखेन व्याख्यायितनिजसाहसाध्यवसायस्य महानागरकस्य यूनः प्रेषितः । प्रयोजनं पुनरत्रेदं विवक्षितम्—अकारणद्विष्टैर्मदीयगुरुभिः सामप्रयोगोपक्रमेण कथंचिदपि न प्रतिपादितामपमानासहिष्णुतया प्रसिद्धमपहाय क्रममप्रहारादिना प्रकारेण मामुद्वोढुमिच्छन्नानुचितकारी त्वम् । अतो मा त्वरस्व । सेत्स्यति तवैष कामः । यतः कतिपयैरेव दिवसैर्यत्र पुरा दर्शनमावयोरभवत्, तत्र पत्रप्रायया वप्रगहने निगूहितो मदीयदूतिकया त्वमनपेक्षितापरविवाहमङ्गलोपकरणः केवलेनैवाग्निना सनाथीकृतपार्श्वः स्थास्यसि । स्थितश्च तत्र द्वित्राभिराप्तसहचरीभिः सहानुपदमेव मे समुपस्थितायाः पाणिग्रहणमग्निसाक्षिकं कर्तासीति । यः पुनरिहापरः केनापि वैगुण्येन गुरुभिरप्रदत्तामभिलषन्मामन्यायतः क्षिप्रमेव प्राप्य नारकत्वमन्तिकज्वलदग्निरसिपत्राणां पादपानां गहने स्थाता त्वं पापकारिन्निति शापरूपोऽर्थः प्रकाशते, स सर्वथा निरवकाश एव । नहि विरक्ताः स्त्रियः कदाचिदक्षिगतानामीक्षणहारिणस्तादृशानुदारविरचनांल्लेखानभिलिख्य तथाऽत्यादरेण प्रेषयन्ति । कौतुकेरिता पत्रकहारी[1] स्वयमेव मुद्रामुद्भेद्य विदितकार्यतत्त्वा प्रकृतिपारिप्लवतया स्त्रीस्वभावस्य कदाचिन्मन्त्रभेदमाचरेदिति तां वञ्चयितुं तस्य च विलासिनश्छेकोक्तिगुणकार्यहृदयस्य वचनभङ्गीवैदग्ध्यमात्मीयमाविष्कर्तुः सप्रयत्नावसेयविवक्षितार्थो नायमभिलिखितः ।' इत्युक्तवति तस्मिन्सर्वेऽपि पार्श्ववर्तिनो यथावस्थितविदितलेखार्थाः समं मञ्जीरेण राजपुत्राः प्रजहृषुः । अनेकधाकृतप्रतिभागुणस्तुतयश्च राजसूनोः पुनः प्रस्तुत-

१. पत्रवाहिका.

काव्यवस्तुविचारनिष्ठाः समरकेतुवर्जमतिष्ठन् । समरकेतुरपि विषादविच्छायवदनः शुष्काशनिनेव शिरसि ताडितस्तत्क्षणमेवाधोमुखो भवदुत्सृष्टदीर्घनिःश्वासनिश्चलनयनयुगलो विगलिताश्रुशीकरक्लिन्नपक्ष्मा-कराङ्गुष्ठनखलेखया भूतलमलिखत् ।

अवलोक्य च तथावस्थितं तमस्थान एव प्रतिपन्नाशोकावस्थमुपजातविस्मयाः सभासदः किमेतदिति वितर्कतरलतारकाणि परस्परं मुखान्यवालोकयन् । अथ तेषां पुरोवर्तिसमरकेतुना समानप्रतिपत्तिरत्यन्तमभिमतो राजपुत्रस्य सकलशास्त्रभाषाविचक्षणः क्षीणभूयिष्ठशैशवे वयसि वर्तमानो माननीयः कुमारपरिग्रहस्य प्रकृतिप्रगल्भवाक्किमपि कोविदः परिहासकेलिषु कमलगुप्तनामा कलिङ्गदेशाधीशसूनुः शनैर्विहस्यावोचत्—'युवराज, किमर्थमनवगतार्थ इव अप्रगल्भ इव मत्सरीवाऽरसिक इव मूकतामवलम्ब्य स्थितः । किं न वर्णयसि शतमुखो भूत्वा सर्वतोमुखीमखिलबुधजनाश्चर्यकारिणीं कुमारस्य काव्यतत्त्वावबोधशक्तिम् । असद्विधानां हि स्वभावकश्मलस्थूलबुद्धीनां सर्वात्मनापि प्रयुक्ता बाह्येव वर्णना न प्रविश्य सम्यग्वस्तुतत्त्वमुल्लिखति । अतोऽद्यापि त्वयि प्रजल्पति सति परितोषः प्रत्ययश्चात्मविषयः कुमारस्य भविष्यति । किं चाश्रुसलिलक्लिन्ननिश्चलचक्षुरधोमुखो वारिबद्ध इव वनकरी लब्धमिथ्याभिशाप इव साधुरकस्मात्प्रन(ण)ष्टसकलग्रहस्वापतेय इव गृहपतिरायतोष्णान्मुहुर्मुहुः सृजसि निःश्वासान् । अजातप्रेयसीपाणिग्रहो महद्दुःखमनुभविष्यति महात्मेति कच्चिन्न तं कुमारोपवर्णितवृत्तान्तयुवानमनुशोचसि । किमेकमिह सो(शो)च्यते । सर्व एवायमेवंप्रकारः संसारो न जानासि । यदुत दुःखहेतुरनुरागः, विषोपमा विषयोपभोगवाञ्छा,

वाञ्छितार्थप्रतिपन्थीन्यधर्मविलसितानि, सर्वतः सुलभविघ्नोद्गमाः काम्यक्रियारम्भाः। सोऽपि किं करोतु वराको यस्य दुष्करे तादृशि संबन्धघटने झटिति दर्शितफला विफलतां नीता देवेन नीतिः। किं क्रियते। निसर्गत एव निरङ्कुशः पापकारी करीव व्यालो बलीया[न्] विधिर्बद्धोऽपि बुद्धिमद्भिरतिनिबिडेन प्रज्ञालोहनिगडेन निरवग्रहो विचरति। वामचारिण्यत्र मार्गमृग इवाध्वगानामधिगच्छन्ति वाञ्छितानि व्यापारितसकलसामर्थ्या अपि फलार्थिनः। अलमनया स्वचित्तसंतापैकफलया फल्गुचिन्तया। मनागपि महात्मना न शोचनीयोऽसौ। शोच्यः पुनरसौ। पापकर्मा कर्मचण्डालः प्रकृतिदुष्टात्मा विशिष्टाभासः सकलचौरग्रामणीरग्राह्यनामा मञ्जीरो येन मार्जारेणेव मूषिकामिषमुपसृत्य निभृतमत्र विनिहितमनुपलक्षिताप्रेक्षकजनेन दर्शयिष्यामि दूरस्थैव यात्रां द्रष्टुमायातस्य यूनस्तस्येत्यभिप्रायेण लेखहारिण्या सहकारमूले स्थापितमपकृत्य लेखपत्रकं तादृशस्य दूरारूढसदृशप्रेम्णः प्रतिकूलगुरुजनकृतप्रतिबन्धस्य स्वरसतः कृतानुग्रहेण भगवता मकरकेतनेन संयोज्यमानस्य मिथुनस्य प्रयोजनमन्तरेण विघटनं कृतम्। घटितश्च जीवितावधिर्निधुवनसुखानां सख्यस्य रूपसौभाग्यादिगुणकलापस्य विषयोपभोगानां च सर्वंकषो विनाशः। को वास्य मोहोपहतधिषणस्य दोषः। कुमारस्यैवायं प्रमादो यदीदृशेऽप्यपराधे नैनमन्यायकारिणं करचरणकल्पनेन वा स्वदेशनिर्वासनेन वा रासभसमारोपणेन वान्येन वा धर्मशास्त्रप्रणीतनीतिना निग्रहणेन विनयं ग्राहयति। यदि वा किमनेन क्लिष्टफलयानया नरेन्द्रसेवयैव शासितेन भूयः कदर्थितेन कृपणेनेति कृपामनुरुध्यमानो न निष्ठुरं व्यवहरति। ततोऽयमपि तिष्ठतु। जन्मान्तरे

नरकातिथीभूतः स्वत एव जाल्मः कल्मषस्य सदृशं दशापाकमनुभविष्यति । तत्तावदन्वेष्य मिथुनं मिथः संयोजनीयं भवति । यद्विप्रयोगसंभावनया स्वशरीरभूतस्य सुहृदो हृदयदाह ईदृशो युवराजस्य' इत्युक्तवति तस्मिन्सकलोऽपि परिहासालापरञ्जितः कुमारवर्ज्यमहसदुच्चैः प्रणयी राजलोकः । कुमारोऽपि मन्दस्पन्दिताधरपुटः स्फुरणलोलकपोलदर्पणोदारदरलब्धावकाशमपसार्य सद्यःस्मितप्रकाशं साभ्यसूय इव 'कमलगुप्त, किमयमस्थाने विप्लवप्रपञ्चः' इत्युदीर्य तिर्यग्वलितवदनः सिंहलेन्द्रसुतमवादीत्—'सखे, किंनिमित्तं प्रहर्षस्थानेऽप्येवमस्वस्थेन भवता स्थीयते । किमर्थमिदमतर्कितागतेन तमसा समास्कन्दितं वदनमिन्दुमिव चन्द्रिका नार्द्रयति नर्मालापेष्वपि कुन्दनिर्मला ते स्मितद्युतिः । किमित्यधिकमधुरा अपि परपुरंध्रिदूतीगिर इव कर्णे श्रवसि न विशन्ति शृङ्गारप्रधानाश्चिरंतनकवीनामुक्तयः । केन हेतुना नूतनैरपि सुहृज्जनसूक्तैरजातपुलकोद्गतिरुभयपाणिपर्यङ्कशरणा धार्यते कपोलद्वयी । कच्चिन्न मयि जल्पति जातमुपतापदायिनः स्ववृत्तान्तस्य कस्यचिदाकस्मिकं स्मरणम् । यथायमार्यार्थसूचितो युवा तथा न त्वमपि कुसुमायुधजयपताकया कयाप्यवनिपालकन्यया कापि नयनमार्गणैर्विद्धः । प्रयुक्तप्रार्थनश्च निपुणमनयेव चतुरया वचनभङ्ग्या न कच्चित्संकेतस्थानकथनेन कृतार्थीकृतोऽसि । कृतप्रलयश्च तदवाप्तये विधिवशादतर्कितोपनतेन केनचिद्गरीयसा कार्येण तत्समागमसुखानां न दूरीकृतोऽसि ।' इत्यादृतेन नृपतिसूनुना प्रयुक्तहृदयंगमप्रश्नः शनैरुन्नम्य सत्वरगृहीतोत्तरीयपल्लवःप्रमृष्टदृष्टिवदनमनादरविलोकितपार्श्ववर्तिराजलोकः सशोक इव समरकेतुर्विरतवाक्प्रवृत्तिः स्थित्वा मुहूर्तमुपचक्रमे वक्तुम्—'मानुषीकुमार,

त्तव प्रज्ञा प्रजापतेरिव तनुस्तनोति सर्वतः सुखतया। परं मे मनसि विस्मयमखिलजनमानसनिवासादिव त्वया समासादितमिदं पराशयज्ञानकौशलम्। किमहमत्रापरं कथयामि। निजयैव प्रज्ञया निवेदितस्ते सकलोऽपि सामान्येन मद्दुःखवृत्तान्तो यदि, परं परिकर एव मयास्य कथनीयः। तमपि वज्रसारकठोरहृदयस्त्वया समाज्ञापित इति विज्ञापयामि। किं तु महती कथैषा न शक्यते संक्षिप्य कथयितुम्। विस्तरतस्तु कथ्यमाना पराणि कार्यान्तराण्यन्तरयिष्यति। तथापि यदि कौतुकमावेदयामि। श्रूयतामेतत्प्रायेण श्रुतिविषयमायातमेव श्रुतिमतां वरस्य—

यथा सिंहलेषु अस्ति समस्तवसुमतीभूषणमभ्रंकषप्राकारवलया विमानाकारपौरालयसहस्रशालिनी **रङ्गशाला** नाम नगरी। तत्रस्थः पिता मे **चन्द्रकेतुः** कदाचिद्देशकालाद्यवष्टम्भसंभृतावलेपानां प्रपन्नमपि पूर्वादायमप्रयच्छतां विक्षेपविसर्जनेषु कालक्षेपकारिणामाह्वानेषु बहुनागमनकारणव्याहारिणामुत्सवेष्वदृष्टानामापत्सु सविलासचेष्टानामुक्त्या प्रीतिमुपदर्शयतां युक्त्या प्रतिलोमं व्यवहरतां सुवेलशैलोपकण्ठवासिनां दुष्टसामन्तानां प्रतिक्षेपाय दक्षिणापथयायिनौ सैन्यमादिक्षत। प्रस्थितस्य च तस्य रिपुविनाशाय यथाशक्तिकृतशास्त्रपरिचयमधीतनीतिविद्यमभ्यस्तानिरवद्यधनुर्वेदमसिगदाचक्रकुन्तप्रासादिषु प्रहरणविशेषेषु कृतश्रममचिरारूढयौवनमभिविचार्य यौवराज्ये मामेव नायकमकल्पयत्। अर्पितानल्पपदातिसैन्यं च पुण्येऽहनि प्रधानैरवनिपतिभिरमात्यैः सामन्तैश्च कृत्वा मामसहायं प्राहिणोत्।

अथाहं प्रातरेव स्नातो निवर्तिताभिमतदेवताविशेषपूज्यः संपूज्य वस्त्राद्यतिसर्जनेन द्विजातिलोकं प्रतिकलावलोकितशङ्कुच्छायैर्ज्योतिर्ग-

णितविद्भिः साधिते लग्ने सितदुकूलवासाः सितकुसुमदामग्रथितशेखरः शरच्चन्द्रातपेनेव कौमुदीमहोत्सवभ्रमणलग्नेन स्पर्शाह्लादिना चन्दनाङ्गरागेण सर्वाङ्गीणेन शोभमानः स्थूलस्वच्छमुक्ताफलग्रथितां तत्क्षणप्रमुदिताया वक्षःस्थलभाजो राजलक्ष्म्या लोचनद्वयादानन्दाश्रुपद्धतिमिव द्विधाप्रवृत्तां नाभिचक्रचुम्बिनीमेकावलीं दधानो बद्धचन्दनप्रवालचन्दनमालातरङ्गिततोरणमुद्दामगन्धोदकच्छटाविच्छर्दविरजीकृताजिरमागृहीतोज्ज्वलवेषसविशेषचारुसंचरद्वारवनिताजनमवहितप्रतीहारनिर्धार्यमाणानि बद्धभाषि बाह्यपरिजनं सभामण्डपमगच्छम् ।

तत्र च पवित्रमणिवेदिकापृष्ठनिहिते महति हेमासने प्राप्तस्रोपविष्टस्तत्कालमभिमुखीभूताभिः साक्षादिव जयश्रीभिरूरुसंदंशदष्टानि वसनाग्रपल्लवस्पष्टीकृतनितम्बे परिणाहाभिरीषदवनमितपूर्वकायतया मिलद्वलित्रयत्र्यश्रीभूतनाभिमण्डलाभोगाभिः कनकवलयावलीवाचालभुजलतोत्क्षेपलक्ष्यमाणपीनोद्धुरपयोधराभिरुज्झितस्तनोत्सङ्गनिःसङ्गलम्बमानप्रलम्बमौक्तिकप्रालम्बाभिः पुरोनिहितदधिकुसुमदूर्वाङ्कुरसनाथाक्षतपूर्णकनकपात्राभिरन्तःपुरविलासिनीभिः संपादितसकलयात्रामङ्गलः प्रत्यग्रप्रसच्छदप्रवालदत्तसान्द्रमुखमुद्रमभिवन्द्य पुरःस्थापितं राजतपूर्णकुम्भमप्रतिरथाध्ययनध्वनिमुखरेण पुरःसरपुरोधसा द्विजातिवृन्देनानुगम्यमानश्चरणाभ्यामेव गत्वा प्रथमकक्षान्तरद्वारभूमिमग्रतः ससंभ्रमव्यापारिताङ्कुशेन वज्राङ्कुशनाम्ना महामात्रेण प्राङ्मुखीकृत्य विधृतं शितपिष्टपङ्कपाण्डुरितगात्रमक्षुद्रमणिचित्रनक्षत्रमालापरिक्षिप्तसिन्दूरपाटलविकटकुम्भभागमारोपितानेकनिशितशस्त्रप्रभासारशातकुम्भसारीपरिकरितपृष्ठपीठमश्रान्तमदवारिधारादुर्दिनान्धकारितकरटकूटं त्रिकूटपर्वतमिव परित्यक्तस्थावरावस्थममरवल्लभाभिधानं गन्धगजमारूढो दृढावनद्धतारतूणीर-

बन्धुरोभयस्कन्धशिखरः कनकपत्रभङ्गचित्रमध्यभागभाजा शरासनेन सनाथवामहस्तः सलीलमुद्धूयमानवालव्यजनकलापो मददर्पसर्पत्पदातिनिर्दयपादपातप्रवर्तिताकाण्डमेदिनीकम्पः प्रहर्षोत्तालवैतालिकव्राततारतरोद्घुष्यमाणजयध्वनिर्ध्वनद्द्विजयमङ्गलाभिधानतूर्यनिर्घोषबधिरिताखिलब्रह्मस्तम्बः पुरस्तात्सलीलचलितकरिघटारूढकिंकरपुरुषपातिताविरलघनघातानामुत्पातनिर्घातघोरघोषोद्गारमतितारमारसन्तीनां ढक्कानां ध्वनितेन मुखरयन्निखिलान्यपि दिशां मुखानि शिखरविस्फुरत्पद्मरागदलस्थूलकलशस्य दोलायमानावचूलमुक्ताफलदाम्नश्चित्ररत्नखण्डखचितचामीकरण्डस्य पुरः प्रसर्पतः श्वेतातपत्रखण्डस्य पर्यन्तयायिनामनिलभरितरन्ध्रवर्त्मव्यक्तरूपाणामिभवराहशरभशार्दूलमकरमत्स्याद्याकारधारिणामनेकपार्थिवसमरसंगृहीतानां चिह्नकानामपह्नुतार्करोचिषां चक्रवालेन जटिलीकृतदिगन्तरालो राजकुलान्निरगच्छम्।

अनुपदं च प्रणामपरितुष्टाभिर्विजयाशिषाभिनन्द्यमानो द्विजातिपरिषद्भिर्विनयविरचिताञ्जलिपुटानि प्रणम्यमानः पौरजनताभिरुत्सृष्टलाजवृष्टिभिरुद्घुष्यमाणमनोरथसिद्धिर्नगरवृद्धाभिः प्रीतिनिर्भरदृष्टिपातकुवलयितदिग्वलयाभिरवलोक्यमानो नागरिकाभिर्नगरान्निरगमम्।

क्रमेण च शरत्समयपरिचयप्रपञ्चितशोभामाभोगिनीम्, उदारकलमकेदारपरिमलामोदितवनानिलाम्, उन्मदकुररकादम्बसारसारावमुखरितसरस्तीरनीराम्, कीरचञ्चुसंपुटच्युतार्धजग्धप्रियङ्गुमञ्जरीपिञ्जरजरद्रुमतलाम्, अक्षुद्रपादपालानितैरनवरतवेल्लत्कर्णपल्लवतरलितेन प्रतिवेलमुद्दीप्यमानेन निलीयमानेन चट्टंकारिणा मधुकरमण्डलेन पीयमानोद्दामदाननिर्भरैरप्रमत्तरक्षणपदातिवार्यमाणासंस्तुतजनप्रत्यासत्तिभिः पर्यन्तरचिततृणकुटीरकेण प्रतिक्षणमाधोरणगणेन क्रियमाणविविधो-

पचारैरनवलोकितपरस्परैः प्रसिद्धाभिधानैर्जगति प्रधानवारणैरधिष्ठितोद्देशाम्, आगृहीतद्वीपान्तरगामिभूरिभाण्डैराभरणपर्याणकादिवृषोपस्करसमाखनसंततव्यापृतभृतकैरभिनवस्यूतताम्रपटकुटीरकोपावस्थापितस्थूलद्रविणकण्ठालैः प्राङ्गणोपरचितगोणीगणाट्टालकसूचितैः प्रस्थाननिर्गतानामाद्यनैकमानाम्, अनेकतुरगाश्वतरसंकुलैः सार्थैः स्थानस्थानेषु कृतावस्थानाम्, अच्छशीतलस्वादुसलिलाभिः सुधाधवलवरण्डिकावलयकुण्डलितकूलाभिर्द्वारभित्तिगर्भप्रतिष्ठितानेकदेवताप्रतिमाभिस्तृष्णातुरावतरदनन्तपथिकपातभयादिव पुरःप्रसारितोभयाग्रहस्तेन भेककुटुम्बिनीकदम्बकेन कृतकलकलेनावलम्बितसोपानमालमूलदेशाभिरतिसुश्लिष्टलोहेष्टकचिताभिर्मार्गवापीभिः स्थपुटितमहावटद्रुमोपान्तस्थलाम्, अन्तरान्तरा च प्रावृषेण्यसलिलपूरक्षालनापनीतसकलपङ्कामलाभिरासन्नग्रामवासिना वणिग्जनेन तत इतः प्रकटितौदनारब्ध दधिमाण्डखण्डमोदकप्रायपण्यप्रसारकाभिस्तटस्थपथिकपालिकाविलोक्यमानभुक्तोज्झितान्नलवकवलनाकुलशकुलकुलाभिर्दूरनिर्गतजलार्द्रमार्गपिशुनितपशुपरम्परोचाराभिरनवरतलोकविश्रामक्षामितोपान्तवेतसवनाभिर्वनस्रोतोवहाभिः सीमन्तिताम्, ईषदुपजातिशोषकरीषमुखसंचारविशिखैः सपर्णतरुलतानिवेशजटालवेश्मपटलैरजिरमण्डपच्छायानिविष्टगोरसपरिपुष्टमहाकायदुष्टकौशलेयकैः सकलकलोच्छलत्घ्राघपरिमलैरव्यञ्जिततप्ताच्छतक्रबिन्दुक्षेपैरुत्कर्णतर्णकाकर्णितमन्थ्यमानमथितमन्थनीमन्थरनिर्घोषैः सतोषघोषाधिपसमाहूयमानपर्यटत्यायसार्थिपथिकपेटकैकमागतै(?)कैवद्धरद्विजातिवचननिर्विचारप्रवर्तितगमनासनस्नानदानादिसर्वक्रियैः प्रातरेव प्रचारनिर्गताभिस्तत्कालमधिगताधिकबलोपचयबृंहितेन स्वाभाविकभव्यतागुणेन द्विगुणाकृष्टलोकदृष्टिभिः पीनपरिमण्डलावुधःपीनभारविक-

ष्टमन्थरगमनाभिरनणुमणिघण्टिकाघोषरमणीयमितस्ततो विचरन्तीभिः सततानुचरचाटुकारस्वैरसौरभेयोभिरचिरजातप्रसवाभिः अद्यश्वीनाभिश्च गोभिरशून्यपर्यन्तैस्तुहिनपातशीनहैयंगवीनवर्णतनुलतालावण्याभिः क्षीरधवलवलत्कटाक्षच्छटाप्रतिक्षणक्षालितदिङ्मुखाभिर्नवनीतपिण्डपाण्डुबलात्कठिनपरिमण्डलस्तनकलशयुगलाभिर्गोरसश्रीभिरिव शरीरिणीभिः सविभ्रमैरङ्गवलनैः स्नेहनिर्भराणि दधीनि बल्लवहृदयानीव निर्दयमामथ्नतीभिर्गोपललनाभिः सर्वतः समाकुलैर्गोकुलैरधिष्ठितकक्षोपकण्ठां नगरसीमामलङ्घयम्।

अथाग्रेसराश्ववारदर्शनक्षुभितैः 'कटकमागच्छति' इति जनरवादुपलभ्योपलभ्य सर्वतः प्रधावितैः परित्यक्तनिजनिजव्यापारैरवकरकूटकेष्वधिरूढैस्तडागपालीषु पुञ्जितैर्देवकुलवरण्डकेषु कृतावस्थानैः पादपस्कन्धेषु बद्धासनैरूर्ध्वैश्चोपविष्टैश्च लम्बितोभयभुजैश्च जघनपार्श्वविन्यस्तहस्तयुगलैश्च शीर्णपट्टिकागाढग्रथितासिधेनुकैश्च धौतसाटककृतशिरोवेष्टनैश्च वेणुयष्टिषु कृतावष्टम्भैश्च स्कन्धाधिरोपितदयितडिम्भैश्च सर्वत्र सकुतूहलैरपि सविशेषं करिषु क्रमेलकेषु च प्रहितदृष्टिभिः प्रमाणरूपबलोपचयशालिनां प्रत्येकमनडुहां मूल्यमानमुद्धट्टयद्भिः 'कथय, क एष राजपुत्रः, केयं राज्ञी, किमभिधानोऽयं द्विरदः' इत्यनवरतप्रयुक्तया प्रश्नपरम्परया कदर्थितसकृद्दृष्टकटकस्य ग्रामलाकुटिकैः करेणुकाधिरूढं क्षुद्रगणिकागणमप्यन्तःपुरमिति धृतोष्णवारणं चारणमपि महाराजपुत्र इति कनकनिष्कावृतकन्धरं वणिजमपि राजप्रसादचिन्तक इति चिन्तयद्भिः, पृष्टैरपि प्रतिवचनमप्रच्छयद्भि-

१. अद्य श्वो वा विजायेते 'अद्यश्वीनावष्टब्धे' (५।२।१३) इति खप्रत्ययान्तः साधुः.

रप्यन्यतो गच्छद्भिः पश्यतोऽप्यभिमुखमङ्गुलीभिर्दर्शयद्भिः शृण्वतामपि चेष्टितमशङ्कितैरुच्चस्वनेन सूचयद्भिर्विषमावतारसंमर्देषु दुर्दान्तकरभवाजिवृषभोत्प्लवनेषुं व्याददद्भिः वेगोपसर्पणेषु च ज्वलतः पततः पलायमानानवलोक्यावलोक्य समकालकृतकलकलैः सतालशब्दमुच्चैस्तरां हसद्भिः, कैश्चिन्मार्गनिहितनिश्चलदृष्टिभिः पश्चाद्देष्यतां दिगन्तविख्यातयशसामुर्वीभृतां कुमाराणां राजपत्नीनां प्रधानगणिकानां पट्टहस्तिनां च दर्शनाशया क्षुत्पिपासापरिगतैरूर्ध्वशोषं शुष्यद्भिः, कैश्चित्पष्टसङ्गिस्वैरपामरीपीवरस्तनस्पर्शलुब्धैः पीडितैरपि समन्ततः प्रेक्षिकजनेन स्थानमत्यजद्भिः, कैश्चिन्मनोरथशतासादितग्रामपतिसुतासंनिधानैर्लब्धमहानिधानैरिव खलधानतः साधनिकलोकेन निखिलमपि नीयमानं वुसंवुसाय गत्वावधीरयद्भिः, कैश्चिद्गृह्यमाणयवसरक्षणव्यग्रैरर्थलोभादभिलषितलञ्चानां लञ्चयालाकुटिलानां क्लेशमनुभवद्भिः, कैश्चिदाकृष्टहस्तिपकचोदितद्विरदपुरस्कृतैः प्रपलाय्य दूरीकृतात्महननैरात्मनो विडम्बनाय ब्राह्मण्यमाविष्कुर्वद्भिः, कैश्चिदनिबद्धलोकलुण्ठ्यमानशाकवाटकैरघटितप्रयोजनामवनिपाशां सावज्ञमुपहसद्भिः, कैश्चिदानन्दगद्गदिकागृहीतकण्ठैर्निगृहीतलुण्टाकव्रातवार्तया लुण्टितेक्षुपाटदुःखदुर्बलं कृषीवललोकमपशोकं कुर्वद्भिः, कैश्चिज्जवप्राप्तपरिपालकव्यूहरक्षितसुजातग्रैहेयैरनेकधा नरेन्द्रमभिनन्दयद्भिः, कैश्चिदलब्धावकाशठकुरहठनिराकृतैराश्रयाय प्रतिग्रहं गृहीतभाण्डैराहिण्डद्भिः, कैश्चित्कलहनिष्कासितसालीनकुलपुत्रकवर्गैः सगर्वमग्रतो ग्रामपोटानां प्रौढिरात्मनः प्रकटयद्भिः, अन्यैस्तु दूरोदस्तकण्ठैः पृष्ठलग्नहृष्टबालकवृन्दकलकलसूचितान्ग्राममध्ये विचरतः स्वच्छन्दचारिणो महामात्रतन्त्रेण परिवृतान्वारणपतीनवलोक्य जातसंक्षोभैर्झटिति कोष्टकद्वारेषु संग्रहु-

कान्यानयद्भिः पश्चाद्वाटकेषु गोमयपिण्डकूटानि गोपयद्भिर्भग्नवृत्तिषु निष्कुटेषु त्रपुसकर्कारुकारवेल्लकादिवल्लीफलान्यादायादाय वेश्मनि प्रवेशयद्भिर्गृहधनं च कांस्यपात्रिकासूत्रकं वलयप्रायं बलाधिकृतधामन्यबलाजनन्यासीकुर्वद्भिरनेकवृत्तान्तैर्ग्रामेयकैरवलोक्यमानबलसंहतिः प्रतिमार्गमुत्तम्भिताभिनवतोरणास्थानस्थानोपसर्पत्कुसुमफलहस्तावास्तव्यवित्ताढ्यलोकानूर्ध्वीकृतासु तत्क्षणं वेणुयष्टिषु कुम्भलीकृत्य योजितैर्माञ्जिष्ठैश्च महारजनैश्च कर्पटैः जटालीकृतशीर्णगृहपटलानतिक्रम्य कतिचिद्वेलावनग्रामकानग्रतो दत्तदृष्टिः पिधानमिव पातालस्य, मणिकुट्टिममिव त्रिभुवनचतुःशालस्य, जन्मपल्वलमिवाकाशकुवलयस्य, प्रभापटलमिव दिग्मण्डलेन्द्रनीलवलयस्य, छायाचक्रमिव ब्रह्मस्तम्बतरुगहनस्य, प्रच्छदपटमिव महीतलमहाशयनस्य, अदृष्टपर्यन्ततया दृष्टान्तमिव संसारस्य, मूर्ततापरिणाममिव कालस्य, रूपान्तरग्रहणमिव शब्दराशेः, उदाहरणमिव निःश्रेयससुखानाम्, अनुकारमिव महाकविप्रज्ञाविलोकस्य, सर्वतश्चान्धकारितदिगन्तराभिरन्धकारातिकन्धराकान्तिकालीभिः पातालतिमिरेभ्य इव जृम्भिताभिरितस्ततः सर्पदहिकुलप्रभाभिरिव संतर्पिताभिरसुरलोकादिव लब्धनिर्गमाभिरवगाहावतीर्णदिग्भागमदक्षालनादिव क्षुभिताभिरन्तःप्रसुप्ताच्युतशरीरद्युतेव दत्तसंस्काराभिरनिलविह्वलितैरौर्ध्वज्वलनधूमैरिवानुरञ्जिताभिरन्तःकरणवासिवैवस्वतानुजादेहलावण्येनेव लिप्ताभिस्तटतमालकाननच्छायानिर्गमैरिव निरर्गलीकृतप्रसराभिरुल्लसन्तीभिरम्भसः प्रभावर्तिभिरत्यन्तधीराणामपि मनसि साध्वसमादधानं मुद्रितमुखरहंसनूपुरस्वनाभिः त्वरितगतिवशोत्कम्पमानपृथुपयोधरतटाभिर्मुक्तवाचालकौञ्चमालामेखलानि पुलिनजघनस्थलाभिर्बिभ्रतीभिरितस्ततो वलितविलोलतामरसलोचना-

भिर्बहलशैवलप्रवालकस्तूरिकास्तबककलङ्कितानि पङ्कमलिनेन नवनी-रवाससा सुदूरमावृण्वतीभिर्मुखानि विजृम्भिताभिनवमेघदुर्दिनेषु दिने-षूत्पथेनागत्यागत्य निम्नगाभिसारिकाभिर्गाढमुपगूढं मुहुरवतरन्त्या तोय-मादाय पुनरूर्ध्वमतिदूरमंत्यतन्त्या सान्द्रशीकरक्षोदविरचितानेकसुर-चापया जगदुपवनं सेक्तुममरपतिना प्रकल्पितस्य सर्वतः सुघटित-काष्ठस्य गगनारघट्टस्य घटीमालयेव जलदसंतत्या सततमुदच्यमानं विषमवाहनविसंस्थुलस्य निजरथस्याष्टमं तुरङ्गमसमग्रताजनितवैरूपस्य चात्मवपुषः षोडशीं कलामन्वेष्टुमिव मथनदृष्टदिव्याश्वशशिखण्डसंभ-वाभ्यामहिमहिमगभस्तिभ्यामनवरतकृतमज्जनोन्मज्जनमगस्त्यजठरानल-मिव पानावसरलग्नं युगान्तविद्युद्वलयमिव संवर्तकाभ्रगर्भाद्गलितमनव-रतमानीयमानं वृद्धिमुदकैरुदरैकदेशेन दहनमौर्वाभिधानं दधानममरा-ङ्गनागात्रभूषणोचितैरतिमात्रगम्भीरेऽपि पयसि भास्वरतया करतलस्थितै-रिव विभाव्यमानैरत्यन्तविशदतया च सुरभीप्रश्नवेनेव[2] स्नपितैरैरावत-करशीकरनिकरेणेव संवर्धितैर्जटिहठाकृष्टशिशुचन्द्रमुक्ताश्रुबिन्दुशङ्का-विधायिभिर्लक्ष्मीस्तनस्वेदलेशैरिव लब्धकाठिन्यैरमृतशुक्तिगर्भसंभवैर्मु-क्ताफलैरलंकृताभ्यन्तरमपरैरपि महाप्रमाणैः, क्वचित्प्रलयवातविधूतपु-ष्करावर्तकमेघमुक्तैः, क्वचित्कुलिशकर्कशहिरण्याक्षवक्षोभिघातदलित-महावराहदंष्ट्राङ्कुरोच्छलितैः क्वचित्कमठपतिपृष्ठकषणोत्थपावकप्रदीप्तम-न्दरनितम्बवेणुस्तम्बनिष्ठ्यूतैः, क्वचिद् ..........................

..........................................................................

न्वेषणक्लान्तहरिशकुलगलरन्ध्रोज्झितैः, क्वचित्प्रौढकेशरिमकरदारितैरा-वणकुम्भकूटभ्रष्टैः, क्वचिन्मधुकैटभारोपितजलशायिशार्ङ्गिनिर्दयापूरितपा-

१. 'मुत्प' इति स्यात्. २. 'प्रस्रवेणेव' इति भवेत्.

श्चजन्यशङ्खोद्गीर्णैः, क्वचिन्मथनाविष्टे बलिहठाकृष्णवासुकीफणापीठगलितैर्भिन्नजातिभिर्मौक्तिकैः स्तबकिततलम्, सर्वतः प्रसारितायतज्वालाजिह्वस्य सततमावर्जमानैरपि मुखे पयोभिरनुपजाततृप्तेरौर्वदहनस्य दर्शनाज्झटिति निःसृतैरट्टहासच्छेदैरिव कैलासविशदैः फेनराशिभिराशामुखानि धवलयन्तम्, अमृतपङ्कैकशरणजीर्णजलकरिकुलातिवाह्यमाननिरवसानकालकूटविषदाहवेदनमामोदावकृष्टपन्नगदृढाश्लिष्टसुरतरुजटाच्छेदप्ररूढविटपमासन्ननगरायातदैत्यदारिकान्विष्यमाणकौस्तुभसजाताय(?) रत्नोपलशकलमुदश्रुजलदेवतादृश्यमानलक्ष्मीचिरोपभुक्तप्रदेशं त्रिदशानीतशेषकतिपयाप्सरःसंचारसूचितमथनस्थानमुद्वहन्तम्, गृहीतवेलैः सद्भृत्यैरिव वनैः परिवृतममृतस्यन्दिभिर्गुरूपदेशैरिव शशाङ्कपादैराहितोदयं विस्तारितरङ्गैः कुशीलवैरिव नदीपूरैर्नृत्यमानमुल्लसितवेत्रयष्टिभिः प्रतीहारैरिव मरुद्भिर्दिक्षु संचार्यमाणं स्वदेहोद्भवेन दुष्पुत्रेणेव वाडवाग्निना शोष्यमाणमूर्मिमालाभिरप्यनासादितपरपारमाशागजैरप्यसोढगर्जोदगोरं खेचरैरप्यवीक्षितशिखाविश्रामं सर्वज्ञेनाप्यविज्ञातसर्वजलचरनामग्रामं तिमिङ्गिलगिलैरप्यलङ्घितभीषणावर्तं मैनाकगोत्रगिरिभिरप्यनवगाढकुक्षिगुहागर्तं प्रभवं विषस्य पीयूषस्य च पात्रं जलस्य जातवेदसश्च पदं वृद्धेः क्षयस्य च सदनमसुरारेर्दानवानां च धुर्यं मर्यादावतामदृष्टसीम्नां च कुलमन्दिरं मदिराया द्विजराजस्य च निवातकवचयुद्धमिव मुक्ताफलवजेन्द्रनीलप्रभासुरदुरालोकं वृत्रमिवोप्रकण्ठलग्नवज्रानुविद्धफेनच्छटापहृतहृदयासु खं सुराचलमिव सुवर्णदीप्रकटकान्तं स्थिरमपि विसारिचारुकल्लोलमपि कूर्मिताक्ष्र्यवपुरिवाखण्डितं सर्पदशनैर्वसुंधराया मधुरिपोश्च वास इति विश्रुतमुद्वहन्तं वारिभगवन्तमम्भोनिधिमपश्यम्।

तस्य चाविषमविस्तीर्णावकाशे सर्वतो वहत्स्वादुसलिलस्रोतसि चलाचलप्रान्तपरिसरे सन्निविष्टमनतिसन्निकृष्टप्रधानसचिवावासमुल्लासितानेकवर्णघनवितानैरुत्पातगगनमिव दिगन्तैः परिगतमशेषतः सामन्तशिबिरैः प्रतिद्वारमुच्छ्रितानेकमकरतोरणमनेककक्षान्तरोपेतमितस्ततः प्रकल्पिताधिकारिकर्मशालं कुण्डलीकृतशक्रकोदण्डशोभाविडम्बनदक्षाभिः शरीररक्षाधिकारनियुक्तानां वीरपुरुषाणामन्योन्यलग्नाभिरनेकवर्णगुणलयनिकाभिस्त्रिःपरिक्षिप्तमूर्द्धनिखातनिश्चलस्थूणाश्रेणिसंयतया वेणुदण्डिकामय्या महाप्रमाणया वृत्त्या समन्ततः परिवृतैः श्वेतैश्च सितिभिश्च लोहितैश्च कल्माषैश्च महाकायमण्डपिकामण्डिताजिरैरखण्डबुद्धाण्डकपरिमण्डलाकारैः पटागारैः स्थपुटितावकाशं स्वावासमव्रजन् ।

तत्र चाभिनवपिच्छिलवियोगशून्येनापि चेतसा चिन्तयन्नमात्यमण्डलेन सह परमण्डलकृत्यमनुपालयन्नमनसामग्रीव्यग्रमात्मपरिग्रहप्राग्रहरलोकमालोकयनानीतानि गत्वा सत्वरैर्द्वारपालैरासन्नवेलाकूलनगरेभ्यो यात्राक्षमाणि यानपात्राणि द्वित्राणि दिनान्यतिष्ठम् । अनुष्ठितसकलतत्कालकृत्यश्च पुरः प्रतिष्ठासुरन्यतरेद्युरपराह्णसमये समाहूतसकलनिजपरिषद्द्विजातिरुल्लसत्तारतूर्यघोषामुदारवेषयोषिद्वृन्दगीयमानगाम्भीर्यमहिममर्यादादिजलनिधिगुणामाचमनपूतपुरोहितगृहीतकनकार्घपात्रनिक्षिप्तदधिदूर्वाक्षतां स्वयमवेक्षितैर्भक्ष्यबलिभिर्विलेपनैः पुष्पदामभिरंशुकै रत्नालंकारैश्च बहुविकल्पैरुपेतकल्पितामनल्पया भक्त्या भगवतो रत्नाकरस्य पूजां प्रातिष्ठपम् । अतीतभूयिष्ठायां च शर्वर्यामाहते प्रयाणपटहे रटत्सु राजद्वारितारध्वनिषु मङ्गलतूर्येषु सत्वरोत्थितगृहस्थनिर्दयाक्रोशकर्शितनिद्रेषु निःसरत्सु तृणकुटीरकोटरादतिकष्टमुक्तसंस्तरेषु कर्मकरेषु पुरोनिविष्टरन्धनदक्षदासीसंधुक्षितानेषु ज्वलन्तीषु सर्वतः कथनवाचा-

लस्थालीपरम्परापरिकरितचूलासु प्राङ्गणचुल्लीषु समकालशिथिलितरोमन्थलीलं सहेलमुत्थाय चरति सति पुञ्जितमग्रतः प्रयत्नसंगृहीतं यवसमन्योन्यतुण्डताडनरणद्विषाणे वृषगणे प्रयतमनुष्यनिश्चलधृतोर्ध्वदण्डिकासु क्रमसमुत्पाद्यमानकीलपरिपाटिविषमसंकुचद्विस्तारासु चरममुक्ततनिकाचतुष्टयच्युतावष्टम्भासु तिर्यक्पर्यस्यमानासु पटकुटीषु मुकुलितपटमण्डपे पिण्डीकृतकाण्डपटकप्रकटसामन्तान्तःपुरे दुष्टवाहनारोप्यमाणभयचटुलचेटीलोकबिम्बोकाकृष्टविटचेतसि सहेलचलितसेनापतिसैन्यकोलाहलजनितजनकुतूहले संहृतपण्यविपणिवीथीवृथाश्रमद्गृहीतमूल्यक्रयिकलोके निकटग्रामवासिकीकटकुटुम्बसंगृह्यमाणनिघसयवसेन्धने प्रयत्ननिर्ना(र्णी)यमानपरिकरशून्यसैनिकावासे सर्वतो विचरदनिवारितचमूचरे व्रजति विरलतामनुवेलमुर्वीगन्धर्वनगरे स्कन्धावारे क्रमेण चोद्गते दिवसकृतिकृताभिमतदेवतार्चनविधेषु भोजितभुजिष्यकर्मकरलोकेषु संवृतप्रकीर्णसर्वोपस्करेषु विनीतयुग्याधिरोपितकृतसमायोगपुरंध्रिवर्गेष्वागन्तुकपिपासाप्रतिक्रियोद्युक्तभुक्तपरिजनपुनरुक्तोपपादितरेच्यमानचटसोदकेषु चलितवृषयूथमार्गानुलग्ननिष्ठुरजरन्महिषपृष्ठकण्ठालावलम्बितकुतुपकाष्ठपात्रीशूर्पलोहकर्परेषु समन्ततो निपुणनिरूपितावासभूमिषु सदुःखमुक्तोपभुक्तसदनासन्नसान्द्रद्रुमलतागुल्मेषु सागरावतारदेशमुद्दिश्य चलितेषु सर्वतः सैनिकेषु विमुच्य तल्पमल्पपदातिपरिवृतो बाह्यास्थानमण्डपमगच्छम् ।

तत्र चापनीतपर्यन्तपरिकरे संवृतोत्कृष्टविष्टरतया यथाकथंचिदासीनराजलोके ढौकिताध्वयोग्यगजवसावाजिनि निविश्य कृतसमुद्रावतारमार्गावलोकनः प्रत्यूषस्येव पौतिकानां कृताकृतज्ञानाय प्रेषितेन वेत्रिणा सार्धमापतन्तमसितोत्पलदलश्यामावदातवर्णमर्णवेनेव पूजाप्रीतेन प्रहि-

र्विस्मृताः, कल्पलता इव पारिजातजन्मभूमिमवलोकयितुममरकाननादागताः, दीधितीरिवास्तसमये गभस्तिमालिनो विगलिताः, कुलिशार्चिष इव सपक्षपर्वतान्वेषणाय समुद्रमायाताः, कनककमलिनीमृणालिका इवानिर्वाणसुरवारणकवलवानार्थमिन्द्राधोरणैरुपसंगृहीताः, समुद्रजलदेवता इव प्रभातमारुतोद्वेगादातपं सेवितुमुत्थिताः, हस्तदीपिका इव धनदाधिराजस्यावचूलरत्नमालिका इव नभस्तलवितानकस्य काश्चित्सुवर्णचम्पककलिकासवर्णाः काश्चिदसितोत्पलदलश्यामावदातत्विषः कस्तूरिकातिलककलङ्कितैराननेन्दुभिः शतचन्द्रमिव गगनतलमादधानाः, विकासिभिर्नयनविक्षेपैरुच्छलच्छफरसहस्राणिव सागरोद्देशानुपदर्शयन्तीः, आशामुखव्यापिनामुखामोदेन प्रवृत्तामृतमथनमिव तं प्रदेशमादधानाः, विलेपनपरिमलेनान्यमिव पारिजातोद्गममातन्वतीः, आभोगशालिभिः पयोधरोत्सेधैः पर्वतमयमपरमिव सेतुमासूत्रयन्तीः, विभ्रमावलोकितैरुदधिमिव मर्यादालङ्घनमध्यापयन्तीः, भ्रूविभ्रमैर्मन्मथमिव धनुर्वेदं शिक्षयन्तीः, अखिलजगदाक्षेपकारिरूपाः कन्यका झगित्यद्राक्षम् । तासां च मध्ये शब्दविद्यामिव विद्यानाम्, कौशिकीमिव रसवृत्तीनाम्, उपजातिमिव छन्दोजातीनाम्, जातिमिवालंकृतीनाम्, वैदर्भीमिव रीतीनाम्, प्रसत्तिमिव काव्यगुणसंपदाम्, पञ्चमश्रुतिमिव गीतीनाम्, रसोक्तिमिव भणितीनाम्, अधिकमुद्भासमानाम्, अबहुदिवसोपारूढयौवनामूर्ध्वस्थिताम्, आसन्नवेत्रधारीस्कन्धविन्यस्तवामहस्तकिसलयाम्, उभयतः सलीलमुद्धूयमानचामरकलापाम्, अवलम्बमानस्थूलमुक्ताफलावचूलेन जलधिफेनपटलेनेव परस्परानुलग्नं विगलय्य बिन्दुना गगनमुत्पतितेन श्वेतातपत्रेण वारितातपाम्, अशोकतरुपल्लवाताम्रतलस्य चरणपङ्कजयुगलस्य विलासचलनेषु सर्वतः

प्रसरतातिसंनिहितमुखरमणिनूपुरस्वनेन प्रभासंतानेन श्रूयमाणराजहंसरवमाकाशकमलिनीवनमिवोद्भिकासमुपदर्शयन्तीम्, अङ्गुलिप्रणयिपद्मरागोर्मिकारागसंवर्धितप्रभासमृद्धिभिः समन्ततः प्रसरन्तीभिरभिनवातपताम्राभिरङ्घ्रिनखमयूखलेखासंततिभिर्दाशरथिशरकृशानुकर्शितत्विषामुदधिविद्रुमलतावनानामुज्जीवनाय कुङ्कुमरसवारिकुल्यासहस्राणीव प्रवर्तयन्तीम्, अच्छकुङ्कुमरसपिञ्जरेण मसृणमाणिक्यवलयश्रेणिना जङ्घाकाण्डयुगलेन गिरितटाघातकुण्ठितमणिप्रतिममनङ्गकरिकलभदन्तद्वितयमाक्षिपन्तीम्, उभयथापि परिमण्डलोरुणा द्विधापि निबिडकक्षाबन्धबन्धुरेण नितम्बिना जघनबिम्बेन प्रयत्ननिवसितमप्यदृश्यत्वादविद्यमानकल्पं कल्पपादपांशुकं कलयन्तीम्, आच्छादितोदरवलित्रयस्य हसितहारीतपक्षहरिनिभः कञ्चुकाग्रपल्लवस्य चञ्चलतया प्रतिक्षणमवेक्ष्यमाणविपुलनाभिमण्डलाम्, प्रसृततनुतरङ्गपर्यायोत्क्षिप्तपद्मिनीदलोपलक्ष्यमाणसुकुमारावर्तामिवोद्याननदिकामनन्यजनिवासवेश्मनो जघनमण्डलस्योपरि परिस्फुरन्तीम्, आयतारुणां नाभिचक्रचुम्बिनो हारनायकस्यांशुलेखां विभ्रमपताकामिव रोमराजिमरकतदण्डिकाशिखरक्रमामुद्वहन्तीम्, मेरुमत्सरिणा दूरदर्शिताभोगसंक्षोभितसुरासुरेण विन्ध्यगिरिणेव प्रतिदिनं प्रवर्धमानेन स्तनभरेण निरुध्यमानवदनचन्द्रालोकाम्, अचिरावतीर्णेन निर्भरमदभृता यौवनवनगजेनेव दूरविक्षिप्तस्य लावण्यपयसो वीचिवलयैरिव सबुद्बुदैरविरलप्रत्युप्तवज्रोपलगणैः कनककङ्कणैरधिष्ठितकोमलप्रकोष्ठकन्दलाम्, सुदर्शनोपेतेन वैकुण्ठेनेव कण्ठनालेन तुलितशङ्खाम्, प्रकटितादभ्रविभ्रमेण प्रथमयौवनावतारमरुता तरलितायतापाङ्गतरङ्गयोरन्तःसूत्रारूतारकयोः क्षीरधवलयोरीक्षणमहानदीप्रवाहयोर्जलतुषारजालकमिवोच्छलितमच्छमुक्ता-

फलस्तम्बमुभयश्रवणशिखरावलम्बिनं बिभ्राणाम्, अविरलावदातदन्त-कुड्मलममलगण्डफलकमनिलविलुलितविनीलालकालिकमनीयमनिभृत-भ्रूलताविलासमुन्नतनासावंशमभिनवप्रवालपाटलाधरमुत्कलितकालागुरु-तिलकशोभमाबद्धनिबिडपुष्पापीडमाक्रीडमिव रतिपतेरुभयकर्णपाश-दोलायमानमाणिक्यदन्तपत्रं वदनशतपत्रमुद्वहन्तीम्, उदधिनापि तरङ्गचलिततनुशीकरक्षोदनां जालकेन करविधूतश्वेतचामरेणेवोपवीज्य-मानाम्, प्रत्युषसापि गगनमरकतस्थालनिहितदिनकरप्रदीपेन प्रस्तुता-रात्रिकेणेव कृतोपस्थानाम्, दिगन्तैरपि दूरमुल्लसितैः साभिलाषैरिव प्रतीष्यमाणपटुविलेपनामोदाम्, वेलावनतरुभिरपि विबुद्धशकुनिकृत-कोलाहलैरुद्भूतमदनोन्मादैरिव परिवृताम्, अन्तरिक्षेणापि गलदव-श्यायबिन्दुना बद्धसरस्वेदेनेवोत्सङ्गिताम्, निशान्तमरुताप्याकृष्टकमल-केसरचयेन रोमाञ्चिताङ्गेनेवालिङ्गिताम्, मदशक्तिमिव मन्दरान्दोल-नात्प्लायिताम्, मदिराया निष्पन्दधारामिव मुष्टिनिपीडनाद्विगलिताम्, अनङ्गेक्षुचापयष्टेर्द्विरष्टवर्षवयसं दिव्यरूपां कन्यकामद्राक्षम् ।' इति कथारसाक्षिप्तचेतसि स्ववृत्तान्तमावेदयति समरकेतौ निश्चलपक्ष्मलेखे लिखित इव पश्यति सति तदीयमुखमभिमुखप्रहितदृशि सभ्यलोके श्लथीकृतान्तरकथेष्वाकर्णयत्सु सकुतूहलमन्तरान्तराविस्तारितहर्षकोला-हलेषु कमलगुप्तप्रभृतिषु प्रधानराजपुत्रेषु प्रचलितशिरसि सप्रपञ्चमा-कर्णयति सति सरसतां कथापञ्जरस्य मुञ्जीरमुख्ये बन्दिवृन्दे सहसैव हर्षोत्फुल्ललोचना प्रविश्य प्रतीहारी हरिवाहनं व्यजिज्ञपत्—'कुमार, युवराजवार्ताद्भुतश्रवणेन पीतमतिचिरं कर्णामृतम् । इदानीमीक्षणामृतं क्षणमेकमास्वाद्यताम् ।' इत्युदीर्य दूरावनतपूर्वकाया दक्षिणकरेणादाय सादरमुपरितनवसनपल्लवप्रान्तसंयतं दिव्यं चित्रपटमुपनिन्ये ।

नरेन्द्रतनयस्तु वीक्षितेन सर्वातिशायिना तस्य चारुत्वेन श्रुतेन चास्याः कुतूहलविधायिना विदग्धालापेन जनितप्रीतिर्गृहीत्वा तमादरेण 'भद्रे, किमत्र लिखितम्' इत्यभिदधानः संनिधाने समासीनायाश्चामरग्राहिण्याः समुपनिन्ये। सलीलवलितभ्रूलतालक्षिताज्ञया च तया तत्क्षणमेव विस्तारिते पुरस्तात्तत्र निहितदृष्टिरत्युत्कृष्टरूपां रूपिणीमिव भगवतो मन्मथस्य जयघोषणामुदारवेषसविशेषचारुगात्रीमचिरप्राप्तयौवनां कन्यकारूपधारिणीमेकां चित्रपुत्रिकां ददर्श। विममर्श चादृष्टपूर्वाकृतिविशेषदर्शनदूरविकसत्तारया दृशा त्रिभुवनातिशायिनीमस्याः शरीरावयवसमुदायचारुतामतिचिरम्। अनुपरतकौतुकश्च मुहुः केशपाशे, मुहुर्मुखशशिनि, मुहुरधरपत्रे, मुहुरक्षिपात्रयोः, मुहुः कण्ठकन्दले, मुहुः स्तनमण्डले, मुहुर्मध्यभागे, मुहुर्नाभिचक्राभोगे, मुहुर्जघनभारे, मुहुरूरुस्तम्भयोः, मुहुश्चरणवारिरुहयोः, कृतारोहावरोहया दृष्ट्या तां व्यभावयत्। अनुरागभावितमनाश्च परिवृत्य किंचित्तदाकारदर्शनोत्सुकचेतसः **समरकेतोः** कमलगुप्तप्रमुखानां च प्रधानराजपुत्राणामदर्शयत्। अपृच्छच्च तां प्रसादप्रहितदृष्टिर्द्वारपालीम्—'वज्रार्गले, कुतः समासादितमिदमसंभाव्यदर्शनमन्यत्र दिव्यलोकाच्चित्रम्' इति। अब्रवीच्च सा—'कुमार, विज्ञापयामि। श्रूयताम्। यतः प्राप्तमिदमिदानीमेव द्वारदेशमशून्यं विधाय कौतुकाकृष्टा द्रष्टुमुद्यानलक्ष्मीमितो गतास्मि। सविस्मयप्रहितचक्षुषा च तत इतः प्रसर्पन्त्या मया सरित्तटासन्नतरुणतरुखण्डमध्यवर्तिन्यतिमुक्तकलतामण्डपे तत्क्षणानीतसलिलार्द्रनलिनीपलाशकल्पितं तल्पमधिशयानो मनसिशय इवातिशयतीव्रामीशाननयनाग्निदाहवेदनां विनोदयितुमायात एको दर्शनीयाकृतिः पञ्चदशवर्षदेशीयो वैदेशिकः पथिकदारको

दृष्टः । पृष्टा च तेनाहमन्तिकोद्देशमागता समुपविश्य द्वारि दर्शितादरेण—'सुन्दरि, क एषः, कस्यात्मजः, किमभिधानश्च राजपुत्रो यस्य विधृतातिरुचिरवेषोऽयमितस्ततः संचरति बाह्योऽप्यनुचरवर्गः' इति । निशम्य चेदं नूनमद्यैवायमन्यदेशागतोऽन्यथा नैवं यदृच्छया पृच्छतीति चिन्तयन्त्या मया प्राञ्जलमेवोदितम्—'भ्रातः, शृणु । निवेदयामि । एष निःशेषभारतवर्षविख्यातगुणसंपदखिलभूपालवृन्द-वन्दितपादारविन्दयुगलः सकलविपक्षराजराजयक्ष्मा राजलक्ष्मीनिवास-जङ्गमकमलखण्डस्त्यागतृप्तप्राप्तचारणपरम्पराप्रवृत्तिजनिततीव्रमन्मथोन्म-दाभिरखिलदिङ्मुखख्यातरूपसौभाग्यसंपद्भिर्द्वीपान्तरमहाराजकन्यकाभि-रनुदिवसमपहार्यमाणचित्रफलकारोपितविद्धरूपो रूपतुलितनलकूबरश्च-तुरम्बुराशिवेलावनावच्छिन्नभूमण्डलपतेरैक्ष्वाकक्षोणिपालकुलतिलकस्य त्रैलोक्यनाथेन भगवता पाकशासनेनाप्यनेकशस्त्रिदशसंसदि श्लाघित-महिम्नो महाराजमेघवाहनस्य निजशिरश्छेदसाहसप्रसादितराजलक्ष्मी-वरप्रदानलब्ध एकसूनुर्नृत्यगीतचित्राविकलशास्त्रपारदृश्वा **हरिवाहनो** नाम कुमारः । क्रीडार्थमिदमुद्यानमागतः सविध एवास्य मार्गतरु-शाखान्तरालेन विरलोपलक्ष्यमाणरक्तांशुकपताकस्य कुसुमायुधवेश्मनः कल्पितमनल्पेन परिगतं चूतखण्डेन जलमण्डपमध्यास्ते । प्रस्तुत-विचित्रकथाविनोदं चैनमागत्यागत्य नगरनिवासिनो वैदेशिकाश्च लोकाः कलासु शास्त्रेषु शिल्पेषु च प्रकाशयितुमात्मनो विचक्षणतामनुक्षणं पश्यन्ति । यदि च कौतुकं प्रयोजनं च दर्शनेन ततस्त्वमपि सद्यो भवानुभवभूयसः कालादविकलं जन्मफलम् । अहमेव गत्वा दर्शयामि द्रष्टव्यलोकदर्शनाधिकारनियुक्ता महाभागम् ।' इत्युक्ते मया प्रीति-विकसितेक्षणः स क्षणं ध्यात्वा गदितवान्—'वाग्मिनि, किमप्यान-

न्दितोऽहममुना त्वदालापेन। यदि यथावेदितस्तथैवासौ कुमारः। तत्प्रवर्तस्व शीघ्रम्। अस्ति मे महत्प्रयोजनमस्य दर्शनेन। यथा च मम, तथास्यापि मद्दर्शनेन। केवलमिदं कुरु। गृहाण चित्रपटमेनम्। अत्र सप्रयत्नेन भूत्वा लिखितमेकं मया दिव्यकुमारिकारूपमनुरूपपरिवारपरिकरम्। तदस्य कुरु कलाशास्त्रकुशलस्य कौशलिकम्। अहमपि त्वामनुप्राप्त एव।' इत्यभिदधानः संनिधानस्थापितायाः प्रकृष्टचीनकर्पटप्रसेविकायाः सयत्नमाकृष्य चित्रपटमेनमुपनीतवान्।'

इति निवेदयन्त्यामेव तस्यां स पथिकदारकः पार्थिवसुतस्य दर्शनपथमाययौ। आजगाम चाभिमुखमस्खलितया गत्या स्वभावपाटलं चरणयुगलमङ्गलतासङ्गवेल्लिताभिर्मार्गवल्लिभिर्निजपल्लवकान्तिलोपाशङ्कयेव कुसुमरजसा धूसरीकृतमुद्वहन्, गूढजानुपर्वणा वृत्तानुपूर्वेण प्रेङ्खता पादक्षेपेषु सविलासमूरुदण्डयुगलेन चलितबालरम्भास्तम्भसेवितमुद्यानदेशमादर्शयन्, ज्वलदनेकपद्मरागशकलया तानवप्रकर्षाददतिकष्टदृश्यमुदरदेशमाविष्कर्तुमुपसंगृहीतप्रचुरदीपयेव तपनीयपट्टिकया गाढावनद्धशुकहरितपट्टांशुकनिवसनः, शुष्कचन्दनाङ्गरागसंदेहदायिना हारच्छविपटलेन छुरितोरःकपाटः, स्खलद्भिश्शृङ्खलप्रकोष्ठहाटकवलयं चावालस्य पाणियुगलस्य विलसन्तीभिरुभयतः सलिलधाराधवलाभिर्नखमयूखसंततिभिरापूरयन्नासन्नतरुलतालवालानि, नीलपीतपाटलैरुल्लसद्भिरङ्गुलीयकरत्नरागैरनुरागवृद्धये राजसूनोरपरमिव चित्रकर्मनर्मनिर्माणमम्बरे कुर्वाणः, सूक्ष्मविमलेन पाटलाकुसुमपाटलाकान्तिना शरत्कालदिवस इव बालातपेन दूरमाहितच्छायावृद्धिर्वृत्तनेत्रकूर्पासकेन, श्रवणपाशप्रणयिनोरिन्द्रनीलकर्णाभरणयोरधोमुखपातिभिर्मयूखप्ररोहैः पक्ष्मलितपर्यन्ततया समुपजातश्मश्रुलेखोद्भेदमिव वदनमुद्वहन्, ललाटपट्ट-

च्छलादुपरि संनिविष्टाष्टमीचन्द्रशकलस्य मुखसरोजस्य म्लानशङ्कया बालदिनकरेणेव संयोजितमात्ममण्डलैकखण्डमखण्डताम्बूलोपयोगबद्धबहलरागमधरपल्लवं दधानः, धीरदृष्टिविक्षेपक्षोभिताभिमुखतेजस्विराजहंसमण्डलः, शशिबिम्बदर्शनेऽपि मुकुलितान्युपहसन्निवापाङ्गनिर्गतेन क्षीरशुचिना चक्षुषः प्रभापटलेन मार्गवापिकापुण्डरीकवनानि पट्टांशुकोष्णीषिणा सदृशवर्णतया कूजितानुमितपरिमलालीनषट्पदकुलेन विचकिलमालभारिणा केशभारेण भ्राजमानः, यौवनोपचितसर्वावयवेन प्रांशुना विशदेन पथ्येन सावष्टम्भपदनिक्षेपपिशुनितान्तःपौरुषावलेपेन प्रलघुवेत्रकरण्डिकाक्रोडनिहितकतिपयताम्बूलवीटकसनाथां दक्षिणेतरांसस्रंसिनीमजस्रभुजदण्डदोलनचलाचलामुत्कृष्टकर्पटप्रसेविकामनतिलम्बां बिभ्रता खड्गधेनुकामात्रशस्त्रपरिग्रहेण पुरुषेणानुगम्यमानः, कृतोपसर्पणश्च द्वारभूमावुत्थाय सत्वरमाकारितः प्रतीहार्या प्रविश्य सरभसमभिमुखप्रहितसप्रसाददृष्टेः कुमारस्य प्रकटितादरः प्रणाममकरोत् । आकारसौन्दर्यातिशयदर्शनोपारूढप्रीतेश्च तस्य किंचिदुच्चोच्चारिताक्षरमेहीति कृतसंभाषणस्य समीपमुपससर्प ।

निर्दिष्टसमुचितासनोपविष्टश्च दृष्ट्वा राजसूनोरधःकृतसकलसुरसिद्धविद्याधररूपमाधुर्यमङ्गसौन्दर्यमुपजातविस्मयः परममत्तः परितोषमुद्वहत् । अभिमुखप्रहितसस्पृहेक्षणेन च स्तिमितमवलोकितस्तेन कृतपुण्यमात्मानममन्यत ।

स्थित्वा च कंचित्कालमुपरतवचाश्चित्रपटनिहितनिश्चलनयनमवनीपालतनयं विनयवामनशिराः शनैः पप्रच्छ—'कुमार, अस्ति किंचिद्दर्शनयोग्यमत्र चित्रपटे रूपम् । उद्भूतरूपः कोऽपि दोषो वा नातिमात्रं प्रतिभाति । अद्याप्यनुपजातपरिणतिश्चित्रविद्यायां शिक्षणीयोऽहमखिल-

कलाशास्त्रपारगेण माहाभागेन।' इति। हरिवाहनस्तु तं प्रत्युवाच—'बालक, किं शिक्ष्यते तव। स्रष्टा त्वमस्या जगति विद्यायाः। सुजनतेव स्वभावमधुरा जन्मान्तरयाताभ्यासादुपागता तवैषा चित्रगतिः। विनीततायामिवास्यामल्पमेव ते यद्युपदेष्टा गुरुजनः। इदमनेकचम्पकाशोकतिलकतालीतमालमालितकूलमुत्तालकनकाम्भोजशोभिरजोजीवितैर्दिव्यमिति बालिशैरपि व्यज्यमानमुचितेन क्रमेण परिणाहिनि क्षोणिधरशिखरपृष्ठे प्रतिष्ठापितमपारपरिसरं सरः। इमान्यतिसुन्दराणि लवलीलतासदनानि पूगगहनानि नागवल्लीपत्रमण्डपकतलकुट्टिमानि च तीरदेशेऽस्य दर्शनानि। असावत्र निर्यत्नचारुणि रत्नवालुकासैकते संचरन्ती पादचारेण सहचरीवृन्दपरिवृता राजनीतिरिव यथोचितमवस्थापितवर्णसमुदाया दिनकरप्रभेव प्रकाशितव्यक्तनिम्नोन्नतविभागा रथाङ्गमूर्तिरिव रुचिरावर्तनाभिः सम्यगभिलिखिता शिखामणिरखिलस्यापि रमणीचक्रस्य चक्रवर्तिकन्यका। एतानि चास्याः परिवारलोकेन प्रचलता पुरस्तरलितानि त्रासाद्विहायस्युड्डीयमानान्युड्डीनानि च साक्षात्सचेतनानीव प्रकाशितानि पक्षिमृगमिथुनानि। सेवाचाटुचतुरश्च निपुणमवस्थापितोऽयमस्याः स्थानस्थानेषु निकटवर्ती प्रवृत्तो निजनिजव्यापारेषु रुचिरवेषो वारयोषिज्जनः। तथा ह्यसावुपरि धृतसितातपत्रा गगनमध्यारूढहिमकरे च पौर्णमासीरजनिः। पृष्ठलग्ना प्रतिपदमिमामनुसरत्येषा सविभ्रमोल्लासितकनकदण्डा प्रावृडिव सतडिद्गुणा नूपुरध्वनिश्रवणधावितानुत्सारयति गतिमार्गरोधिनो राजहंसानि यमुत्क्षिप्तपाण्डुपत्रपीठकासमुपसृत्य सत्वरा प्रसारिते तिर्यगुपनयति करतले ताम्बूलमस्याः। किं बहुना। यद्यदवलोक्यते तत्तत्सर्वमपि रूपमस्य चित्रपटस्य चारुताप्रकर्षहेतुः। एक एव दोषो यदत्र पुरुषरूपमेकमपि

न प्रकाशितम्। अनेन च मनागसमग्रशोभोऽयम्। तदधुनाप्यस्य शोभातिशयमाधातुं प्रेक्षकजनस्य च कौतुकातिरेकमुत्पादयितुमात्मनश्च सर्ववस्तुविषयं चित्रकर्मकौशलमाविष्कर्तुं युज्यन्ते कतिचिदस्या नरेन्द्रदुहितुः प्रकृतिसुन्दराणि पुरुषरूपाणि परिवारतां नेतुम्। अविरुद्धो हि कन्यकावस्थाग्रामं गतानां मनुष्यसन्निधिः।' इति व्याहरति हरिवाहने स प्रतिव्याजहार—'कुमार, युक्तमादिष्टम्। युज्यते तस्य सर्वमेतद्यः सामान्यकन्यकायाश्चरितमालिखति। मया तु नेदं तथा। किं तु कस्याश्चित्पुरुषविद्वेषिण्या यथादृष्टं रूपविलासचेष्टितं च प्रकटितम्। इदं चेत्थमेव प्रकाश्यमानमुपपन्नं भवति नान्यथा। तेनापरिज्ञानमनवधानमनुचितज्ञतामनभ्यासं चात्र विषये न मे संभावयितुमर्हति माननार्हः। यदि कुतूहलं कुमारस्य पुरुषरूपनिर्माणविषयमपि नैपुण्यं द्रष्टुं ततस्तान्यपि दर्शयिष्यामि। सत्वरोऽहमत्र कर्मणि निजेनैव प्रयोजनेन। यदि वा किमन्यैः पुरुषरूपैः। कुमारस्यैव तावन्मुख्यं मया रूममभिलेखने संप्रति कारणं किंचिदस्ति तच्च वर्णयामि। संक्षिप्तैरेव वर्णैराकर्णयतु कल्याणराशिः। अस्ति वैताढ्ये शैले सकलभारतवर्षलक्ष्मीविलासतल्पमनल्पकल्पतरुखण्डमण्डितानेकसार्वर्तुकोपवनरमणीयमनणुमणिगृहप्रभाप्रभावदुर्विभावदिनविभावरीविभागं चतुरङ्गद्यूतमिव सुनिरूपितत्रिकचतुष्करचनं रथनूपुरचक्रवालं नाम विद्याधरनगरम्। तत्र भरतसगरादिराजसदृशो विश्वत्रितयविख्यातकीर्तिर्नीतिशास्त्रनित्यविहितासक्तिर्व्यक्तशक्तित्रयः शत्रुषड्वर्गनिग्रहपरः पराभिभूतभूपतिशतशरण्यो धर्मारण्यपरिसर इव सततमभ्यक्तसांनिधिः संयमैकधनैर्मुनिभिरप्रतिहतविद्याबलो महाबलैरप्यरातिभिरधिपतिः समग्राया अपि दक्षिणश्रेण्या महाभुजपराक्रमश्चक्रवर्ती चक्रसेनो नाम।

तस्य शैशवाभ्यस्तनिरवद्यशस्त्रशास्त्रविद्यस्य यौवनारम्भरभसप्रसाधितपूर्वापरपयोधिमर्यादमेदिनीमण्डलस्य नित्यमभिनवानाखण्डलस्येव नन्दनोपवनपादपानासेवमानस्य पञ्चप्रकारानपि विषयानतिक्रान्ते कियत्यपि काले रूपतुलितसकलसुरसिद्धखेचराङ्गणमनेकैर्देवतोपयाचितशतैररतिशुभस्वप्नसूचितावतारमुदारविद्याधरवंशसंभवायामङ्गलावण्यलक्ष्मीलघूकृतरतिरूपसंपत्तौ पत्रलेखाभिधानायां महादेव्यामेकमखिलत्रैलोक्यतिलकस्तिलकमञ्जरीनामधेयं कन्यकारत्नमुत्पन्नम् ।

यस्य रूपलव एष लावण्यनिधिना चित्रपटसंक्रान्तः कृतार्थीकृतो दृष्टिपातप्रसादेन। सा चेयं देवी जन्मदिनमहोत्सवश्रिया विश्राणितोभयश्रेणिचरखेचरगणानन्दा पाञ्चालिकाकन्दकदुहितृकाविवाहगोचराभिः शिशुक्रीडाभिरतिवाहितसर्वलोकस्पृहणीयबालभावा बहुलेतरपक्षे शशिलेखेव प्रत्यहमपरापरासु कलासु परिचयं कुर्वाणा, क्रमेण कुसुमबाणकेलिकाननं यौवनमनुप्राप्ता, संप्रति च दृष्टविनयदाक्षिण्यशीलत्रपादिस्त्रैणगुणगणद्विगुणितापत्यप्रीतिना जनकेन योग्या इति भाजनीकृता समग्राया अपि निजविभूतेरनुमोदिता च स्वेच्छाविहाराय धृतविदग्धवेषविद्याधरीवृन्दपरिवृता पुरः प्रधावता प्रान्तचलितानेकरूपचिह्नकापह्नुततपनमण्डलेन मायूरातपत्रवनेन कुलिशत्राससंकुचितसुरशैलशिखराकारं कनकमयं विमानमारूढा, गत्वा सत्वरं गगनमार्गेण, कदाचिद्दक्षिणार्णवतरङ्गताडिततरुणताडीतरुषु संभोगलालसभुजङ्गललनासततसंकुलतमालवल्लीलतागुल्मेषु मलयतटवनेषु विचरति, कदाचिदासक्तकनकाम्बुजरजोराजिपिञ्जरपलायमानकलहंसकुलेषु मानससरःसलिलेषु कूलासीनसकुतूहलकुबेरकुलकुमारावलोकिता मज्जनकेलिमनुभवति, कदाचिदितस्ततः प्रवृत्तप्रतनुसुरनिम्नगास्रोतःसूत्रसीमन्तितशिखेषु नीहार-

गिरिशिखरेषु वनविहारखिन्ना सुखनिषण्णानां किंनरकुलानां काकलीगीतमाकर्णयति, कदाचिदच्छिद्रपुंनागपादपच्छन्नविपुलवालुकापुलिनेष्वविच्छिन्नसंततिश्रूयमाणानेकशकुनिगणरमणीयकरुतेषु सागरकूलकच्छेष्वात्मना समानविभवपरिच्छदाभिः परिवृता विद्याधरेन्द्रकुलकुमारिकाभिरुत्तरकुरुभ्यः समानीतेन कल्पतरुफलरसासवेन पानोत्सवं प्रवर्तयति, स्वभवनगता च सर्वदा सर्वकलाशास्त्रकुशलेन सर्वदेशभाषाविदा सर्वपौराणिकाख्यानकप्रवीणेन स्त्रीजनेन चित्राभिः कथाभिर्विनोद्यमाना दिनान्यतिवाहयति । ननु स्वप्नेऽपि पुरुषसंनिधिमभिलषति । प्रवर्त्यमानापि च गुरुभिः, प्रबोध्यमानापि धर्मशास्त्रविद्भिः, प्रलोभ्यमानाप्यनेकधा विद्याधरेन्द्रकुलकुमारैः, प्रसाद्यमानापि प्रियसखीभिः, विक्रियमाणापि प्रकटितालकोपाभिर्बान्धववृद्धाभिः, न ज्ञायते किमात्मनो रूपं वरमनीक्षमाणा किंपुरुषपरतन्त्रतया यदृच्छाविहारसुखविच्छेदमाशङ्कमाना किमाद्य एव विद्याग्रहणसमये स्वबुद्धिसंकल्पितस्य पुरुषसंप्रयोगपरिहारव्रतस्य समाप्तिकालं प्रतिपालयन्ती किमन्यजन्मजातसंबन्धपुरुषविशेषप्ररूढगाढप्रेमवासनावशेन पुरुषान्तरेषु चक्षुःप्रीतिमव्रजन्ती नाभिलषति पाणिग्रहणमङ्गलम् ।

दृष्ट्वा च तस्यास्तथाविधां चित्तचेष्टामदृष्टप्रतिविधाना परं विषादमुपगता देवी । पत्रलेखाविधानजसमग्रया च तया भर्तृदारिकाया वरमुद्दिश्य विज्ञापिता । निशि प्रज्ञप्तिविद्यानिवेदितं च भगवत्या स्वप्नान्तरे—'वत्से, मा व्रज विषादम् । माऽत्र विद्याधरकुमारकान्वेषणे कुरु यत्नम् । अखिलनृपचक्रचूडारत्नमस्याः पतिः क्षितिगोचरनरेन्द्रदारको भविष्यति । एषा च हिमगिरिशिखरसद्मनः पद्ममहाह्रदस्य पद्मवने कृताश्रयायाः श्रियः किमपि मान्या जन्मान्तरसखी सुकृतानु-

भावात्तव सुताभावेन संजातेति परिभाव्य सादरं द्रष्टव्या।' इति। नष्टनिद्रया च तया रूपदर्शनेन विना दुहितुरनुरागोत्पादनं रूपदर्शनं च साक्षादशेषभारतवर्षभूपतिकुमाराणामतिमात्रदुष्करमवधारयन्त्या तस्मिन्नेव क्षणे समाहूय सर्वान्तःपुरप्रतिबद्धसैरन्ध्रीगणप्रष्ठाप्रेष्ठाप्रकृत्यैव जननी मे भर्तृदारिकाया धात्री **चित्रलेखा** नाम सादरं समादिष्टा—'सखि **चित्रलेखे**, त्वं हि चित्रकर्मणि परं प्रवीणा। चित्रदर्शनानुरागिणी च वत्सा **तिलकमञ्जरी**। अतोऽस्याः सकलनिजपरिवारवाराङ्गनाचित्रकौशलदर्शनव्याजेन दर्शय निसर्गसुन्दराकृतीनामवनिगोचरनरेन्द्रप्रदारकाणां यथास्वमङ्कितानि नामभिर्यथावस्थितानि विद्धरूपाणि। वर्णय च तेषामाहितोत्कर्षया गिरा त्यागसौभाग्यविभववैचक्षण्यलावण्यादिगुणगणम्। अचिन्त्या हि दैवशक्तिः। एवमपि कृते कदाचित्कापि विश्राम्यति चक्षुरस्याः।' 'तथा' इति प्रतिपद्य तच्छासनमावेद्य च सविस्तरं तत्रैव क्षणे विसर्जिताः सर्वदिक्षु दक्षाश्चित्रकर्मणि समस्ता अपि स्वस्यात्मनः प्रतिबद्धाः। शुद्धान्तसैरन्ध्रीदास्योऽहमपि तत्र समये समासन्नवर्ती सादरमभिहितः—'वत्स गन्धर्वक, तवाप्ययमेवाधिकारः केवलं **सुवेल**गिरिवासिनो निजपितुर्विचित्रवीर्यदेवस्य पार्श्वे त्वमद्य कार्यवशेन देव्या **पत्रलेखया** प्रस्थापितोऽसि। अतो न शक्यसे वक्तुमन्यत्किमपि। किं तु कृतराजकार्येण तस्मात्समागच्छता त्वया विज्ञापनीयमिदमस्मद्वचो नभश्चरेन्द्रस्य—या सा सकलदाक्षिणात्यसामन्तमौलिविश्रान्तचरणनखमरीचेः **काञ्चिनगरी**नायकस्य राज्ञः **कुसुमशेखर**स्य सर्वान्तःपुरप्रमुखा महादेवी **गन्धर्वदत्ते**ति नामसाम्यादुपजातसंदेहेन रत्नकूटाद्रिबन्धावुदधिजलपरिक्षितपीठे स्वयंभुवि तत्र दिव्यायतनमण्डले विहितयात्रेण रात्रौ सादरं

तथाश्रुता देवेन पूर्वमासीत्, सैव सा देवस्यात्मजा **गन्धर्वदत्ता**। यतो मया देवादेशमन्तरेणापि गत्वा स्वयं दृष्टा समाश्वासिता च सर्वस्य ज्ञातिवर्गस्य कुशलवृत्तान्तावेदनेन पृष्टया च विजने **वैजयन्तीनगर-**विप्लवात्प्रभृति सर्वस्तया निवेदितो निजप्रवासवृत्तान्त इत्यवधार्य कार्यो न देवेन तां प्रति संदेह इत्यतिवाह्य च तस्य नगरे रात्रिमेकामुद्गते समन्तादुद्द्योतिताशेषदिशि दशशतमरीचौ मोचयित्वात्मानमागत्य **काञ्चीमुपास्य** कंचित्कालं भर्तृदारिकां **गन्धर्वदत्तां** क्षिप्रमेवागन्तव्यम्। एष चाधुनैव साधितबहुरूपिणीविद्यश्**चित्रमायो** नाम विद्याधरः प्रस्थितस्य ते पथि सहायो भविष्यतीति। तदेतदवश्यकरणीयं राजकार्यमवधार्य धीमता गन्तुमेवाहमादेष्टव्यो न मनुष्यरूपाणि चित्रकर्मणा निर्मातुं यस्मादिदानीमत्यन्तगमनोत्सुकोऽहम्। उत्सुकमनोभिश्च कर्तुमारब्धम-तिस्थूलमपि कर्म नोपजायते सुसूत्रम्। किं पुनश्चित्तैकाग्रतातिशय-निर्वर्तनीयचित्रम्। तदधुना तत्र त्रिकूटाचलकूटचूडामणौ **विचित्र-वीर्यनगरे काञ्च्यां** च तावन्मया गन्तव्यम्। अन्तरा च यदि कश्चिदन्तरायो न भवति, ततस्ततो निवृत्तेन नियमादिहागत्य पुनरपि द्रष्टव्यमिष्टफलदायकं सकलार्थिकल्पद्रुमस्य ते विद्रुमारुणतलं चरण-प्रवालयुगलम्। उपदर्शितबहुविकल्पचित्रशिल्पेन च स्थित्वा दिवस-मेकमेकाग्रमनसा तथाभिलेखितव्यं यथावस्थितं महाभागस्य रूपं यथा चित्रपटवर्तिना तेन पुरतो दृष्टमात्रेण सिद्धगारुडमन्त्रेणेव भर्तृदारिकायाः प्रशममुपयास्यति समस्तबान्धववर्गदत्तदुःसहोद्वेगः पुरुषद्वेषविषवेगः' इत्युदीर्य जिगमिषुः पुनरुवाच—'कुमार, दूरे मया गन्तव्यम्। अनुमोदस्व माम्। आदिश च किमपि प्रयोजनं निजमुद्दिश्य यन्मया विधेयम्। प्रहिणु कुशलोदन्तमादेशं लेखं वा कस्यापि योऽस्तां दिशि

मया गन्तुमिष्टायामिष्टस्तवास्ते। वस्तु च व्यक्तीकुरु वचनवृत्त्या यदानेतव्यमेतद्देशदुर्लभं ततः' इति ब्रुवाणं च तमासन्नसमुपनततद्विरह-चिन्तासंतप्तमानसः सुचिरमवलोक्य स्नेहगर्भया दृष्ट्या स्पृष्ट्वा च पाणिना प्रणतशिरसमंसदेशे **हरिवाहनः** प्रतिव्याहरत्—'गन्धर्वक, किमहमत्र ब्रवीमि। सर्वात्मना हृदि निविष्टैर्विनयवैदग्ध्यमधुरवादितादिभिस्तव गुणैर्गुणैरिव गाढमस्वतन्त्रतामुपनीतया बुद्ध्या प्रवर्तयितुमपार्यमाणा न मे वाणी जिह्वाग्रमवतरति। कथं गच्छेति भद्रमनुजानामि। किं करोमि। प्रकृतिरेषा प्राकृतस्यापि जनस्य विप्रयोगं न सहते मच्चित्तवृत्तिः, किं पुनस्त्वीदृशस्य येन च संनिधानवर्तिना प्रवर्तते सुभाषितगोष्ठी, प्रवर्तन्ते विचित्राः कथालापाः, जायते गीतनृत्यचित्रादिषु कलासु व्युत्पत्तिः, आस्वाद्यते नर्मवादश्रवणेन श्रुतिसुखम्। अतिवाह्यते सर्वदा निरातङ्कचित्तैः कालः। तत्पुण्ययोगादयत्नलब्धं पुरुषरत्नं किमबालिशः कोऽपि शिथिलयति। तथापि किं क्रियते। पराधीनवृत्तिस्त्वं न शक्यसे दिवसमपि धारयितुमात्मसंनिधौ। उत्तिष्ठ। प्रतिष्ठ स्वराजकार्यसिद्ध्यै। मत्कार्यं तु भूयो भवद्दर्शनमपहाय नास्त्यगस्त्यपरिगृहीतायां ककुभि किंचित्। यच्च यदा स्वत एवाभ्युपगतं भद्रेण तदा निरर्थकस्तद्विषयो मम प्रार्थनादरः। ततो देशादस्मद्देशदुर्लभमिदं त्वया समानेतव्यमि-त्यत्रापि न भवान्व्यापारणीयः। यतः किमेकेनास्मद्देशेन। त्रिभुवनेऽपि यद्दुर्लभं वस्तु तदुपनीतं त्वयेदमपनीतरम्भोर्वशीपुरःसरसुराङ्गनारूप-गर्वम्। अस्याः सर्वत एवानवद्यमुपनयता विद्याधरराजदुहितुर्बिम्बम मुनैव कृतकृत्योऽहम्। विरतकौतुकश्च वस्त्वन्तरदर्शने संवृत्तः। ततो निवृत्तेन मया कर्तव्यमेतदिति यदपि किंचिदपि किंचित्त्वयाभ्युपगतं तदपि सर्वदानेककार्यव्यग्रचेतसि भवति नावश्यतया संभावयामि। एतत्तु

साभ्यर्थनं ब्रवीमि । सविधवर्तिना दूरस्थेन संपत्संपन्नेन विपदमापन्नेन वा त्वया नैष विस्मर्तव्यः सहास्माभिः क्षणमात्रमुपजातो वचनपरिचयः' इत्युदीर्य दिव्याभरणवस्तुवस्त्रताम्बूलदानेन तस्मै प्रसादमुपादर्शयत् । उपानयच्च समरकेतुना स्वप्रयोजनसंबन्धमभिलिख्य तत्क्षणमेव समुपनीतं लेखम् । अब्रवीच्च तमवधार्य—'गन्धर्वक, यासौ त्वया गन्धर्वदत्ताभिधाना कुसुमशेखरनरेन्द्रमहिषी सुवेलाचलान्निवृत्तेन काञ्च्यां द्रष्टुमध्यवसिता तदीयदुहितुर्मलयसुन्दर्या रहस्युपेत्य सादरमयं समर्पयितव्यः' इति ।

अथ 'तथा' इति सोऽभ्युपगम्य दूरानतशिराः प्रणम्य हरिवाहनमाभाष्य च ललाटचुम्बिना पाणिसंपुटेन तत्समासन्नवर्तिनः समरकेतुपुरःसरान्राजपुत्राननुचरार्थितप्रसादप्राप्तवसुभूषणादिवस्तुकलापो जलमण्डपान्निर्जगाम । विस्मयोन्मुखद्वारस्थलोकावलोकितश्च विहगपतिपोत इव पवनवेल्लितोत्तरीयपल्लवप्रान्तपक्षतिरन्तरिक्षमुदपतत् । प्रस्थिते च तस्मिन्नगस्त्याश्रमालंकृतां ककुभमारब्धतद्गुणसंकथः स्थित्वा क्षणं क्षोणीपतितनयः स्वावासमगमत् । कृताह्निकविधिश्च विनिविश्य विजने तमेव सर्वतोऽनवद्यमवलोकयन्विद्याधरराजपुत्र्या रूपातिशयमनयद्दिवसम् । अवसिते च वासरालोके संगलत्तिमिरतया मन्दायमानरूपदर्शनसामर्थ्यां कथंचित्ततो विनिवर्त्य दृष्टिमुत्थाय च यथाक्रियमाणमावश्यकं सांध्यमन्वतिष्ठत् । उपस्थिते च प्रदोषप्रतीष्यकृतसपर्याणां द्विजन्मनामाशिषमारुह्य च सपर्याणां मकरिणीं करेणुघण्टारवश्रवणगत्वरेण सत्वरं प्रधावता निजगृहेभ्यो गृहीतासिकुन्तकार्मुकेण पदातिसार्थेन सनाथीकृतपुरोभागः पवनविलुलितपुलकाकारस्थूलचूलानामशेषतः प्रज्वलन्तीनां दीपिकानां कनकरेणुकपिलेन प्रसर्पता निरन्तरमा-

लोकेन समुपजातबालातपसमागममिव राजमार्गतिमिरमुपदर्शयन्नाजगाम राजकुलम् । अवतीर्य च द्वारि संभ्रान्तदौवारिककृतप्रणामः प्रविश्य परिवृतः प्रणयिना राजपुत्रलोकेन विलोक्य प्रदोषास्थानमण्डपावस्थितं पितरमुपास्य सविनयमास्यनिहितनिभृतेक्षणो मुहूर्तमुत्थाय गत्वाभ्यन्तरं प्रणम्य दूरानतेन शिरसा प्रतिदिवसमेव दर्शनाभिलाषिणीं जननीमागत्य निजमन्दिरं द्वारादेव विसर्जितानुयायिसेवकजनस्तत्कालविरलपरिजनप्रचारमप्रमत्तासशस्त्रिपुरुषशतपरिक्षिप्तमादृतैर्द्वाररक्षिभिर्निरीक्ष्य सम्यक्प्रवेश्यमानतत्कालसेवोपयुक्तकथकगाथकप्रायलोकमस्तोकचन्दनच्छटोपसिक्तमसृणमणिकुट्टिममविरलप्रकीर्णविकचकुमुदेन्दीवरदलोपहारं समारब्धशिशिरोपचारैश्चतुरपरिचारकैः सत्वरमपसारितान्तर्ज्वलत्प्रदीपनिवहमनिलसंपातेऽपि स्थैर्येण शिखाग्रपातिनामपि पतङ्गकुलानामप्लोषणेन जनितमुग्धवनिताविस्मयैरकज्जलैर्ज्वलद्भिर्माणिक्यदीपैः समन्तादुत्सारिततमोवितानं वितानकावलम्बिभिरविरलैर्मल्लिकामुकुलदामभिस्तुहिनकरमयूखैरिव श्यैतमादातुमन्तःप्रविष्टैर्जटालीकृतसकलक्षणमभीक्ष्णमापतता परिमलाकृष्टषट्पदकुलेन पर्यन्तोद्यानमारुतेन विस्तारितगवाक्षविन्यस्तमणिभाजनविलेपनामोदं वासभवनं विवेश ।

तस्य चैकदेशे निवेशितमायतविशालं हंसविशदप्रच्छदपटाच्छादितमच्छजललवस्राविणा सुधाधवलेन जाह्नवीपुलिनमिव फेनपुञ्जेन जनितसांनिध्यं निद्राकलशेन शयनमध्यासीनः शयनसंनिहितासनासीनाभिरनुवेलमार्द्रेण चन्दनद्रवेण सान्द्रीकृतकरपल्लवस्पर्शशैत्याभिर्वारवनिताभिः संवाह्यमानचरणपल्लवस्तत्कालमव्याकुलेन चेतसा संस्मृत्य गन्धर्वकालापमुपजातविस्मयश्चिन्तितवान्—'अहो काप्यद्भुता तस्याश्चक्रसेनदुहितुः शरीरावयवशोभासंपत्तिर्यस्यास्त्रिभुवनातिशायिरूपापि तत्प्रतिकृतिरियं

चित्रपटगता रूपलव इति निवेदिता तेन विद्याधरदारकेण । यदि च सत्यमेव तस्यास्त्रस्तमृगदृशस्तादृशं रूपं ततो जितं जगति विद्याधरजात्या । दूरमपसारितो निःसारताप्रवादो निजः । संसारेण प्राप्तमवधिमबलारूपकल्पनाशिल्पवैदग्ध्यं विधेः । स्तम्भितो रम्भादिसुरविलासिनीवर्गस्य सौभाग्यगर्वः । निवृत्ता लावण्यगुणगणगणना रतेः । प्रवृत्तः सप्तलोकीलोकलोचनानामचिन्तितो महोत्सवः । प्रकटितः प्रलयकालविप्लवः क्षुभितेन सर्वतो रागजलराशिना शृङ्गारिजनस्य । भ्रान्ता चतुर्दशस्वपि भवनेषु भगवतो मकरकेतनस्याज्ञा । न जाने कस्य सुकृतकर्मणः सत्वरपलायमानतिमिरमार्गप्रभावितशशिप्रभाप्रवाहधवला पतिष्यति वपुषि तरलायता तस्याः कटाक्षदृष्टिः । कस्य संचिताकुण्ठतपसः कण्ठकाण्डे करिष्यति पतिष्यन्त्यास्तद्भुजलतायाः प्रथमसूत्रपातमम्लानमालतीकुसुमकोमलः स्वयंवरस्रजः । कः सुजन्मा जन्मफलभूतानि प्रस्थितः सह तया राजपथवर्तिनः सरागं पुरजनस्य श्रोष्यति श्रुतिसुखानि प्रशंसावचनानि । कस्त्रिभुवनश्लाघ्यचरितस्तदध्यासितमधिष्ठितो गजस्कन्धपीठमाकण्ठमुत्तानिततरलतारैः पीयमानवदनलावण्यो नगरनारीलोचनैरवतरिष्यति विवाहमण्डपे वेदिबन्धम् । कस्य कन्दर्पबान्धवस्य तत्क्षणाबद्धकम्पखिन्नसरलाङ्गुलौ तदीयकरपल्लवे लगिष्यति श्लाघ्यशतपत्रशङ्खातपत्रलक्षणो दक्षिणपाणिः । पुण्यकारी तत्परिजनो यः सर्वदा सविधवर्ती स्वास्थानभवनस्थितां विमाननिवहेन गगनं गाहमानामुदधिरोधोवनेषु स्वेच्छया संचरन्तीं श्रवणागतस्य प्रेयसो विद्याधरराजकन्याजनस्य सरहस्यमखिलं कलाकलापमुपदिशन्तीं तामन्वहं पश्यति । अधन्यः खेचरगणो यः प्रकाममनुरक्तोऽपि दूरवर्ती तद्दृष्टिपातामृतरसस्य रूपमात्रदर्शनतरलितो वृथैव मन्मथव्यथामहमिवोद्वहति । अहो मे मूढता,

मदसावायतेक्षणा भूमिगोचरनृपाधिपात्मजप्रणयिनी भविष्यतीति वार्तयापि श्रुतया हर्षमुद्वहामि। सत्स्वपि रूपलावण्ययौवनशालिष्वपरेषु भूपालदारकेषु कालान्तरभुवस्तदनुरागस्यात्मानमेव लक्षीकरोमि। काहम्, क सा, क भूमिगोचरस्य निकेतनं साकेतनगरम्, क दिव्यसङ्गसमुचिताचलप्रस्थसंस्थं रथनूपुरचक्रवालम्। अपि च विवेकिना विचारणीयं वस्तुतत्त्वम्। नोज्झितव्यो निजावष्टम्भः। स्तम्भनीयं मनः। प्रसरदपथो न देयमप्रणीत्वमिन्द्रियगणस्येत्यपि न गणयामि। असौ पुनरपरा विडम्बना यदयमात्मा मदनदाहोपशमाय प्रशममार्गमवतारितोऽप्यधोगतिं रागिणस्तदङ्घ्रियुगलस्यालोचयति न प्राणिजातस्य। कदलीस्तम्भतुल्यतां तदूरुपरिणाहस्य विमृशति न देहनिःसारताया हृदयवासिभिः। सङ्गो दुःखहेतुरित्यलब्धविवरं तत्पयोधरद्वन्द्वमवधारयति न कलत्रपुत्रादिवर्गम्। मध्यस्थां तन्नाभिमुद्रामभिनन्दति न भावनाम्। मधुरं मुखे तदधरप्रवालं ध्यायति न भोगसौख्यम्। युगान्तविलुलितक्षीरसागरसमं तदक्षिविस्तारमुत्प्रेक्षते न संसारम्। आरोपितानङ्गचापभङ्गुरं तद्भ्रूलता ललितमध्येति न विधेर्विलसितम्। अन्या अपि प्रकृष्टरूपलावण्यवत्यः प्राप्तयौवना दृष्टाः क्षितिपकन्याः। अन्यासामपि श्रुतस्तत्त्ववेदिभिरनेकधा निवेद्यमानो विलासक्रमः। न तु कयापि काप्यपहृतं चेतो यथानया। कथमिदानीमासितव्यम्। किं प्रतिपत्तव्यम्। केन विधिना विनोदनीयेयमनुदिनं प्रवर्धमाना तद्दर्शनोत्कण्ठा। कस्यावेदनीयमिदमात्मीयं दुःखम्। केन सार्धमालोचनीयं कर्तव्यम्। कस्य क्रमिष्यते तद्देशगमनोपायेषु बुद्धिः। कस्य साहायकेन सेत्स्यति तया सह समागमप्राप्तिः। अपि नाम दैवमनुगुणं स्यादेष्यति स विद्याधरदारकः। न विस्मरिष्यति परिचयम्। करिष्यति पक्षपातम्। द्रक्ष्यति

मामिह स्थितम् । निर्वक्ष्यति वचनवृत्त्या स्वयं प्रतिपन्नमर्थम् । नेष्यति तदीक्षणगोचरप्रापणेन मत्प्रतिकृतिं कृतार्थताम् । कथयिष्यत्यतिशयेन मां गुणवन्तम् । सापि शशिमुखी तथेति प्रतिपत्स्यते तद्वचनम् । भविष्यति मदीयदर्शनाभिलाषिणी । प्रेषयिष्यति तमात्मानुरागप्रकटनाय मत्पार्श्वम्' इत्यनेकसंकल्पपर्याकुलचेतसः प्रबन्धवर्धमाना रतेरनवरतमु-क्तायतोष्णनिःश्वासस्य मुहुर्मुहुः पर्यङ्कपरिवर्तनैस्तरङ्गितोत्तरच्छदपटस्य प्रभातागमनपर्युत्सुकतया प्रदोषेऽपि नष्टनिद्रस्य निशीथेऽपि देवतार्चनाय परिचारकानुद्यमयतः शतयामेव कथमपि क्षपा विराममभजत । प्रभातायां च शर्वर्यामुत्थाय निर्वर्तितप्राह्णेतनावश्यकविधिः प्रतिपद्य सविशेषसंपादितशोभमभिनवं सर्वाङ्गिणमाकल्पमल्पपदातिबलपरिवृत-स्तदेवोद्यानमगमत् ।

तत्र चातिबहलपादपच्छाये हंसपदपङ्क्तिलाञ्छितस्वच्छसुकुमारसैकते संततापतत्कमलरेणुकषायशीतलमरुति मकरध्वजायतनदीर्घिकातीरपरि-सरे निषण्णः संनिधानवर्तिभिश्चित्रविद्योपाध्यायैरन्यैश्च जनपरम्परा-जनितकुतूहलैश्चित्रमवलोकयितुमागतैरालेख्यशास्त्रविद्भिर्नगरलोकैः सह विचारयन्नविचार्य चारुत्वतत्त्वं तस्याश्चित्रपुटपुत्रिकाया रूपमपसारिता-परविनोदः पूर्वाह्णमनयत् । उपस्थिते च मध्याह्नसमये यथाविधि विसर्जितायातमान्यलोकः सखेदमुत्थाय चिरनिरोध एव मन्थरैश्चरण-विन्यासैरितस्ततो बभ्राम । गत्वा च सुघटितसोपानसुषमावतारे सरस-वानीरवीरुधि समासन्ननीरे पुरःसरैरागत्य किंकरैः समन्ततो विस्तारित-रुचिरपरिजवनिकावस्त्रांशुके शुचिनि सारवे रोधसि पुरोधसा संनिधा-पितप्राज्यपूजोपकरणः समाहितेनान्तःकरणेन कृत्वा देवतार्चनमुत्थाय गत्वा विविक्ततरमुद्देशमनन्तरमेव सत्वरमागतैर्महानसिकपुरुषैरुपनीत-

मतिहृद्यवर्णगन्धरससमुत्कृष्टमूलसंपद्भिः सूपकारशास्त्रोपलब्धैर्यथावसरमुपकल्पितैरनल्पबहुभिर्नैवैर्द्रव्यविशेषैरुपस्कृतानेकभक्ष्यलेह्यपेयप्रकारमास्वादयांचकार । परिवृतो राजपुत्रैरुपवने तत्रैवाहारमुपस्पृश्य चाघ्रातधूपधूमवर्तिरुद्वर्तितवदनकरतलः कुरङ्गमदकर्पूरामोदिना चन्दनद्रवेण स्पर्शसंवेदनानन्दमन्दीकृतभुजपरिस्पन्दाभिरविरतस्यन्दमानहस्तारविन्दसंपादितान्तःप्रीतिभिः प्रसाधिकाभिरतिमात्रमतिचिरेण निर्वर्तितकुङ्कुमोद्वर्तनक्रमः शिरसि घटितपाटलाकुसुमसारस्मेरमल्लिकामुकुलमुण्डमालो यथासन्नमुपनीतताम्बूलकुसुममाल्यानुलेपनैः प्रणयिलोकैः सहारब्धविविधसंकथस्तस्थौ । कांचिदपि वेलां गते च विरलतां विलीनतापे तपनतेजसि तरलितस्तिलकमञ्जरीसंगमाभिलाषेण तत्कालसमुपस्थितावधेर्गन्धर्वकस्यागमनमार्गमवलोकयितुमभ्यग्रवर्तिनः शिखाग्रचुम्बिताम्बरक्रोडमाक्रीडशैलस्य शिखरमारुरोह ।

तत्र चोर्ध्वस्थितः पुरस्तादवस्थितस्य प्रेयसोऽन्यतमभृत्यस्य प्रतिस्कन्धं समर्पिताङ्गभारो निवारितातपश्रीकृतातपत्रेण छत्रधारेण तत्काललब्धावसरैरवारितैः प्रतीहारलोकेन प्रविश्य पार्श्वतः स्थितैः प्रणयवाचालैरुद्यानपालैरावेद्यमानरामणीयकेषु लतामण्डपेषु तरुखण्डेषु सारणिस्रोतःसु कृत्रिमनदीसेतुबन्धेषु केलिवापीकूलजलयन्त्रेषु चाभिनवकृतसंस्कारेष्वन्तरान्तरानिक्षिप्तचक्षुरीक्षमाणो दक्षिणाशां तावदास्ते, यावदस्तशिखरमगादशिशिरगभस्तिः । स्तोकावशेषे च दिवसकरधामनि श्यामायमानेषु दिग्भागेष्वनागमनेन गन्धर्वकस्य किंचिन्म्लानमुखकमलशोभो दिवस इव नभसः क्रमेण क्रीडाचलादवततार । जगाम च स्वावासम् । आसीनश्च शयने चिन्तयन्मुहूर्तमार्तेन चेतसा तस्य विलम्बकरणानि कृच्छ्रात्प्रसनिद्रो निशामनयत् । अपरेद्युरपि तेनैव क्रमेणोद्यानमगमत् ।

तेनैव विधिना तत्र सर्वाः क्रियाश्चकार । तथैव तस्यागमनमीक्षमाणो दिवसमनयत् । अकृतागतौ च तत्र क्रमादतिक्रामत्सु दिवसेषु सि(शि)थिलीभूततिलकमञ्जरीसमागमाशाबन्धस्य प्रबन्धविस्तारितोदग्रसंतापसंपद्यथोत्तरप्रथितदिवसायामदैर्घ्यमदुस्तरो निरन्तरप्रवर्तितोष्णबाष्पसंततिरपर इव निदाघसमयो जजृम्भे । जनितनिर्भरव्यथस्तस्य दवथुरविरतं सस्मार संस्मरेण चेतसा चित्रपटपुत्रिकानुसारपरिकल्पितस्य चक्रसेनतनयातनुलतालावण्यस्य । सततमन्वचिन्तयच्चारुतामनुदिनोपचीयमानस्य तस्याः प्रथमयौवनस्य । यौवनोपचयपरिमण्डलस्तनमनङ्गवेदनोच्छेदनायेव सर्वदा हृदयगतमधत्त तद्रूपम् । आविष्कृतानेकभावविभ्रमाणि लिखितानीव केनापि निपुणचित्रकरेण दिग्भित्तिषु दिवानिशं ददर्श तस्याः प्रतिबिम्बानि ।

दृष्ट्वा च तमकाण्डवैरिणा मन्मथेन घर्मर्तुना च युगपदुपताप्यमानमुत्पन्नानुकम्पो निर्वापयितुमिव चक्रे जगत्यामवतारमखिलविश्वोपकारी वारिदागमः । प्रवर्तितप्रबलधारापङ्क्तयो भङ्क्तुमिव तस्य धारागृहस्पृहां क्षिप्रमेवान्तरिक्षमाच्छादयांचक्रुः । अञ्जिनीपलासप्रकरनीलाः पयोमुचः सततयामिनीजागरणजडतारकां प्रसादयितुमिव तद्दृष्टिमविरलोद्भिन्नमरकतश्यामशाद्वला बभूव भूतधात्री । प्रथमजलधरासारशिशिरास्तदङ्गतापमिव निर्वापयितुं निर्वातुमारभन्त संततामोदमकरन्दमांसलाः कदम्बमरुतः । मानसस्मरणसंजातरणरणकास्तदनुरागमाख्यातुमिव खेचरेन्द्रदुहितुरुत्तरां दिशमभिप्रतस्थिरे राजहंसाः । तद्विरहदाहविच्छेदाक्षमेण पत्रखण्डाडम्बरेण विहितापत्रपाणीव वर्षासलिलपूरितासु विलाससरसीषु निममज्जुरम्भोजिनीवनानि । घनधाराभिवृष्टमूर्तयस्तदार्तिदर्शनदुःखिता इव दूरविनतैः पल्लवेक्षणैरम्बुरु-

णिकाश्रुविसरमजस्रमसृजन्नुपवनद्रुमाः । प्रकृतिकर्कशांस्तदङ्गसंस्पर्शयोग्यानिव कर्तुमात्मनः करानन्तःसलिलेषु जलमुचां कुक्षिषु निचिक्षेप चण्डभानुः । तस्मिन्नसकृदुत्सृष्टबाणविसरं निवारयितुमिव मकरकेतुमाबद्धकुसुमाञ्जलिपुटान्यजायन्त केतकीकाननानि । विनोदयितुमिव तस्यारतिमनारतोदीरितमधुरकेकागीतिभिः समारम्भि ताण्डवमुद्दण्डबर्हमण्डलैर्गृहशिखण्डिभिः । एवं च विकसिताकुण्ठकलकण्ठचातककक्कले कठोरदर्दुरारटितदारितश्रवसि विश्रुतापारवाहिनीपूरघूत्कारे घोरघनगर्जितारावजर्जरितरोधसि द्योतमानविद्युद्दामदारुणे विततवारिधाराधोरणिध्वस्तधीरकामुकमनसि सान्द्रकुटजद्रुमामोदमूर्छितागच्छन्नदुच्छन्नकल्पाध्वगकलापे समन्ताद्विजृम्भितेम्बुधरदुर्दिने विधुरीभूतमनसः । कोशलाधिपसुतस्य पङ्कपटलाविलेषु साकेतपुरपरिसरे रम्यतलकुट्टिमेषु लीलालतामण्डपेषु तृणनिरुद्धाध्वसंचारेषु कृत्रिमाचलशिखरेषु पूरानीतकण्टककिलिञ्चकश्मलेषु नगरनिम्नगाकूलेषु खण्डितयदृच्छाविहारकौतुकस्य कालवसा(शा)च्च विश्रान्तेषु यन्त्रधारागृहप्रवेशेषु मुद्रितेष्वचिरेण चन्दनचर्चाविधिषु अक्रियमाणेषु कमलकुमुदकुवलयशयनेष्ववधार्यमाणेषु हारकेयूरमेखलादिषु मृणालाभरणेष्वनारोप्यमाणासु हृदि जलार्द्रास्वसंचार्यमाणेषु ससलिलतालवृन्तकदलीपत्रवातेषु अदीयमानेषु करचरणयोरिन्दुमणिदर्पणेष्वनुद्वाद्यमानेषु भवनवलभीगवाक्षेषु द्विगुणदीप्यमानविरहदाहज्वरोष्मणः स्वभावधीरत्वादनवधीरितयथारथकार्यस्य लज्जया निपुणनिगूहितेङ्गिताकारस्य द्वेष्यमपि वेणुवीणाविनोदमादरेण विदधतः प्रस्तुतामपि विद्याधरविलासवार्तामनावर्तयतः प्रेष्ठमपि नाम गन्धर्वकस्यागृह्णतो रहस्यपि तदर्पितं चित्रपटमप्रेक्षमाणस्य रूक्षामपि कुबेरदिशि दृष्टिमक्षिपतः समरकेतोरपि निजावस्थामप्रथयतः श्रमेऽ-

ष्यायतोष्णान् पुनः पुनः स्वा(श्वा)सपवनान् मुञ्चतः परमचिन्ताध्वयामजन्मना प्रचीयमानेनानुदिनमप्रतिविधेयेन देहकृशिम्ना कदर्थ्यमानस्य ग्रीष्मकालादधिकदुःसहो बभूव वर्षासमारम्भः ।

अथ प्रोषिते जलदसमये तद्वियोगादनुदिवसमाविर्भवत्प्रबलातपायामभिनवपतिप्रवासदुःखितस्य विरहिणीजनस्य सदृशावस्थमात्मानमिव दर्शयितुमागतायां शरदि **हरिवाहनः** सर्वथा गन्धर्वकागमननिष्प्रत्याशस्तिलकमञ्जरीसंततस्मरणजन्मना विक्लवीकृतो गाढमतिदारुणावेगेनोद्वेगेन कथंचनाप्यशक्नुवन्गृहेऽवस्थातुम्, एकदा स्वमण्डलावलोकनविषयमात्मनः कुतूहलमुद्दिश्य प्रधानमन्त्रिमुखेन पितरं व्यजिज्ञपत् अनुज्ञातगमनश्च तेन प्रशस्तेऽहनि समस्तनिजसैन्यपरिवृतो विविधयानवाहनाधिरूढैरुज्ज्वलविदग्धवेषधारिभिः **समरकेतुपुरःसरैः** सुहृद्भिरनुगम्यमानस्तत्कालशून्येषु नागरिकाजनमनःसु रक्षणमिव निवेश्य निश्चलं रणरणकमतिभूयसा विभवविच्छर्दे **साकेतनगरान्निरगच्छत्** । अवहच्च वर्त्मनि प्रतिदिनमविच्छिन्नैः प्रयाणैः । प्रयान्तं च तं यदृच्छया तेषु तेषु जनपदेष्वासन्नयायी तत्रत्यराजलोकस्तत्कालोचितैरालापैरकृतनिर्वेदा विनोदयामास । तथाहि—एष निःशङ्को विचरदरण्यगजयूथव्याप्तकन्दरो दूरदृश्यमानोदग्रशिखरश्रेणिना परिगतोपरिस्थनगरः स्थवीयसा प्राकारवलयेन बन्दीकृतानामरिनरेन्द्राणामेकमन्दिरं **मन्दरकाख्यो** दुर्गगिरिः, असावनेकनिकटग्रामपरिसरविसारिसारिणिजला **सरावती** नाम किमपि सेव्यकूला सरित्, एतदुन्मदचक्रवाकबकाङ्ककुररकारण्डवाकुलमुद्दण्डकमलिनीखण्डमण्डितनीरमंशावतार इव क्षीरजलधेः पुरा दिग्विजयागतेन देवेन खानितं सरः । एष दशसीरसहस्रसंमितसीमासूर्यग्रहणपर्वणि पूर्वमपवर्जितो **मदिरावतीदेव्या**

सर्वमण्डलग्रामाणामग्रिमो देवाग्रहारः। इदमतिस्निग्धसान्द्रसकलद्रुमगहनसुन्मुखैर्मुनिभिरनुदिनमुदीक्ष्यमाणमार्गापतदतिथिवर्गमनादरप्राप्यसुन्दरस्वादुफलमूलकन्दं मन्त्रिणा सुरानन्देन निर्मापितं धर्मारण्यम्, इह करालकरिकुम्भास्थिकूटस्थपुटिततलायामचलपरिसरप्रान्तसीमनि समारब्धसमरकर्मणा प्रापितः प्रेतनगरमुत्तरदिगन्तदण्डनायकेन नीतिवर्मणा हूणपतिः, इमामविच्छिन्नकुङ्कुमकच्छलाञ्छिततीरदेशो तरङ्गिणीमुत्तीर्य युवराजसमरकेतोर्भुक्तिरितः प्रदेशादारभ्य पश्चिमेन समग्रोऽपि ग्रामनगरग्रामो विलम्भके सेनान्यः कमलगुप्तस्य, इत्येवं च सर्वतो निवेद्य मानमण्डलविभागः सविभ्रम इवेतस्ततो भ्रमन्नुत्पाककलमकेदारकपिलायमानसकलग्रामसीमान्तमातपक्लान्तकान्तारमहिषयूथाश्रितस्फषितपल्वलोपान्तकृष्णागुरुतरुतलमविरलोद्भिन्नकुसुमगुच्छसप्तच्छदविटपिभिर्बद्धविकटाट्टहाससमुद्भिकासकमलाकरामोदवासिताशामुखभ्रमन्मदमुखरालिमालमुत्तालशालिवनगोपिकाकरतलतालतरलितपलायमानकीरकुलकिलकिलारावयन्त्रितपच्चिकयात्रमुच्छ्रितपत्त्रखण्डपुण्ड्रेक्षुवाटपरम्पराभिरामं कामरूपनाम्ना लब्धव्यपदेशं देशमाससाद।

तत्र च प्रतिदिवसमधिकाधिकोपदर्शितभक्तिना प्राग्ज्योतिषाधिपेन प्रतिबद्धगमनः स्कन्धावारममुञ्चत्। आबद्धनिश्चलावस्थितिं च तं चारपुरुषेभ्य उपलभ्य सर्वेऽपि सत्वरमुत्तरापथनिवासिनो दर्शनार्थिनः पार्थिवाः समाजग्मुः। उपनिन्युश्च निजनिजदेशजातानि जातप्रीतयः प्रधानानि तस्मै प्राभृतानि। प्रारब्धनवनवोपचारसंभृतप्रणयैश्च तैः प्रत्यहमनुगम्यमानः स्निग्धपत्त्रलतागुल्मगहनेष्वनेकतरुफलरसास्वादजनितनानाशकुनिकुलसौहित्येषु लोहित्योपकण्ठकाननेषु विचचार। विहरमाणश्च यदृच्छया तेषु तेषु स्थानेषु कृतावस्थानानेणकानरण्यमहिषान्मृ-

गपतीन्वराहान्द्वीपिनश्चमरान्द्विपानन्यांश्च नानारूपधारिणः श्वापदविशेषान्सहस्रशो ददर्श । जातकौतुकैश्च मृगयाव्यसनिभिः क्षितिपतिकुमारैः क्षपणाय तेषामनुक्षणं व्यापार्यत न च प्रकृतिसानुक्रोशतया शस्त्रगोचरगतानपि ताञ्जघान । केवलं कुतूहलोत्पादनाय प्रधाननृपतीनामनवरततन्त्रीताडनाभ्यासलघुतराङ्गुलिव्यापारेण सव्येतरपाणिना स्फुटतरास्फालिततरलवीणस्तद्ध्वनिश्रवणनिश्चलनिमीलितेक्षणानर्भकानामपि विधेयांश्चकार ।

दृष्ट्वा च तांस्तथाविधानुपजातधृतयो विधृत्य ते क्षितिभृतो निभृतमेव तान् कांश्चिदङ्गदत्तस्थूलकुङ्कुमस्थासकान्, कांश्चिच्छिरसि विरचितोच्चकुसुमशेखरान्, कांश्चित्कर्णलम्बितविचित्रवर्णचामरान्, कांश्चिच्छृङ्गकोटिबद्धोत्कृष्टपट्टांशुकपताकान्, कांश्चित्कण्ठघटितवाचाटकनकघण्टिकाभरणान्, कांश्चित्पुच्छनालदोलायमानविपुलपल्लवपूलान्, उदीरितोत्तालकलकलपदातिबलतुमुलतालरवतरलितानेकहेलयैवोदक्राक्षुः । तैश्च त्रासवशविलोलतारैर्विकृतरूपदर्शनादन्योन्यमप्यसंगच्छमानैस्तुच्छजनविस्तारिताट्टहासरसमसमञ्जसं दिङ्मुखेषु प्रपलायमानैः क्षणमात्रमोहितोत्कण्ठाभरविरामो राजपुत्रः प्रतिदिवसमक्रीडत् ।

एकदा च प्रातरेव तं मृगारण्यमुपगतमविश्रान्तमदकलजलरङ्कुविरुतौ मारुतानीतजलतुषारासारशीतले शिलातलिनि शैलनिम्नगातीरतरुतले निविष्टमन्तिकोपविष्टेष्टसेवकलोकमधिकसुश्लिष्टसंयोजितकलाया नूतनगुणारोपसविशेषलब्धशोभासंपदः सविलासमङ्कदेशोपवेशिताया प्रियवनिताया इव विपञ्च्याश्चटुलनखकोटिघट्टनावाप्तजन्मनः स्वभावमन्मनानविरतमवतरतः कर्णकोटराध्वनिध्वाने विशेषानवधारयन्तमियमृक्षसंकुला वृक्षसंहतिः, एष वनमहिषयूथाधिष्ठितो नद्युपकण्ठः, इद-

मुदरदेशासीनमेदुरवराहमद्रिगह्वरम्, असावन्तरनिभृतभ्रान्तशरभः शरस्तम्बनिकुरम्बः, इत्युपेत्योपेत्य सरभसमावेदयन्तमवधानदानेन विदधानमनुचरगणं कृतकृत्यमुपसृत्य सत्वरकृतप्रणामः पुष्कराख्यो नाम करिसाधनाध्यक्षः स्फुटाक्षरमवादीत्—'कुमार, विरमतु विनोदैकफला तावदेषा गीतगोष्ठी। गरिष्ठमन्यत्प्रतिविधेयं राजकार्यम्। अद्य यामिन्याश्चरमयामे वैरियमदण्डाभिधानः प्रधानदन्ती दिगन्तरव्यापिना घ्राणपथमुपगतेन प्रबोधितो मदगन्धेन सविधचारिणमरण्यवारणं रणायानुबध्नन्ननवबुध्यमानो निपुणमन्धकारसंपर्कादध्वन्यतर्ज्यमाणगतिरेव कठिनकर्करव्यतिकरकष्टसंचारमतिमहत्कान्तारं प्रविष्टः। दृष्टश्च दिनकरोदये पृष्ठतः पदानुसारप्रधावितैस्तत्प्रतिबद्धैराधोरणगणैः। आरब्धश्च शिबिरमानेतुम्, न तु कृतानेकयत्नैरपि परितो निवर्तयितुम्। तदेष यावन्नातिदूरं याति, दुर्गमम्बावनप्रदेशं न विशति, व्यालबहुले वा वन्यद्विरदयूथे न स्थितिं बध्नाति, तावदादिश्यतां कोऽपि तद्ग्रहणाय साधनिकः' इति ब्रुवाणे तत्र हरिवाहनः क्षणमिव ध्यात्वा 'भद्र, न किंचिदादिष्टेनान्येन। वयमेव तं व्यावर्तयिष्यामः' इत्युक्त्वा सत्वरस्तरुतलादुत्तस्थौ।

शिबिरनिक्षिप्तकमलगुप्तश्च तत्क्षणादिष्टपरिवर्धकबद्धपर्याणमधिरुह्य प्रधानवाजिनमधिष्ठितापरवरवाजिपृष्ठेन वारंवारमभिमुखचलच्चक्षुषा सिंहलेश्वरसुतेन सार्धमारब्धतत्कालसमुचितसंकथो यथासन्नविनिवर्तितानुयायिमान्यराजलोकस्तोकपदातिबलपरिवृतो मुहुर्निशावृत्तं गजगमनवृत्तान्तमावेदयता, मुहुर्मार्गभूमेः समविषमस्थानानि कथयता, मुहुश्चिह्नीकृतैरचलसानुभिर्निरन्तरालतरुगहननिह्नुतं यातव्यदेशमुपदर्शयता, सहप्रस्थायिना महामात्रवर्गेण सूच्यमानमार्गोऽभिजवेनाटवीमगच्छत्।

तत्र चाविरलपत्रलतरुणतरुगणे निर्झरिणि विपुलविषमोपलपटल-दुःसंचरे शैलपरिसरे कृतावस्थानम्, अविरतप्रसृतमदजलासारसूत्रिताकालजलदागमम्, अधःकृतप्रलयजलधरस्तनितेन विस्तारिणा कण्ठरसितेन वित्रासितसकलवनचरवृन्दम्, आसक्तवनदन्तिदानपरिमले पुरोवर्तिनि महति पर्वतपादपाषाणे सरोषनिहितोभयविषाणम्, वारंवारमतिदूरोल्लासितेन सरससल्लकीविटपधारिणा करदण्डेन दमयितुमकाण्ड एवोद्यताः शमयितव्या मयैते दुष्टलेशिका न मे दोष इति शास्त्रोद्धारमिव कुर्वाणम्, कैश्चिदनवरतकृतनिष्ठुरनिर्भर्त्सनैः, कैश्चिन्मधुरवचनघटितचित्रचाटुभिः, कैश्चिदितस्ततो विसृष्टलोष्टविशरैः, कैश्चिदग्रतः क्षिप्तकोमलल्लतापल्लवकवलैः, कैश्चिदारोढुमध्यासितपृष्ठपीठोपरिस्थपादपशाखैः, कैश्चिद्बन्धुमधः प्रविश्य पातितपादपाशैः आश्रितदुर्गदेशैरपि त्रासतरलेक्षणैराधोरणगणैः सर्वतो निरुद्धं क्रोधमिव मूर्तिमन्तकमिवोपजातगजविवर्तमारथान्वकारातिसमरगजासुरभासुराकारमात्मशरीरसंरक्षणविहस्तैरितस्ततो हस्तिपालकैः सशङ्कमुपसृत्योपसृत्य ढौकिताभिः परिगतमपि वशाभिरवशमिभमद्राक्षीत्।

दृष्ट्वा च तमदृष्टपूर्वचेष्टमुत्सृष्टविनयपक्षमकालक्षेपविस्मृतसमस्तचिरकालाभ्यस्तशिक्षमतिशयप्रवृद्धमदमुद्दामकोपमकाण्ड एव व्यालरूपतामापन्नमुत्पन्नविस्मयो विकल्पमुन्मनसा तत्तदतिचिरं तस्थौ। अवततार च निवारितसैन्यकोलाहलः कुतूहलेन तं गृहीतुमश्वात्। पुनः पुनरादिष्टपरिचारकचिरोपनीतवीणश्च वेपमानतनुभिः ससाध्वसं दृश्यमानो नृपकुमारैः कुमारदारुणो वारणः 'स्वल्पे प्रयोजने न किंचिदात्मना संशयमारोपितेन फलम्, अन्यथैव व्यावर्तयितव्योऽयम्' इति निवार्यमाणोऽपि वारंवारमन्तिकस्थेन समरकेतुना दन्तिनं प्रति

शनैः शनैरुदचलत् । गत्वार्चवञ्चितदृष्टिपातस्तरुलतागुल्मगहनान्तरेण तत्समीपमास्फालयामास मनसि विस्फारिताभिमतग्रामरागवासनः कलितकान्तरलकोणया वामपाणिपल्लवप्रदेशिन्या स्थानस्थानसंस्पृष्टतारतश्रीमूर्छनामेकोनविंशतिगुणां दक्षिणकरेण वीणाम् । उच्चचार च तारतममस्यास्तत्क्षणक्षोभितसकलजवनदेवतावृन्दमानन्दमुकुलितदृष्टिभिर्गलितनिजगीतस्मयैः सविस्मयमाकर्ण्यमानमभ्यर्णवर्तिषु तरुनिगुञ्जेषु बद्धगोष्ठीमण्डलैः किंनरकुलैर्मन्दरालोडितजलराशिजलमिव स्पष्टमूर्छनागमकरचितं प्रभातकालग्रहचक्रमिव दर्शितप्रकाशसर्वस्वरविशेषं मरुस्थलमिव कलमविकलग्रामतानमतिशयितसुरतप्रगल्भकेरलीकण्ठमणितं रणितम् । आगतं च तच्छ्रवणगोचरमाकर्णयन्नेकाग्रेण चेतसा स्वल्पमप्यकृतवारणः कर्णतालैः कपोलमदपरिमलाकृष्टानामलिगणानां स वारणः श्रान्त इव सुप्त इव कीलितश्चगलितचैतन्य इव क्षणमात्रमभवत् । निस्पन्दसकलावयवं च तं क्षितितलन्यस्तसरलश्लथकरमपास्तकवलमाबद्धाच्छधवलस्थूलबिन्दुभिः स्रवद्भिरनवरतमानन्दबाष्पैः पारितोषिकप्रदानाय कुम्भमौक्तिकप्रकरमिव सृजन्तमतिचिरमवलोक्य संजातसंमदस्तत्क्षणमेव वध्वा परिकरं क्षिप्रतरपातिभिः पदक्षेपैरुपासर्पत् । दूरविततस्तम्भनिश्चलं च क्रमेण निजमिव प्रासादमतितुङ्गमप्युदग्रविकटेन दन्तसंक्रमेणाध्यारोहत् । आरूढमात्र एव च तत्र स द्विपः सपदि तां विमुच्य वल्लकीरवश्रवणजनितामानन्दनिद्रामुन्मुद्रितलोचनश्चचाल । तस्माच्छैलपरिसरादङ्कुशोऽङ्कुश इति श्रुत्वा च सत्वरं कुमार(?)ध्याहारमतिरभसधावितैः संभ्रमस्खलितगतिभिरनवरतकृततर्जनैः प्राजनपाणिभिः परिकरवृन्दैः पृष्ठतः कृतानुगमनो गमनवेगोड्डीनसंध्यारागनिभकुम्भसिन्दूरपूरो पूरोच्छलतशृङ्खलागुणद्वि-

गुणतारटङ्कारेण घण्टाद्वयेन घटिताभ्यर्णवर्तिजनकर्णरोगः, 'एष गच्छति' 'एष गच्छति' 'इतो गतः' 'इतो गतः' इति परस्परमुदस्तदक्षिणकरेण दर्शयता सशोकेन राजलोकेनावलोक्यमानो झगित्यदर्शनमगात्।

अथाकर्णितकुमारहरणवृत्तान्तभयसंभ्रान्तानि चलत चलतेति सत्वरादिष्टयथादृष्टसन्निकृष्टाश्ववाराणि गमनवेगश्रमश्वाससन्नपदातिसैन्यशून्यीकृतपुरोभागानि दूरविच्छिन्नच्छत्रधारपङ्क्तिस्वशक्तिकृतानुसरणानि केशहस्तैरपि जयानिलप्रसारितकुसुममालैर्द्विरदसंयमनाय सज्जीकृतवरत्रैरिव न घनपक्ष्मभिरपि प्रतिपन्नवर्त्मभिर्दूरोन्मुखैर्वनविभागावलोकनपरैरिव चरणैरप्युभयतश्चलितपादकटकैरश्वपार्श्वेषु निरर्गलं वल्गद्भिर्धावमानैरिव प्रकटिताकृतीनि सत्वराध्यासितासुगत्वरवरकुरङ्गाणि वेगादधावन्त सर्वतः पर्वतोपकण्ठावासितान्यनीकनायकवृन्दानि। समरकेतुरपि तत्कालसंनिहितराजपुत्रपरिवृतः प्रजविनां वाजिनां बलेन कवलयन्निव सपर्वतसरित्तटावटामटवीमितस्ततो दत्ततरलदृष्टिः 'इदमग्रतो धावति दानगन्धावकृष्टमलिपटलम्, इतः श्रूयते विप्रकर्षादनतिपटुघण्टारणितम्, इतः पूर्णशशिबिम्बमालाविडम्बीनि वननिम्नगावतारकर्दमे घटितपरिपाटीनि जलभृतानि पदमुद्रामण्डलानि, एतन्मार्गतरुशाखाशिखाग्रे विलग्नमभिनवमृणालतन्तुकलापकोमलमनिलाहतं घूर्णति कर्णचामरम्, इदमुभयतः प्रकीर्णमग्रकरपुष्करेण क्षरति पर्यन्तवल्लिपल्लवेभ्यस्तुहिनलवनिकरहारि शीकरबिन्दुजालकम्, इति समासन्नगजगमनशंसिभिः पुरोयायिना सैनिकानामालापैः कियन्तमपि मार्गमर्पिताश्वासः सकलमपि दिनमटव्यामवहत्। अस्ताचलतटाभिलाषिणि च तिग्मदीधितौ धृताध्वधूपिताश्वतन्त्रैः प्रवर्तितो

निवासग्रहणाय राजपुत्रैरेकत्र सुलभतृणकाष्ठसलिले शैलसिन्धुरोधसि स्थितिमकल्पयत्। अतिमात्रमल्पीभूतभूपात्मजपुनर्दर्शनाशश्च प्रेर्यमाणोऽपि वारंवारमवनिपतिभिराग्रहेण नाहारमग्रहीत्। गृहीतगाढचिन्तामौनश्च दृढसमाधिस्थ इव लक्ष्यमाणप्रतिक्षणक्षिप्ततप्तायतश्वासपिशुनितासमाधिर्देवतास्मरणवन्ध्यां संध्यामत्यवाहयत्। तरुतलप्रसारिते च तुरगपृष्ठास्तरणचर्मणि निषण्णो विषण्णेनान्तरात्मना चिन्तयन्कुमारमुद्दिश्य तानि तान्यनिष्टानि कथंचिदपि तामनेककल्पायतैकैकयामां त्रियामामनयत्। उद्गते च दिनपतौ पुरस्तात्प्रतिष्ठासुः प्रेष्ठेन सेनावण्ठवर्गेण नास्ति गतिरग्रतस्तुरङ्गिणामिति निवर्तितो गमनात्तत्रैव क्षणे गमनदक्षमखिलासु दिक्षु सर्वमात्मपदातिबलमवनिपालसूनोरन्वेष्टारमादिष्टवान्। आत्मनापि मार्गतरुमूलवर्ती परिहृतस्नानभोजनादिकर्तव्यो निवृत्तसकलापरव्यापारेण क्षुत्पिपासापरिक्षीणवपुषा परिवृतः प्रधानपुरुषवृन्देन पृच्छन्नादरेण सुहृदुदन्तं प्रत्येकमध्वगानादिनान्तमतिष्ठत्। अस्तपर्यस्तमण्डले च कमलबन्धौ बद्धनिर्वेदः कथंचिदागत्य वसतिस्थानमधिकमस्वस्थचेताश्चिन्तामयीमिव प्रबलदत्तदाहवेदनावेगदुःसहां सहासन्नवनदीर्घिकां चक्रवाकमिथुनैर्निशीथिनीमनयत्। ईषद्विकसितालोक एव च वासवककुभि वासरे विनिःसृत्य वसते पुनस्तदेव पादपमूलमगमत्। अन्वपालयच्च क्षितिपालसूनोर्व्यावर्तनार्थमनुमार्गप्रधावितानापतिष्यतो हस्तिपकपुरुषान्।

अथ मुहूर्तावशेषेऽह्नि दूरादेव विद्राणवदनान्, इतस्ततो निहितशिथिलालसपदान्, अशक्तचंक्रमणखेदितेन मुक्तानिव जीवितेन श्वेतायताभिरन्तरान्तरापरिस्रवत्सान्द्ररुधिराभिः खदिरतरुशाखाशिखोल्लेखरेखाभिर्निरन्तरगवाक्षितेन प्रकामरूक्षत्वचा कायेन दुर्गाटवीपर्य-

टनमनक्षरं व्याचक्षाणान्, सर्वदा व्यायामेन तक्षितानि तदा तु तेन व्यायामेन क्षुधा च क्षामतां परामानीतानि क्षीणजीवनोपायानीव प्रकटवंशपृष्ठमाश्रितानि बिभ्रतो जठराणि, सत्वरचरणपातपरम्परोत्थापितेनारण्यपथरेणुना पाण्डुरीकृतशिरःश्मश्रुकेशान्, अपक्रान्तयौवनावलेपान्तरया जरयेवागत्य कवलितान्, अप्रसाधितारब्धकार्यचिन्ताश्रान्तपौरुषान्, अभिमुखं मुखनिखातदृष्टिमार्गोपवृष्टिमिष्टस्वामिकुशलवार्ताश्रवणपर्युत्सुकं राजकमवलोक्यावलोक्य लज्जया परस्परस्य पृष्ठे निलीयमानांस्तानपश्यत्।

दृष्ट्वा च दूनचेताः समीपागतानकृतप्रणामानेव पप्रच्छ—'भद्राः, किमाकुला यूयम्। आयाथ विश्रब्धम्। अवदद्भिरेव युष्माभिरनेन दूरावनतपक्ष्मणा व्रीडाजडविलोकनेन प्रयत्नरक्षितगलद्बाष्पाम्भसा लोचनद्वयेनैवावेदितमदर्शनं द्विपस्य। तथाप्यलीकाशया खलीकृतः पृच्छामि किंचिद्दृष्टः क्वचिदरण्योद्देशे गच्छतस्तस्योच्छन्नमूर्तेर्मृगाधमस्य गतिमार्गः।' त एवमनुयुक्ताः समरकेतुना निःश्वस्य दीर्घमाघ्रातमनसो मन्युना प्रणम्य शनकैः सगद्गदं जगदुः—'युवराज, न केवलं गमनमार्गः।' सोऽपि दुष्टात्मा पापकर्मभिर्दृष्टोऽस्माभिः। केवलं यत्प्रत्यावर्तनाशया तस्य पृष्ठे प्रधाविताः, यं चान्वेषयद्भिरनुभूतो दिनत्रयमसावसह्यः क्षुत्पिपासाकृतः परिक्लेशः, यं चानीय युवराजेन योजयितार इति पुरा चिन्तितमस्माभिः, स नास्ति सकलमेदिनीचक्रचन्द्रमाः कुमारः' इत्यभिधाय बाष्पजललवानधोमुखाः ससृजुः। युवराजस्तु तदकाण्डकुलिशपाशपातप्रलयमाकर्ण्य तेषां वचनमक्रमोपचितेन पूरितः परमशोकेन—'भद्राः, किमद्यापि कथयिष्यथ। श्रुतं श्रोतव्यम्। उपसंहरत वार्ताम्। अतः परमशक्तः

मसि' इत्युदीर्यावच्छाद्य च त्वरितमुत्तरीयवाससा सोत्तमाङ्गमङ्गम्, 'हा सर्वगुणनिधे, हा बुधजनैकवल्लभ, हा प्रजाबन्धो, हा समस्तकलाकुशल कोसलेन्द्रकुलचन्द्र, हरिवाहन, कदा द्रष्टव्योऽसि' इति विलपन्नेव मीलितेक्षणः क्षणेनैव निकटोपविष्टस्य खड्गग्राहिणो जगाम पर्यस्तविग्रहस्तिर्यगुत्सङ्गम्। अत्रान्तरे निरन्तरोदितरुदितरवसंभेदमेदुरो दारयन्निव दयालुहृदयानि रोधोरन्ध्रमाचस्कन्द दारुणो राजवृन्दस्याक्रन्दः। तेन च प्रकाममार्तेन बान्धवजनेनेव सत्वरेणोपसृत्य श्रवणमूलमवबोधितः सधीरमुत्थाय शिथिलितविलापश्चचाल सिंहलाधिपसुतशिबिरम्। अनुचरावलम्बितबाहुयुगलश्च विगलद्भिरविरलैरश्रुपटलैरनवलोकितपथः कथंचिदाससाद शयनीयसदनम्।

प्रविश्य च क्षितितलावस्थापितकुथास्तरणपर्यस्तदेहो निवारिताशेषपरिजनासत्तिरविरतप्रवृत्तिभिः श्वासपवनैरिवाहतेन प्रसरतानुपदमास्पदीकृतो दाहदहनेन सततबाष्पसलिलसङ्गादामूलमङ्कुरितमिव निःसंख्यतां गतं दुःखभारमुद्वहन्मानसेन क्षणं निषण्णः क्षणमासीनः क्षणं परावर्तमानो मनुजलोकावासविद्वेषेण द्वेषमव्रजन्तीं महीमपतदुपरि ब्रह्माण्डमदलत्सहस्रधा हृदयमक्षीयमाणमेकक्षणेनायुः। पुनःपुनः साधिक्षेपमाक्रोशन(?)'भ्रातः, विघटितः स ते सुतग्रहदृष्टिपातः, गता वृथात्वमवितथा नैमित्तिकादेशाः, क्षीणश्चक्रवर्तिलक्षणानामनुभावः, विसंवदितमुदितं राजलक्ष्म्यादिगतलक्षणस्य मे भाग्यदोषेण येन भुवनत्रयख्यातविक्रमस्तस्मादपि करटिकीटादापदं प्राप्तोऽसि' इत्यादि विलपन्विलीननिद्राविद्राणदेहद्युतिर्विस्मृतनिजज्ञातिपक्षः स कथमपि क्षपामनयत्। आचकाङ्क्ष च तत्कालमेव कालं कर्तुम्।

अथ समन्ततः प्रदीपितकाष्ठमवगताशयेनेव प्रभातानेहसा प्रकाशितमुदञ्चदर्थिश्चक्रवालं चिताचक्रमिव चण्डांशुमण्डलमवलोक्य संकलितशोकः सकलस(श)र्वरीजागरणखिन्नानुद्बाष्पचक्षुषः क्षोणिपालानाजुहाव । निकटोपविष्टांश्च तानवनतमुखान्सदुःखमवलोक्य कंचित्कालमाबद्धाञ्जलिरुवाच—'भो भो भूमिपतयः, किमेवमुद्विग्नमानसास्तिष्ठथ । किं न कुरुथ प्रस्तुतानि कार्याणि । कृतं भवद्भिः कुमारस्य पुरुषकारोचितं यत्कर्तव्यम् । पृष्ठतः प्रतिष्ठमानैरनुसृतो दिनमशेषम् । अन्वेषितः प्रेषितपदातितन्त्रैस्तत्र तत्राटवीगहनेषु । प्रतीक्षितः क्षुत्पिपासापरिक्षीणकायैरेष्यतीत्याशया मार्गदेशोपविष्टैरहोरात्रत्रितयम् । अधुना तु किं कुरुथ । निधनं प्रापितो वः पौरुषावलेपो बलवता देवेन । दूरं गतोऽसौ । तदलमेतच्चिन्तया । कुरुथ सांप्रतकालोचितं कृत्यम् । अद्यैव कमलगुप्तं पुरस्कृत्य वात्यशाकेतमर्पयताधिकारिणाम् । अत्र यत्किंचिदर्जितं कुमारेण द्रव्यजातमाराधयत मुक्त्वा छद्मपादपद्मद्वयं कोशलेन्द्रस्य । मुञ्चथ च सर्वात्मना मय्यपेक्षाम् । अहं हि प्रथमदर्शन एव देवेन भृत्यतां कुमारस्य नीतः । न तद्विरहितेन मया क्षणमपीह स्थातव्यम् । न च प्रवर्तितेन प्रदेशादितः पदमपि प्रतीपं गन्तव्यम् । तदनुजानीत मां जीवितपरित्यागाय यावदद्यापि न शृणोमि कुमारस्य चरमवार्ताम् । यावच्चैष चिरदर्शनोत्कण्ठितो न मे मार्गमवलोकान्तरगतं तमनुगच्छामि' इत्युदीर्य चिन्तितचिताप्रवेशश्चरणोत्क्षेपसमकालमुत्थितेन व्योमविचरव्यापिना शिबिरलोकाक्रन्दकलकलेन सूचितगतिक्रमः शैलनिम्नगापुलिनमुद्दिश्योदचलत् ।

अत्रान्तरे पुरुषेणानुगम्यमानः प्रविश्य दौवारिको हर्षो नाम हर्षगद्गदमवादीत्—'कुमार, कुरु दृष्टिदानेनानुग्रहम् । एष परितोष-

नामा कमलगुप्तसेनापतेरत्यन्तमाप्तो लेखहारकः कुमारहरिवाहनस्य कुशलवार्तामावेदयति । श्रुत्वा चेदमाकस्मिकमतर्किताममृतवृष्टिकल्पं बले झटिति विघटिताशेषशोकांश्चकार पातालपङ्कादिवोन्मग्नम्, प्रलयघनदुर्दिनादिव निःसृतम्, कृतान्तमुखकुहरादिवाकृष्टम्, महाकालकरकपालोदरादिवोच्छलितम्, तक्षकाशीविषवेगवेदनयेवोन्मुक्तम्, अभिव्यक्तोपलक्षिताकाशकालदिग्विभागमवगतात्मीयपरकीयपरिजनमवलोकितासन्नवर्तिसुहृद्बन्धुवर्गमेकहेलोत्तीर्णसर्वाङ्गसंज्वरमुद्वहन्नात्मानमादरप्रहितनयनयुगलो गुरुमिव स्वामिनमिवाराध्यमिव जीवितप्रदमिवेष्टदैवतमिव सुचिरमवलोक्य तं पुरुषमाहूय संभाष्य चासनदानवचनेन 'भद्रमुख, भद्रमसदृशसौहार्दशालिशीलामृतमहोदधिः परमसुहृदः कमलगुप्तस्य' इत्यवोचत् ।

अथ स तेन संभ्रमवता तस्य संभाषणेन कृतकृत्यमात्मानं मन्यमानो भृत्यवत्समुपसृत्य सत्वरकृतप्रणामः 'अद्य भद्रं मच्चक्षुषा महाभागदेहारोग्यदर्शनेन' इत्युदीर्योत्तरीयपटपल्लवप्रान्तसंयतं संयत्नमादाय दक्षिणकरेणाग्रतो लेखमक्षिपत् ।

सिंहलेश्वरतनयोऽपि तं गृहीत्वा निरीक्ष्य च क्षणं तूष्णीमेव दृष्ट्वा किमपि हृष्टचेताः सतर्षमर्पितं श्रवणस्य शृण्वतः सकलस्यापि राजकस्य स्पष्टवर्णोच्चारया वाचा स्वयमवाचयत् ।

पाठावसाने च तं पुरोलिखितरुचिरलेखस्वस्तिकमावासगृहमिव मुहुर्निरीक्ष्य सस्पृहं पांशुकणिकाधूसरितवर्णं गुरुचरणयुगमिवावस्थाप्य शिरसि प्रकृष्टपुण्योदयासादितं प्रधानरत्नालंकारमिव वेष्टयित्वा यत्नेन निकटवर्तिनः शय्यापालकस्य हस्ते चकार । व्याजहार च प्रहर्षपुलकितकपोलोदरः—'परितोष, कदा कमलगुप्तेनैष लेखः प्राप्तः,

कुतो वा प्राप्तः' इति। सोऽब्रवीत्—'एष ज्ञापयामि। श्रूयताम्। इतो वासरादतीतेऽह्न्यपराह्णसमये नास्ति कुमार इति विरलविरलं प्रवृत्तायामनिष्टवार्तायामाकुलाकुलेषु विशेषोपलम्भार्थमितस्ततो धावत्सु सैनिकेषु शिरोजठरनिष्ठुराभिघातध्वनिघनेषु प्रबलीभवत्सु प्रतिवेल-मवभाजनस्याक्रन्देषु सविधचारिचारणकरुणगीतोत्थापितप्रेक्षकवृन्दपर-मनिर्वेदेषु मर्तुमुच्चलितेषु वेलावित्तकेषु हा कष्टशब्दोच्चारमुखरासु वर्णयन्तीषु विरसतां संसारस्थितेः स्थानस्थानपिण्डितासु पण्डितमण्ड-लीष्वप्रहततूर्यध्वनारब्धमङ्गलगीतिषु वनाय प्रस्थितेन स्थविरसामन्त-लोकेन शोकाश्रुमिश्रैः पल्वलवारिभिः प्रारभ्यमाणेषु युवराज्याभि-षेकेषु संभ्रान्तवण्ठहठनिरुध्यमाननिजदेहदारणोद्यतदासदारके चिता-भिमुखचलितचेटीपरित्यक्तबालापत्यकटुविलापदलितदयालुहृदयमर्मणि प्राणनिरपेक्षाङ्गरक्षविक्षिप्यमाणद्रविणावधावद्द्रमककुलकृतोद्दामसंमर्दे दुःखमय इवोद्वेगमय इव विषादमय इव वर्तमाने निवृत्तगीत-नृत्यादिसकलप्राक्तनव्यवहारे स्कन्धावारे सेनाधिपतिरात्मसदनाजिरो-पविष्टः पार्श्ववर्तिना प्रयत्नविनिवर्तितात्मशोकेन प्रवयसा प्रधानलोकेन राजसूनोः साधयितुमनपायमस्तित्वमनेकधोपन्यस्ताभिरुपपत्तिभिर्मन्दी-क्रियमाणजीवितपरित्यागबुद्धिरधोमुखो धरणितलनिहितनिश्चलोद्बाष्प-दृष्टिरकस्मादिमं लेखमग्रतो दृष्टवान्। कस्यायमिति चिन्तयंश्च क्षण-मात्रमवलोक्य पृष्ठेऽस्य लब्धप्रतिष्ठानि कुमारनामाक्षराणि जातसंक्षोभो गृहीत्वैनमुद्वेष्ट्यावधार्य च प्रत्यभिज्ञातराजपुत्रलिपिनिवृत्तापरप्रयुक्तिसं-शयः शिरसि कृत्वैनं शृण्वतः सकलस्यापि नरपतिवृन्दस्य प्रहर्षगद्ग-दवचाः स्वयमवाचयत्—स्वस्ति। अटव्या महाराजपुत्रहरिवाहनः कुशली लौहित्यकूलाध्यासिते विजयिनि निजस्कन्धावारे युवराज-

समरकेतुं कमलगुप्तपुरःसरांश्च राजपुत्रान्सप्रसादमादिशति—अत्रैव कतिचिद्दिनानि स्थातव्यम् । ताताम्बयोश्च यथा मदपहारवार्ता श्रुतिपथं नायाति तथा प्रयतितव्यम् । इति संवर्तितलेखश्च सर्वतः समवलोक्य 'भद्राः, केनायमानीतः कुमारसत्को लेखः' इति प्रत्येकं लेखहारकानपृच्छत् । यदा च तेषु 'मयायमानीतः' इति कश्चिन्नाचचक्षे तदा समुद्भूतविस्मयः समासन्नसविधैः सहालोच्य कर्तव्यमकृतकालक्षेपः क्षितिपालसूनोः प्रतिलेखं स्वयमेवालिखत् । महार्हमणिपीठप्रतिष्ठापितं च तं निवेश्य प्रत्यग्रगोमयोपलेपनशुचौ सुरभिकुसुमप्रकरभाजि प्राङ्गणवितर्दिकोत्सङ्गे, गत्वा च सविधमूर्ध्वस्थित एव वध्वा शिरसि करसंपुटमतिस्फुटोच्चारया गिरा सादरमवादीत्—'भो भो मनुष्यलोकविहारिणो दिव्याः, विधायानुग्रहं शृणुत सपरिग्रहस्य मे विज्ञापना । येनकेनचिद्भरतकुलपक्षपातिना देवेन वा दैत्येन वा विद्याधरेण वान्येन वा दिव्यलोकनिवासिना देवतावरप्रभावलब्धस्य महानरेन्द्रसूनोः सकलविश्वोपकारिणः कुमारहरिवाहनस्यान्तिकादतर्कितमेवानीय लेखमिममनुकम्पितोऽयमेतावान्नृपतिलोकः, स भूयोऽपि भूत्वा सकरुणः साक्षात्प्रकटितस्वाकारो वा नभस्यन्तर्हितो वा श्रद्धेयवाक्यजनवचनसंचारिताक्षरो वा निवेदयत्वेतत्—कस्मिन्प्रदेशे लेखनिर्दिष्टा साटवी, कं विभागमस्याः कुमारोऽधितिष्ठति, केन वर्त्मना तत्र यात्रा संपद्यते, इमं च मणिपीठावस्थापितं प्रापयतु तत्पादमूलमस्मत्प्रतिलेखम्' इति वारद्वितयमुच्चारितवान् । तृतीयवेलायां च किंचिदुच्चरितवचसि तस्मिन्नकस्मादनतिदूरवर्तिनो निबिडपल्लवोत्पीडपिहितनिःशेषशाखासंचयस्य चूतशाखिनः शिखरदेशादवततार शुकशकुन्तिरेकोऽतिरेकरमणीयाकृतिः । आगत्य चातिवेगेन संमुख-

मवाङ्मुखस्य पश्यत एव तस्य तं लेखमादाय दूरव्यात्तविकटकोटिना च चञ्चुपुटेन झटित्येवान्तरिक्षमुदपतत् । सैन्यपतिरपि जातविस्मयः सहान्तिकस्थेन पार्थिवसमाजेन 'कोऽयं शुकः, किमर्थमभ्यर्थनानन्तरमेव तरुशिखरादितः क्षिताववतीर्णः, किं निमित्तं च लेखोऽयममुना गृहीतः, किं वाविलम्बितगतिरुदीचीमेव दिशमाश्रित्य प्रस्थितः, किं परमार्थतः शुक एवायमुत शुकव्याजेन कश्चिद्दिव्यः' इति कृतानेकविकल्पः स्थित्वाल्पमेव कालं तत्कालमनतिदूरस्थमेहीत्यन्तिके समाहूय सादरं मामवदत्—'भद्र परितोष, गच्छ त्वमविलम्बितगतिरिदानीमेव तमरण्योद्देशं यत्र युवराजसमरकेतुरद्य गृहीतवानावासम् । अगणितायासश्च गत्वा सत्वरं समर्पयान्तर्विसर्पदुद्दामशोकस्य तस्य शोकदाहवेदनाविच्छेदकारिणममुं कुमारकुशलप्रवृत्तिलेखम् । आचक्ष्व चाखिलक्षोणिपाललोकसमक्षमाश्वासनाय यथादृष्टमेतमप्यादितः प्रभृति सर्वजनविस्मयकरं शुकव्यतिकरम् । अतिभक्तिमानसावनुपलब्धकुमारकुशलवृत्तान्तो न जाने किं व्यवस्यति' इत्यभिधाय स्वहस्तेन लेखं मे समुपनीतवान् । अहं तु तत्क्षणमेव दृष्ट्वा समुत्थितः समुपस्थितानुगुणशकुनिद्विगुणितोद्यमश्चन्द्रमण्डलप्रभाप्रकटितेन वटस्थाणुतृणगुल्मवल्मीकदावोल्मुकेन पूर्वावलोकितेनेव वर्त्मना विलङ्घ्याटवीमविघ्नेन भक्तिनिघ्नजनसुखाराध्यमवन्ध्यप्रसादस्य ते पादपङ्कजमूलमनुप्राप्तः' इत्युक्त्वा विरराम । समरकेतुरप्युपजातपरमानन्दः प्रीतिनिस्यन्देन चक्षुषा सुचिरमवलोक्य दत्त्वा च सक्षौमयुगलं सकलमङ्गस्पृष्टमात्मीयभूषणगणम् 'परितोष, गच्छ स्वावासम् । आयासितोऽसि संततेनामुना वासतेयीप्रयाणेनेति व्याहृत्य तं लेखहारकं विससर्ज । निर्वर्तितस्नानदेवतापूजश्च पुनरुक्ततर्जितेन गत्वा प्रतीहारलोकेन सत्व-

रमुपहतैरनुभूतदुःसहप्रभुवियोगदुःखक्षामतनुभिरवनीपतिभिरन्यैश्च प्रणयिभिः प्रधानपुरुषैः सार्धमाहारविधिमन्वतिष्ठत् । उपस्पर्शनादिकृत्यावसाने सर्वदा स्वकर्मावहितकार्मनिर्मिततार्णमन्दिरोदरास्तीर्णमध्यास्य शयनीयमपनीय च क्षणमात्रमुपलब्धनिद्रो द्राघीयसा रजनीजागरणेन जनितमङ्गजाड्यमीषद्वलितनयनः शयननिकटे समुपविष्टं शय्यापालकं तं पूर्वमुपसन्निधीकृतं कुमारसत्कं लेखमयाचत । दौकितं चोत्थाय सत्वरेण तेन गृहीत्वा गृहीतार्थमपि पूर्वमपूर्वमिव सत्वरमुद्वेष्ट्य विस्तार्य च पुरस्तात्प्रीतिविस्तारितेम चक्षुषा पिबन्निवोपगूहन्निवान्तः प्रवेशयन्निव पुनः पुनरवाचयत् । अकरोच्च चेतसि कुमारस्य लेखोऽयं स्वहस्तलिखित इति । लिपिप्रत्यभिज्ञानात्तावदवगतं यथा चायमद्याप्यनभिगतगाढपाण्डिम्नि नूतने ताडीपत्रशकले निहितसान्द्रधातुद्रवाक्षरो यथा चावचूर्णितः क्षोदीयसा स्वर्णरेणुकणनिकरेण दृश्यते, तथा क्वापि दिव्यजनसंचारोचिते वनोद्देशे कृतस्थितिना कुमारेण लिखितः । किमर्थं पुनरिह स्थानमात्मीयमविशेषेण निर्दिष्टम् । नूनमिष्टोऽहं समरकेतोः सनामतः प्रकटितेषु निकटवर्तिषु ग्रामनगरादिषु चिह्नेषु विगतसंशयो पूरदेशस्थमपि मामनुसरिष्यति । आपतंश्च प्रकृतिदुर्विलङ्घ्ये दीर्घकालमध्वनि क्लेशमतिमहान्तमासादयिष्यतीति शङ्कितवान्—अहो मूढतास्य । जानाति स्नेहनिर्भरां मदन्तःकरणवृत्तिम् । न चेदमवगच्छति यदुत मत्परोक्षे कथंचिदप्येष न गृहे स्थास्यति । अविदिताश्रयश्च मद्दर्शनाशया समुद्रपर्यन्तां पर्यटन्नटवीमतिमात्रमायासपात्रं भविष्यति । किं वा ममैतेन चिन्तितेन । न तावन्मया समादिष्टेनापि शिबिरसंरक्षणाय वनभूमाविह स्थातव्यम् । नापि कुमारेण सह निर्गत्य सांप्रतमेकाकिना प्रविश्य साकेतमात्म-

प्रवासवार्ताश्रवणविक्लवस्य विलपतो देवस्य मेघवाहनस्य मुखं दर्शयितव्यम्, आश्वासनं वा कर्तव्यम्। तत्किं वृथैवात्र स्थितेन। व्रजामि वैताढ्यमनुसरन्ननुमेव गजगमनमार्गम्। अन्वेषयामि तदुपान्तवर्तिषु ग्रामेषु नगरेष्वाश्रमपदेषु काननेष्वपरेषु च संभाव्यमानतद्वस्थितिषु रम्यस्थानेषु कुमारमनुज्झिताभियोगस्य सततमन्विष्यतो भविष्यत्यवश्यं मम क्वापि तद्वृत्तान्तोपलब्धिर्घलेऽध्वनिर्गमा निसर्गविमलाभ्यः कलाभ्यः प्रभेव मृगलाञ्छनं छन्नमपि तमाविष्करिष्यति विजृम्भमाणा दिग्मुखेषु सद्गुणख्यातिः। कथं पुनः प्रयातव्यम्। न तावदनवधृतयातव्यदेशे दुरारोहशिखरिणि दुःखोत्तारसलिलासंख्यनिम्नगाढ्ये वैताढ्यवर्त्मनि सपृतनापरिकरस्य युज्यते गमनम्। नापि निरुपधिस्वामिभक्तौ कुमारमनुगन्तुमुत्सुके सर्वत एव राजलोके कतिपयाप्तपुरुषकृतसाहाय्यकेन शक्यते तदकर्तुं तदसंस्थाप्य परिजनमनापृच्छ्य बन्धुवर्गमेकाकिना निशीथे प्रस्थातव्यमित्यर्थादुपागतमिति विहितसंकल्पस्तल्पममुञ्चत्। अकरोच्च तत्रैव दिवसे यात्राबुद्धिम्। अथावबुद्धतदभिप्रायः प्रयाणशुद्धिमिव प्रष्टुमुपसर्प परिणतज्योतिषमतुषारदीधितिमस्तमयरागः प्रस्थानवन्दनमालाकिशलयानीव गृहीतुमवनीतलादग्रशिखरेषु शाखिनामारुरुहुरातपच्छेदाः। शुभेतरालापसंवरणपरेव विस्तारितान्ति बद्धकोलाहलानि शकुनिकुलानि तरुकुलायकोटरेष्वूषुः। उपवनराजिर्लग्नशुद्ध्यर्थमनेकशो दृष्टसलिलकृष्टिसामर्थ्यमपराम्भोधे जलकटाहे तपनमण्डलघटीताम्रभाजनं निचिक्षेप क्षपारम्भः। संध्यारागरक्तांशुकधारिण्यो विलासिन्य इव गगनमरकतस्थासंचारितसतारकतमिस्रदधिकवोन्मिश्रदूर्वापल्लवाः परस्परं संजग्मिरे ककुभः। उत्तरासङ्गशोभि स्वस्त्ययनमिव कर्तुमुज्जगाम। ज्योतिः सत-

र्षिमण्डलं क्रमेण चातिक्रान्ते प्रदोषसमये समुल्लासितपौरस्त्यनभसि मन्दमन्दमुद्भिद्यमाने सौधांशवे महसि शशिकरप्रभासंवलिततिमिरासु तत्कालविकसितसकैरवेन्दीवरवनाभिररण्यसरसीभिः स्पर्धमानासु दिक्षु विघटितान्तरालतिमिरसंधानेषु विच्छिन्नतया प्रतीयमानेषु तरुषु तरुतलास्तीर्णपर्णशयने शयाने निर्भरं राजपुत्रान्वेषणक्लान्तवपुषि पृतनापदातिलोके निभृतसकलसत्वे सर्वतः शान्तसैनिकप्रचारसुखसंचारविशिखे विजन इव संलक्ष्यमाणे सैन्यसंनिवेशे समरकेतुर्विसर्जितनिशावसरसेवायातराजलोकः प्रस्थाप्य तत्कालसंनिहितमाप्तपरिचारकजनं निश्चित्य निजयैव प्रज्ञया प्रस्थानसमुचितं शुचिमुहूर्तमुत्थाय निवसितप्रत्यग्रसितदुकूलयुगलो विकचमालतीदामरचितशेखरः कर्पूरसंभेदसंभृतामोदेन संपाद्य सद्यःस्नापितार्चितकुलदेवतार्चाचर्चावशिष्टेन चन्दनद्रवेणाष्टमीचन्द्रलेखालावण्यालापिनि स्वललाटफलके तिलकमुल्लासितकोमलनीलकिरणनिवहमवहिताभिः प्रस्थानमङ्गलविधावायुधागारदेवताभिरभिनवदलैर्दूर्वाकन्दलैरिवावकीर्णमादाय विपदापगासंतरणसेतुमार्गं खड्गमतिगुरुखड्गभारखेदितेनेव स्पन्दमानेन तत्क्षणं दक्षिणेन भुजदण्डेन व्यञ्जितारब्धकार्यसिद्धिराविजयार्धपर्वतादध्यवसितकुमारान्वेषणो वैश्रवणवल्लभां दिशं प्रत्युदचलत्। चरणपल्लवोत्क्षेपसमकालमुत्थितेन च स्थगयता दिगन्तराणि तारमधुरेणैकतो यामशङ्खरशितेनान्यतो जयतुरङ्गहेषितेन जनितहर्षः सुधापङ्कपाण्डुरं पूर्णकुम्भमिव जम्भारिककुभा पुरस्तादुपदर्शितं वन्दमानस्तुहिनकरबिम्बमविलम्बितगतिर्वासभवनान्निरगच्छत्। अनुसृतदिवसदृष्टवर्त्मा च तत्क्षणप्रसृतेन पृष्ठतो दक्षिणपवनेन पुरतो वा वामनासिकापुटश्वसनेन सौम्यगतिनापि सत्वरं प्रवर्तमानः प्रतिपन्नदक्षिणवाममार्गागमैः परं शिवं शंसद्भिरभिप्रेतसा-

धकैः शैवैरिव प्रधानशकुनैः पदे पदे दत्तनिर्वृतिः शर्वरीमनयत् । उन्नते च स्पष्टिताष्टदिङ्मुखदशशतमयूखे पृष्ठतोऽन्वेष्टुमापतन्तमात्मनोऽभिलषितस्य प्रत्यूहभूतमभ्यूहमानो भूपतिसमूहमपहाय तमनेकपथिकलोकप्रहतमुत्पांशुलं मार्गमपरेण पतितशीर्णतरुपर्णनिकरावकीर्णेन कान्तारवर्त्मना प्रयत्ननिह्नुतपदपद्धतिः प्रतस्थे । लङ्घितानेकसमविषमभूधरधराविभागलब्धश्रमश्च तिरश्चीनलुलितरविबिम्बशेखरेण विश्रामार्थमभ्यर्थित इव नतेन किंचिन्मध्याह्नसमयेनैकत्र पत्रलतागुल्मगुपिले विपुलसान्द्रच्छायाशाखिनि सानुमत्प्रस्थे स्थितिमकरोत् ।

अतिवाहितक्लमश्च कंचित्कालमुत्थाय गत्वा गिरिनदीस्रोतसि स्नात्वा कृत्वा च देवतार्चनादिकं क्रियाकलापमल्पप्रयत्नासादितानि स्वादुसुरभीणि पादपफलान्यभ्यवजहार । पीतनीहारशिशिरनिर्झरोदकश्च नीत्वा पराह्णसमयमुपस्थिते सायाह्ने कृतसंध्यावश्यकः प्रविश्य पर्वतगुहां सुष्वाप । क्षपावसाने च क्षपितनिद्रः श्वापदारावैरुत्थाय शयनाद्गृहीतशस्त्रस्तमेव मार्गमतिदुर्गमनुसरन् रसातलगम्भीरभीरुगह्वरया समरभूम्येव साहसरहितजनदुःप्रवेशया सि(शि)थिलमूलदुर्बलजटाजालकैः परस्परावकाशमिव दातुमप्रसारितशाखामण्डलैस्तारकानिकुरुम्बमिव कुसुमस्तबकतां नेतुमम्बराग्रलग्नैः सरलसर्जार्जुनकरञ्जशाकशल्लकीप्रायैः पादपैरपास्तदिनकरोदयास्तमयदर्शनया दुरवतारतुङ्गतटाभिरुत्कोटिपाषाणपटलस्खलनबहुमुखप्रवृत्तमुखरस्रोतोजलाभिरनतिनिबिडनिर्गुण्डीलतागुल्मगुपिलीकृतोपलवालुकाबहुलविच्छिन्नान्तरालपुलिनाभिरुच्छलत्क्षलमलवननिलीननाहलनिवहकाहलकोलाहलाभिः शैलनिम्नगाभिर्निम्नीकृतान्तराल्या वनान्तरालसर्पिभिस्तारतुमुलैर्मरुद्भिरिव दिङ्मुखेषु मुखरितादिकुहरकुञ्जैः काहलाकूजितैः सूचितापतत्सुचिरसंगलितजनसंघातया

युवजनादतिरेकनिर्विवेकस्थविराभिर्निषादलोकादधिकनिर्दयद्विजातिभिर्दिवानिशमविश्रान्तनिनादैरापानकमर्दलैर्दूरादेव सूच्यमानसंनिवेशाभिः प्रतिचुल्लिपच्यमानशूलीकृतानेकश्वापदपिशिताभिः प्रतिनिकुञ्जमाकर्ण्यमानबन्दीजनाक्रन्दाभिः प्रतिवसति विभज्यमानतस्कराहृतस्वापतेयाभिः प्रतिडिम्भमुपदिश्यमानमृगमोहकारिकरुणगीताभिः प्रतिजलाशयमासीनबडिशहस्तकैवर्ताभिः प्रतिदिवसमन्विष्यमाणचण्डिकोपहारपुरुषाभिर्धृताधिज्यधनुषा निभृतमुच्चारितचण्डिकास्तोत्रदण्डकेन सर्वतः प्रहितभयतरलदृष्टिना त्रयीभक्तेनेव गाढाश्रितहिरण्यगर्भकेशवेशेन देशिकजनेन लघुतरोल्लङ्घ्यमानपरिसराभिः 'एत एत शीघ्रम्। इत इतो निरुन्ध्वमध्वानम्। अस्य हस्ते प्रभूतमृक्थम्। अयमुत्पथेन पलायितुकामः' इत्यनवरतमुच्चारयता पञ्जरशुकसमूहेन मुखरिताङ्गणवृक्षशाखाभिरधर्मनगरीभिरिव कृतयुगभयाद्गृहीतवनवासाभिः शबरपल्लीभिरध्यासितविषमपर्वतोद्देशया, क्वचिद्दावदहनाश्लिष्टवंशीवनश्रूयमाणश्रवणनिष्ठुरष्वात्कारया, क्वचिदकुण्ठकण्ठीरवारावचकितसारङ्गलोचनांशुशारया, क्वचित्तरुतलासीनशबरीविरच्यमानकरिकुम्भमुक्ताभिः शबलगुञ्जाफलप्रालम्बया, क्वचिदधःसुप्तदृप्ताजगरनिःश्वासनर्तितमहातरुस्तम्बया, क्वचिदुदश्रुकणिकखगगणिकशोच्यमानाकालदलितनिस्यन्दसारमेयवृन्दया, क्वचित्प्रचारनिर्गतवनेचरान्विष्यमाणफलमूलकन्दया, क्वचिच्छेकशाखामृगाच्छिन्नपाथेयपथिकनिष्फललोष्टवृष्टिहासिताटविकवर्गया, क्वचिन्मर्मज्ञलुब्धलुब्धकानुबध्यमानमार्गणप्रहृतमर्मद्वीपिमार्गया सापराधवध्वेव प्रियालपनसफलीभूतपादपातनिष्ठया वीरपुरुषतूण्येव गौरखराच्छभल्लशरभरोचितया जठरजीर्णानेकदिव्यौषधिसमूहयापि व्याधीनां गणैराक्रान्तया महाटव्या ... । विक... ...पराह्णसमये ...

विहारविनिर्गतेन मार्गवर्तिना प्राग्ज्योतिषेश्वरानुजेन मित्रधरनाम्ना समदृश्यत । परिवारविरहाच्च 'कोऽयम्' इति मुहूर्तमात्रं कृतविमर्शेन प्रत्यभिज्ञाय विहितप्रणामेन 'युवराज, किंनिमित्तमेवमेकाकिना समागत्य नित्यमसदाचारवनचरप्रचारकलुषा विगतकल्मषा कृतेयमस्मद्भूमिः । अपि कुशली कुमारः' इति ससाध्वसेन पृष्टः समरकेतुरुपविश्य विविक्तदेशे हरिवाहनस्य हस्तिनापहरणमात्मनश्च वैताढ्यभूधरगमनमादितः प्रभृति सप्रपञ्चमाचचक्षे । श्रुताकस्मिकस्वामिदुर्जातजातव्यथेन च स्थित्वा मुहूर्तमवनताननेन तेनोत्थाप्य नीतो निजनिवासमादरेण गृहानीतहरिवाहनपादार्घ्यपूजानिर्विशेषां सपर्यामन्वभूत् । प्रभाते च तं कृतगतिप्रतिबन्धमुपपत्तिभिरनेकधा संबोध्य विनिवर्त्य च सुदूरं कृतानुव्रजनमनपेक्षिततदुपनीतसहायः पुनरचलत् । अनेन च क्रमेण प्रतिदिवसमखण्डितप्रयाणस्य करिकलभकस्येव दूरपातिभिः पदैरध्वनि सर्पतो यावकरसस्येव वारं वारं लङ्घितमहेलाधरस्य मारुतेरिव क्रमेणोत्तीर्णदुरवतारसिन्धोः, कदाचिदभ्याहितादग्नेरिव शुष्कपादपारपारण्याश्रयिणः, कदाचिदुत्तमप्रकृतेरिव महाजनपदानुसारिणः, कदाचिन्मुनेरिव फलमूलकन्दकल्पिताभ्यवहारस्य, कदाचिदमरस्येव संकल्पमात्रोपनतदिव्याहारस्य, कदाचिदद्रेरिव शीतलैः प्रस्रवणवारिभिः स्वयंधौतपादस्य, कदाचिदिष्टदैवतस्येव दर्शनानुरक्तजनेन स्नपनवसनाङ्गरागकुसुमादिभिरापाद्यमानचित्रप्रसादस्य, कदाचित्मेतत्साधकस्येव नक्तंचराध्यासितासु भूमिषु कुशसंस्तरणाननुचितानलंकुर्वाणस्य, कदाचिद्विपक्षभीतभिक्षुपतेरिव प्राकृतजनदुरारोहान्पल्लवस्थानधिशयानस्य, सुहृद्वार्तोपलब्धये च मार्गवर्तिषु ग्रामेषु वृद्धार्यलोकाननुपसर्पतो बृहत्सु नगरेषु त्रिचतुराण्यहानि यात्राप्रसङ्गमाचरतः सम-

रपल्लीषु रणपराजयप्रतिपत्तदास्यान्दस्युसेनापतीनितस्ततः प्रेषयतस्ताप-साश्रमपदेषु पृष्टनिमित्तकुलपतिप्रेरितस्य पुरः पुरो गच्छतः शीघ्रतर-लङ्घितानेकसुन्दरार्यजनपदस्य श्रुतिपरिचितेषु च प्रान्तदेशेषु विकृत-भाषावेषसविशेषजनितकौतुकान्, क्वचिदेकचरणान्, क्वचिदश्वाननान्, क्वचित्करभकन्धरोदग्रग्रीवान्, क्वचिल्लोमलुप्तसकलावयवदर्शनान्मानुषस-मूहानीक्षमाणस्य बालचन्दनवृक्षखण्डस्येवाध्वगमितमार्गसहस्य शिशिर-सुरभेर्दक्षिणायनान्तदिनकृत इव प्रवर्धमानेन तेजसा प्रतिदिवसमुत्तरां ककुभमाक्रामतः क्रमेण मासाः षडतिजग्मुः ।

अथास्ति पश्चिमेनाष्टापदशैलमनतिदूरवर्ती वैताढ्यपर्वतस्य शिख-रोच्छ्रायखर्वितान्तरिक्षो नितान्तविततावकाशः शिरसि स्निग्धहरिताभिः सर्वत एवान्धकारितो वनलेखाभिरनुमेखलं सिद्धायतनमण्डलेषु सिद्ध-मिथुनैः सततारब्धमङ्गलगीतिरगाधसलिलेन शितविशालवालुकापुलि-नशालिना समाधिसुखसाधनाय संनिधानाश्रमनिवासिभिस्तापसैः स्थान-स्थानरचितचारुमणिशिलावेदिकेन त्रिदशसिन्धुस्रोतसा परिगतः प्रान्ते-ष्वविश्रान्तनिर्झरनिनादो नित्यमुदितनृत्यन्मयूररुतमुखरितासंख्यकन्दरो लतामन्दिरच्छन्नसुन्दरानेकसानुरेकशृङ्गो नाम शिखरी ।

तस्य सर्वदा कुसुमफलसमृद्धशाखिनि शिखरपृष्ठे प्रस्थितः समरके-तुरेकदा निदाघसमये महाभोगपरिसरमविरतास्फालिततरङ्गततिना तरलितवालपुष्करेण प्रबलसीकरासारसिक्तककुभा वनद्विरदयूथेनेव सद्यो जलादुत्तीर्णेन मरुता दूरत एव सूच्यमानं निरन्तराभिस्तरुणकुन्तलीकु-न्तलकलापकान्तिभिर्ध्वान्तमालाभिरिव रसातलोल्लासिताभिरुल्लसन्मयूर-केकारवमुखराभिः शिखरदेशविश्रान्तमन्तःसारसाभिरिभकलभकराग्र-कृष्टिविघटमानविटपाभिश्चटुलवानरवाह्यमानलतादोलाभिरम्भःपानानन्द-

निद्रायमाणश्वापदसंकुलाभिरम्बुगर्भनिर्भरनिभृताभ्रमण्डलीविभ्रमाभिर्वनराजिभिरन्वकारितया भुजङ्गराजमूर्त्येव मथनायासमण्डलीभूतयाभ्रंलिहशिखरोपशल्यया पाल्या परितः परिक्षिप्तमर्णःपूर्णमालवालमिव त्रिलोकीलतायाः कान्तिसंततितिरोहितान्तरालं नाभिमण्डलमिव भूतधात्र्या विलासरौप्यदर्पणमिव दिशां प्रतिबिम्बमिवाम्बरतलस्य लीलादुकूलवितानमिव फणीन्द्रस्याट्टहासमिव पातालत्र्यम्बकस्य निःसरणवर्त्मेव बलिकीर्तिकलापस्य रसातलप्रवेशद्वारमिव मन्दाकिनीप्रवाहस्य शेषाहिफणाचक्रवालद्युतिजालमिवोच्छलितं विधुंतुदग्रासभयादिन्दुचन्द्रिकापटलमिव गलितं प्रलयदिवसकरोष्मणाकाशमिव स्रुतमदभ्राभ्रदहनसंपर्केण शरदभ्रवृन्दमिव द्रुतं मैनाकवियोगदुःखरुदितहिमाचलाश्रुजलमिव संगलितमभ्रमण्डलस्थलमिव जलीभूतमवदाततया स्वच्छतया च सैन्धवीकपोलच्छविभिरिव केरलीदशनकिरणैरिव लाटीकटाक्षच्छटाभिरिव निर्मितं सर्वतश्च सोपानक्रमरचिताभिराभोगविजितैः पयोधिभिरुपायनप्रहिताभिरिव तरङ्गमालाभिरिन्द्रनीलशिलाश्रेणिभिरवनद्धस्य रोधसो विसारिणा प्रभावितानेन हरितायमानं सशैवलमिव सपद्मिनीदलमिव तीरवारिबिभ्राणमदभ्रविस्तारतिरस्कृतेन सेवाविधित्सयेव समग्रग्रहचक्रपरिवृतेन वियता प्रतिमाव्यपदेशेन सर्वात्मना कृतानुप्रवेशं प्रत्यग्रपलशकलपाटलैरुपान्ततरुपल्लवप्रतिबिम्बैर्विप्रलभ्यमानमुग्धमीनमम्भःप्रतिफलनच्छलेन च क्वचित्पवनतरलिततरङ्गसङ्गभङ्गुरैः पूगतरुभिस्तरन्महाभुजङ्गमिव क्वचिदत्यायतैस्तालविटपिभिः कुतूहलान्मृश्यमाणगाम्भीर्यमानमिव समदजलकरिनिनादभीषणाभिरनेकराजहंससंचरणरमणीयाभिश्चतुर्दिशमशेषजलधिविजिगीषया प्रस्थिताभिर्वरूथिनीभिरिव वीचिभिर्वाचालितभुवनमभ्यर्णवर्तिवैताढ्यपर्वतावतीर्णानामने-

कश: प्रारब्धजलकेलिविभ्रमाणामुभयश्रेणिविद्याधरेन्द्रसुन्दरीणामनणुमेखलादामरमणीयैः फणिराजनद्धमध्यमम्भोधिमथनजातमदमुपहसितुमिव मन्दरमुन्नतिशालिभिर्नितम्बमण्डलैरतिस्फालमास्फालितमुत्ताननलिनीपलाशपर्यङ्कोपविष्टहंसैरमन्दमधुबिन्दुचन्द्रकितवारिभिरपारपरिमलामन्त्रिताभिः सरभसमापतन्तीभिरलिमालाभिर्मुखरितैः समन्तादुभिन्नहेमारविन्दवनैर्विराजितं प्रत्यूषायमाणं पद्मरागरक्तोत्पलखण्डैः संध्यायमानमुन्मुद्रविद्रुमलतापवनैः प्रदोषायमाणमिन्द्रनीलेन्दीवरगहनैश्चन्द्रोदयायमानमिन्दुकान्तकुमुदाकरैरामुक्ताट्टहासमिव पाण्डुफेनपिण्डैरारब्धस्फोटनमिव प्रतिवेलास्फालितशिलातलोर्मिदण्डैः कृतकटाक्षक्षेपमिव विवर्तनोत्तानतिमिगणैरुपक्रान्तताण्डवमिव पवनाहतोद्दण्डवानीरवनैरितस्ततो नभस्तलादवतरतामानतपक्षपुटकण्ठनालानां जलचरपतत्रिमण्डलानां हेलानिपातजन्मना जर्जररवेण मुखरितोद्देशमाराधनोद्यतविद्याधरावर्जितहृदयतया वैताढ्यमधिवसन्तीनां विद्यादेवतानामनवरतमापतद्भिर्वाहनैर्विहितानेकवृत्तान्तम् । तथा हि—क्वचिद्धरणमहिषीफणीन्द्रपीतारविन्दवातम्, क्वचिच्चक्रायुधागरुडकृतक्रीडाजलप्रपातम्, क्वचिन्महामानसीसिंहचपेटास्फालितघनघटम्, क्वचिदच्युतातुरगखुरनाद्यवाचाटितशिलातटम्, क्वचिन्मानसीहंसजग्धमुग्धमृणालम्, क्वचिद्वज्राङ्कुशीकुञ्जरकुम्भसिन्दूररञ्जितोर्मिजालम्, सौमित्रिचरितमिव विस्तारितोर्मिलास्यशोभम्, विलासिनीगमनमिव कलहंसकलापकृतक्षोभम्, कुलाचलत्रयमिव केसरिमहापद्मतैगिञ्छिभूषितगगनमिव मकरमिथुनाध्यासितम्, दिनकरमिवानेकधन्नरथचक्राक्रन्दमुखरिताम्बरम्, रणाङ्गणमिवोत्कटशरारिबलाकाण्डकवरम्, मद्गुरुतरुचितमपि नमद्गुरुतरुचितम्, कैरवभासितमपि नवकैरवभासितम्, विपेकसदनमप्यपगतमकरम्, ...

निधानमपि स्थैर्योपेतम्, गाम्भीर्येण सत्त्वबहुलतया प्रसादवत्त्वेन विशालतागुणेन सेव्यतया च न केवलं विबुधानाम्, बुधानामपि मानसमधःकुर्वाणमतिरमणीयमानन्दकारि दृष्टेरदृष्टपाराभिधानं सरो दृष्टवान् ।

बन्येभैर्भृशमपि गाह्यमानकूले कालुष्यं कलयति यत्र जातु नाम्भः ।
जात्यैवापहृतमलैः फलैरसक्तं संसक्तं तटकतकद्रुमावलीनाम् ॥

तच्च त्रिभुवनैकसारभूतं सरः सरभसप्रसारिभिर्दृष्टिपातैर्निरन्तरस्फुटितकैरवाकरमिव कुर्वन्नपूर्वविस्मयाकुलीकृतमानसः सिंहलेन्द्रसूनुर्मनसि कृतवान्—अहो, दृष्टव्यतामुपेतः संसारः, सारतां गतो जीवलोकः, लोकोत्तरं फलमवाप्तमुत्साहतरुणा, प्रकर्षो लब्धः परिपाकस्य शुभकर्मणा, पर्यन्तप्रकर्षभूमिरधिष्ठिता कृतार्थभावस्य जन्मना, कोटिरध्यासिता पुण्यभागित्वस्य, लोचनसृष्ट्या दृष्टः समस्तरमणीयानां सीमा विलोकितः कौतुकविधायिनामवधिर्वीक्षितः, विस्मयनीयानामन्तःसाक्षात्कृतमद्भुतानामास्पदम्, आसादितं महिम्नामायतनम्, अधिगतमगाधानामधिष्ठानम् । अहो, काष्ठाधिरूढधवलिम्नो जलप्राग्भारस्य प्रसादातिशयचित्रम् । यतो यतो दृष्टिरभिपतति ततस्ततश्चन्द्रिकामयमिव हिमानीमयमिव सुधामयमिव धरातलमालोकयति । किमेष तिमिरगुहां तरूष्मणा विलीनेन वैताढ्यशिखरिणा विस्तारितो रजतोपलजलप्रवाहः । किं भुजङ्गमालाविषदूषणभयादिहानीय मलयाद्रिणा विनिहितो रसद्रवौघश्चन्दनानाम् । आहोस्विदमृतमथनोद्यतदेवासुरत्रासादत्र निक्षिप्तः क्षीरसिन्धुनासारः सुधाकोशः । कष्टं च कृतमिदं यदुपस्थिते मथनोपप्लवे पारिजातमृगाङ्ककमलक्ष्मीप्रभृतीनि रत्नानि अन्यत्र न स्थापितानि । यदि पुनः प्रथममेवास्थापयिष्यंस्तदा नैकस्य मन्दरशतानामपि न गोचरे-

ऽभविष्यदिदं च हेमारविन्दसहस्रसुन्दरमपहाय हिरण्यगर्भैकपङ्कजाङ्कि-तोदरं दामोदरवपुः किमर्थमाश्रितं श्रिया। केन वा कारणेन समग्र-वरगुणोपेते सत्यस्मिन्पलितपाण्डुकरालशङ्खमण्डलो जलधिर्जगत्त्रयीति-लकभूतया जह्नुकन्यया वृतः पतिः। व्यक्तमिदमिदानींतनम्। अन्यथा प्रथमोत्पन्नेऽस्मिन्कथं नाम मानससरः सरोराजशब्दमासादयेत्। कथं वा महत्त्वप्रसिद्धिमुदधिः। मन्ये चास्य महिमानमालोक्य संजातम-त्सरा वडवानलच्छलेनान्तःसंतापमुद्वहन्तो भुवः प्रान्तेषु प्रतिवसन्ति जलधयः' इत्यादि चिन्तयन्नेव समुपजातमज्जनाभिलाषः कूलासन्नवर्तिनि विस्तीर्णे तरुणपल्लवान्तरिततरणित्विषि समुन्मिषत्ताम्रस्तबके मकरन्द-पानपरवशालिनीशालिनि विशालमुक्ताशिलापट्टसनाथमध्ये माधवीलता-सद्मनि निधाय मण्डलाग्रमग्रविशपल्लवग्रासविशदकण्ठानां जलदेवता-नूपुरनिनादजर्जरै राजहंसानां श्रोत्रहारिभिः कोलाहलैरभ्यर्थित इवा-कारित इव कृतस्वागत इव जलाभिमुखमुच्चचाल। सरभसोल्लासिततत-रङ्गभुजेन च सरसा चरणयोरुत्सृज्यमानार्घजल इव जङ्घयोर्विश्राम्यमाण इव वक्षसि परिष्वज्यमान इव तोयदर्शनोपजातौत्सुक्ययेव समकालम-वतीर्णया पुरः पुरो गच्छन्त्या निजशरीरच्छायया निवेद्यमानमार्ग इवाभ्यन्तरं विवेश। तत्र च तिरोभूतदर्शनैः प्रस्तुतपरिहासविलासै-रिव जलदेवतासमूहैरद्भुताकारदर्शनोल्लसितावदातच्छविभिरच्छचन्दन-रसच्छटाभिरिव दृष्टिभिराहन्यमानः स्नानमकरोत्। अपगताशेषाध्वश्र-मश्च स्नानलग्नकमलपरिमलाकृष्टाभिः स्पर्शलालसेन सरसा संयमनार्थ-मिन्द्रनीलशृङ्खलाभिरिव प्रसारिताभिरलिमालाभिराकुलीक्रियमाणः करे-णुराज इव विलोलयन्कमलिनीखण्डानि, षडङ्घ्रिरिवाजिघ्रत सहस्रदल-कमलामोदम्, इन्दुरिव मोचयन्कुमुदमुकुलोदरसंदानितान्यलिकदम्ब-

कानि, प्रदोष इव विघटयन्रथाङ्गमिथुनानि, राजहंस इवोल्लसल्लहरीपरम्पराप्रेर्यमाणमूर्तिरुत्ततार । शीतोद्गतपुलकजालकानुकारेण सर्वाङ्गसङ्गिना कनकराजीवरेणुकणनिकरेणान्तःप्रविष्टदिनकरातपकणिकाकलापेनेव निःपतता विराजमानो नीलकुटिलमन्तर्जलपाननिर्वापितस्य संतापवह्नेरूर्ध्वमुल्लसितं धूमशिखाकलापमिव केशभारं वामकरकमलेन विरलीकुर्वाणो विलुलितकचान्तःपातिनीभिरनवरतममलोदबिन्दुसंततिभिः प्रत्युरसमपलप्यमानमुक्ताकलापः कूल एव मुहूर्तमात्रं स्थित्वा तस्य माधवीमन्दिरस्योदरालंकारभूते नभःपातमूर्छानिस्यन्दमन्दाकिनीस्रोतस्त्विषि मुक्ताशिलातले तत्क्षणोद्धृतैरमलमौक्तिकावदातजललवावलीलाञ्छितैस्तरणितुरगखुरपुटाग्रखण्डितैराकाशशकलैरिव सतारकैरतिश्रमस्वेदकणिकाङ्कितकुन्तलीस्तनमण्डलाभोगविडम्बिभिस्तल्पीकृतैः पुटकिनीपलाशैर्निरन्तरमाच्छादिते द्वितीय इव सरसि शिरोभागनिहितपिण्डीकृतोत्तरीयांशुकः शनकैर्न्यषीदत् ।

अथ पल्लवान्तरालपातिभिरुद्वेल्लितारविन्दिनीदलकलापैरुल्लसिताम्बुरुहपरागराशिभिरुत्सङ्गिततरङ्गशिखरशीकरासारैः सरलीकृतसारसकेङ्कारविरुतिभिः सौरभाहृतभ्रमरीनिकरझङ्कारमनोहरैः संतापहारिभिः सरःसमीरैः सरभसपरिरभ्यमाणसर्वाङ्गः, प्रभूतकालपरिहृतदर्शनया प्रस्तुतपरिहासयेव कुतोऽप्यागतनिद्रया मुद्रितनयनयुगलः, स्वप्ने रसातलात्तत्कालमेवोद्गतमनेकपुष्पस्तबकसंबाधविटपच्छन्नमच्छिन्नसंतानमधुकरसहस्रोपसेवितमुत्फुल्लवल्लीनिकरपरिकरितया किंचिदासन्नवर्तिन्या परिम्लानसकलावयवयापि प्रतिकालोन्मीलदधिकाधिकसौकुमार्या मङ्गलक्ष्मीमुद्वहन्त्याभिनवकल्पलतया समीहिताश्लेषमीषत्प्रौढिमायातं पारिजातद्रुममद्राक्षीत् ।

दर्शनानुपदमेव च प्रबुद्धः प्रवृद्धविभवेन सख्या सह समागमप्राप्तिमचिरभाविनीं निरचैषीत्।

विशेषावगत्यै च स्वप्नस्य कृतयत्नः सहसैवोच्चरन्तमतितारम् 'उत्क्षिप्तगुरुकार्यभारस्य भवतः किमियं प्रमादाशक्तिः' इति तर्जयन्तमिव, 'धीरप्रकृते, सरोदर्शनमात्रेणापि विस्मितोऽसि' इत्युपहसन्तमिव, 'तूर्णमेहि। दर्शयामि रम्यप्रदेशपरम्पराम्' इत्याह्वयन्तमिव, तत्क्षणत्यक्तपल्वलावगाहकेलिभिरुत्कटभटितकर्णैः कर्णपल्लवैरुल्लसितरोमाञ्चभीषणाकृतिभिरुन्नमितघोणैराघर्घरध्वनिगर्भगलगह्वरैर्वराहयूथपतिभिः ससंभ्रममाकर्ण्यमानं समन्ततो विजृम्भितभीमप्रतिशब्दतया प्रत्युद्गम्यमानमिवारण्यचरतुरङ्गह्रेषासहस्रैरतिविस्तारितया कम्पयन्तमिव प्लावयन्तमिव तर्जयन्तमिव कान्तारमतिमहतोऽश्ववृन्दस्य श्रवणपरुषह्रेषाध्वनिमश्रौषीत्।

'हन्त, कस्मादयमदृश्यमानमर्त्यसंचारे निरन्तरगिरिग्रावदुर्गमध्वनि मृगाधिपप्रमुखप्रेङ्खत्सत्त्वभीषणे महारण्येऽस्मिन्नकाण्ड एव दिङ्मण्डलाट्टहासानुकारी समुल्लसितो ह्रेषारवः। किं तावदत्राभ्यर्णवर्ति किमपि नगरमास्ते, किं वा कस्यचिद्दिग्विजयागतस्य नृपतेरावासितं सैन्यम्, उत म्लेच्छराजपुत्रः कोऽपि मृगयाप्रसङ्गेनायातः, आहोस्विदम्बरात्स्वयमेवावतीर्णः स्नातुं सप्तसप्तिरथगन्धर्वसुरविद्याधराणामन्यतमः कलमोऽपि कमनीयोद्देशदर्शनकुतूहली विहरति' इति मुहूर्तमिव ध्यात्वा समुपजातजिज्ञासुस्तस्माल्लतागृहाद्विनिःसृत्य सत्वरमध्यासिततटविटङ्कः समन्ततो विलोकयामास। विप्रकृष्टतया तस्य प्रदेशस्य, प्रांशुतया सरोरोधसः, सान्द्रतया च द्रुमावलीनां यदा प्रयत्नप्रहितचक्षुरपि न किंचिदद्राक्षीत्, तदाचिन्तयत्—'किमिदानीं सरःपर्यन्तेषु विःशोकतो विचरामि अथवा किमनेन प्रस्तुतकार्यान्तरापकारिणा निरर्थकाध्यव-

प्रायेण सततमबलप्रकृतिना हि पुरुषेण भवितव्यम् । संप्रति च चिरं-तनसंतापमुपशान्तशोषमुत्तीर्णश्रममुल्लसितसविशेषोत्साहमध्वक्षमं वर्तते वपुः । तरुणदूर्वाप्रतानसुकुमारसमतलाश्च मार्गभूमयः । प्रावृषेण्यजल-दश्यामलानि च पुरस्ताद्विभाव्यन्ते पादपवनानि । प्रसन्नदिङ्मुखो मन्दपवनश्चानन्दशंसी चाद्यतनो वासरः । सरःपरपारदर्शनौत्सुक्यपर-वशं च मानसम् । न चाद्यापि तिलकयति मध्यभागमम्बरश्रियो वास-रमणिः । अनारूढप्रौढयश्च नातिगाढमुद्वेजयन्ति घर्मोर्मयः । तद्गच्छामि तावत्कियन्तमप्यध्वानम् । पश्चात्कठोरतामुपेयुषि वासरे कस्मिंश्चित्प्र-च्छायपादपे सरसि वा शैलप्रश्रवणे वा गिरिनदीस्रोतसि वा तापसा-श्रमपदे वा विश्रम्य विश्रब्धनिवर्तितदेवतार्चनविधिर्विदग्धकविप्र-बन्धैरिव परिपाकमधुरैर्विविधरसशालिभिस्तरुफलैराप्यायितवपुर्दिवसमव-लोक्य स्तोकमग्रतः प्रस्थास्ये स्थास्यामि वा' इति कृतगमननिश्चयः प्रविश्य भूयो लतावेश्मनि निबिडीकृतपरिधानो दृढावनद्धस्नानविरल-केशकलापः प्रावृतोत्तरीयांशुकः कठोरपङ्केरुहानुकारिणा करेण किर-णावलीजटालधारं मण्डलाग्रमादाय विकटपदपातकम्पितभूगोलं गत्या विडम्बयन्निव स्थूलोच्चयेन प्रस्थितं गजकलभम्, अनवरतकर्णताला-स्फालितकपोलभित्तिभिः सरभसमाहन्यमानप्रस्थानमङ्गलतूर्य इव वनक-रिभिः, अनिलचलितशाखाग्रगलितसितकलिकैः शिरसि विक्षिप्यमा-णाक्षतकण इव वनस्पतिभिः, अङ्गसङ्गवेल्लितलताखण्डोड्डीनैराबद्धम-ण्डलं ध्वनद्भिरारभ्यमाणब्रह्मघोष इव मधुकरैः, मानुषदर्शननिसर्ग-कातरैस्त्वरितपदमग्रतः पलायमानैरुपदिश्यमानमार्ग इव मल्लिकाक्षैः, तत्क्षणनिपीतार्णोभिरुत्तीर्णैः सरोवराद्भिरलतृणस्तम्बकवलनार्थमनुवेलम-वनमितमूर्धभिः पदे पदे सप्रदक्षिणं प्रणम्यमान इव प्राङ्मुखप्रस्थितैः

धेनहरिणैः, प्रतिक्षणं च स्फुरता दक्षिणेन चक्षुषा भुजशिखरेण च द्विगुणीक्रियमाणगमनोत्साहः कणदशङ्कजलरङ्कुसंकुलेन केतकीकुसुमरेणुपटलपांशुलेन जलपतत्पक्वतरुफलफूत्कृतिकाणचारुणा चक्रवाकचञ्चुगलितार्धजग्धलामज्जकजटालेन वञ्जुलनिकुञ्जपुञ्जमानमञ्जुकुक्कुटक्वणितेन दूरपातदलिततालोच्छलद्रसच्छटापिच्छलेन कल्लोलास्फालनस्फुटितशुक्तिमुक्तमौक्तिकप्रकरतारकितदृषदा निषादधनुःकोटिकृष्णकन्दसंपुटितोद्देशेन दृश्यमानार्धचर्वितकसेरुग्रन्थिकथितकोलयूथप्रस्थानेन कस्तूरीमृगनाभिपरिमलशिलातलानुमितगन्धमृगविश्रान्तिना लवलीलतामन्दिरोदरनिषण्णरतिखिन्नकिंनरमिथुनेन विचित्रपत्ररथपदमुद्राङ्कितसिकतिलभूतलेन चलितपवनान्दोलितवनराजिविवरक्षरद्विरलरविरोचिषा प्राचा सरस्तीरेण पूर्ववत्कौबेरीं दिशमुद्दिश्य प्रतस्थे ।

क्रमाच्च शृण्वन्पुरश्चरणपातरवचकितानां तटशिलातलजुषां जलमानुषद्वन्द्वानामुदकझम्पाझात्कृतानि वीक्षमाणः समीरणोल्लसितकल्लोलशिखरशीकरानुसरणव्याकुलानि चातककुलानि विलोकयञ्शकुलजिघृक्षयान्तरिक्षादवाक्चञ्चुकृतजलप्रपातानि वञ्जुलजातानि बहुमन्यमानः परस्परवितीर्णतामरसकेसरकवलानि क्रौञ्चयुगलानि श्लाघयन् विलसताण्डवमण्डितलतामण्डपतलानि प्रचलाकिमण्डलानि संचरद्विद्याधरीचरणालक्तकरक्तमुक्ताशिलातलमासन्नाश्रमनिवासनीभिस्तापसकुमारिकाभिरुपचितालवालवलयितमूलैस्तरुभिराहितानुत्तरशोभमुत्तरं तीरमधिरूढः पुरस्तादेदिष्ठमधिष्ठानमिव साक्षाद्वसन्तस्य विस्मयावहमतिबहलतया श्यामलतया च शरन्निशाकरमयाद्बहुलपक्षक्षपान्धकारमिव पिण्डीभूतमम्बुगर्भभारेण तरुणाभ्रमण्डलमिव नभस्तलाद्भ्रष्टमेलालवङ्गनागपुंनागपिप्पलपुटकटोलकलितकक्कोलकमलामोदमुद्गरफलितमातुलिङ्गनारङ्गनालि-

केरीजम्बीरसुभगमाभोगभुग्नपनसमापीनफलापीडपीडितदाडिमीखण्डमुद्भ्रष्ण्डराजकदलीमन्दिरप्रभाकन्दलितान्धकारमाकारितमधुकरीनिसरविसारि पाटलामोदमपनिद्रनीपशाखिशिखरकेकायमानमदमुखरशिखिकुक्कुमसंख्यरिङ्खत्खञ्जरीटपक्षपुटविक्षिप्तसप्तछदस्तबकमुद्रीकासरोध्रकुसुमपांसुधूसरितसारिकानिकरप्रतारिततरुणकपोतममलकलधौतशलाकावस्पिञ्जरप्रियङ्गुमञ्जरीजालकान्तर्निलीनचकोरमारब्धकेलिकलहकोकिलकुलाकुलितकलिकाञ्चितचूतमालमुन्मीलितमुकुलबकुलानोकहनिकुञ्जकूजत्कपिञ्जलं क्वचिदातपस्पृहयालुकरिपोतसेव्यमानरक्ताशोकपल्लवव्यूहं क्वचिदालीढपिप्पलीफलकलकण्ठकुहरकुहकुहायमानदात्यूहं क्वचित्कृष्णागुरुच्छायानिषण्णरोमन्थायमानचमरमिथुनं क्वचिदाकर्ण्यमानग्रन्थिपर्णकग्रासिकस्तूरिकाकुरङ्गदशनबुर्बुरस्वनं बहुलशो गन्धर्वबालिकावकृष्टस्फुटिततरुवल्कलोद्गीर्णघनसारमनेकशो गुह्यकाभिसारिकासेवितनमेरुवीथिकान्धकारमसकृत्सिद्धसुन्दरीनिबद्धबालमन्दारद्रुमालवालं सततमवातरत्, लालसभुजङ्गभामिनीभग्नसंतानकानेकप्रवालमन्तरान्तरा च विकचकाञ्चनारविन्दवनराजिनीभिर्मदनज्वरवेदनाविद्रुतविद्याधरीपरिमुमुक्तविविक्तोदरैः सान्द्रहरिचन्दनलतामन्दिरैः श्यामलीकृतपरिसराभिरुपर्युपरि घटितस्फटिकशिलाश्रेणीतरङ्गिततीराभिर्नीरसर्पणक्रमस्थितस्त्यानफेनराजिभिरिव पयस्यमानपयःपूरपूरिताभिः सरसीभिरुद्भासितमम्भोधिमथनमिव सुरभिपारिजातोद्गमसुभगमुत्सर्पितगरं च त्र्यम्बकोत्तमाङ्गमिव पतत्रिमार्गाङ्कितमध्यमानीलनागलतावनद्धबालपूगं च कामिनीकपोलतलमिव पत्रलतालीकृतछायमुद्यन्मधूकधवलं चापानगोष्ठीबन्धमिव मधुकरकामोदितमामत्तनानामधुपमण्डलीमुखरितं च कश्मीरमण्डलमिव विकसत्कुङ्कुमकच्छकमनीयमेककीरग्रामानुगतं च वातरोगोपहतमिव

बहुगुल्मसंकुलोदरं श्यामलताक्रान्तं च सर इवोत्पलाशमल्लिकाक्षमुरुतर-लहरिसेवितं च पादपैरपि पवनकम्प्रशिखरैर्विस्मयचलितमौलिभिरिव निर्वर्ण्यमानं लताभिरपि विकसितस्तबकाभिः कौतुकोत्तानलोचनाभिरिव विलोकमानं विटपैरपि विततपल्लवान्तरितरविकरप्रवेशैरीर्ष्याप्रसारितकर-सहस्रैरिव व्रियमाणमृतुभिरपि दर्शितनिजनिजद्रुमकुसुमसमृद्धिभिरन्यो-न्यबद्धस्पर्धैरिव····ष्यमाणमेकमन्दिरमिव सकलवनदेवतानां नन्दनमिव नन्दनस्य, तिलकमिव त्रिलोक्या रतिगृहमिव रतेरायुधागारमिव कुसु-मायुधस्य, राजधानीनगरमिं(?)मधोः समन्ततोर्ध्वगव्यूतिमात्रपरिणामशो-भतः क्रकचक्षतकरिदन्तक्षोदपाण्डुरेण क्षोदीयसा मौक्तिकचूर्णवालुका-प्रकरेण समसुकुमारभूतलमतिबहलस्निग्धपादपाभिराममारामं (?)मद्राक्षीत्।

तस्य चारामस्य रमणीयतानिधानं नानाविधाभिधानतरुसहस्रसंबाध-मप्यन्धकारनिर्भरतया तमालमयमिवोपलक्ष्यमाणमतिशीलतया च कन्दमिव हिमाद्रेरुदरमिव क्षीरोदस्य, हृदयमिव हेमन्तस्य, शरीरान्तर-मिव शिशिरानिलस्य, तुषारगिरिजन्मभूमिभूतमभ्यन्तरमवततार।

अवतीर्णश्च तस्मिंस्तापमतापमातपमनातपं तपनमतपनं दिवसम-दिवसं ग्रीष्ममग्रीष्मं कालमकालं तुषारपातमतुषारपातं त्रिभुवनमत्रिभु-वनं सर्गक्रममममंस्त। समचिन्तयच्च—

'मन्ये दक्षिणमारुतेन विदितं सेव्यत्वमस्येदृशं
तेनोत्सृज्य च नाभिचन्दनगिरेरुद्दामसैन्यान्यपि।
याम्याशाविरहोल्लसद्वपुषा नाथेन याम्यां समं
संसारे शिशिरात्यये धनपतेराशामुखं सर्पति॥

व्यक्तं. जगत्यदृष्टवशाद्विशालगुणसंपद्भिरप्यसुलभाः स्वल्पगुणैरपि सुलभाः प्रसिद्धयो भवन्ति। येनात्र निरन्तरकदलीकलापान्तरितदि-

-मुखे मदमुखरासंख्याशिखिकुलोद्भासिन्यनन्तलतान्तकोटिसंकटैकैक-वृक्षविटपे सत्यपि कानने तदेकरम्भाक्रान्तमन्तभ्रान्तसप्तमात्रविचित्र-शिखण्डिकतिपयाभिरेव सुमनसां कोटिभिराकीर्णममरोद्यानमावर्ण्यते। किमिदं मत्समीक्षितकारिणा जनस्य जाड्यविलसितम्, उत निरङ्कुश-गिरां कवीनामलीकाभिनिवेशः, आहोस्वित्तस्यैव दूरदेशावस्थानसामर्थ्यं सर्वथा स्वर्णभूमिसंसर्गस्यैवायं प्रभावः। प्रथितगुणस्थानस्थितस्यासतोऽपि हि माहात्म्यमाविर्भवति। पद्मिनीदलोत्सङ्गसङ्गी जलबिन्दुरपि मुक्ता-फलद्युतिमालम्बते। मृगाङ्कबिम्बचुम्बी कलङ्कोऽप्यलंकारकरणिं धत्ते। कुरङ्गलोचनालोचनलब्धपदमञ्जनमपि मण्डनायते। इत्यादि संकल्प-जालसंकुलेन रसाकुलीभूतसकलेन्द्रियवृत्तिना तत्कालमन्यतामिवापन्ने-नान्तरात्मना मदनमयमिव शृङ्गारमयमिव प्रीतिमयमिवानन्दमयमिव विलासमयमिव रम्यतामयमिवोत्सवमयमिव सकलजीवमाकलयन्ननिलो-द्धूतैः समन्ततः प्रचलितैरतिप्रबलतयाकालनीहारवृष्टिमिव दर्शयद्भिः कुसुमधूलिपटलैर्धवलीकृतविग्रहो वसन्त इव विग्रहवानितस्ततः षट्-चरणमालास्पर्धयेव धावन्त्या कुसुमनिर्भरद्रुमावकृष्टया दृष्ट्या कदर्थ्य-मानः प्रतिलतादोलमुत्पाद्यमानान्दोलनस्पृहः प्रतिदीर्घिकमाविर्भवज्जल-क्रीडाभिलाषः प्रतितरुच्छायमुपजायमानविश्रामेच्छः प्रतिपत्रमण्डप-मुल्लसद्दिवसातिवाहनवाञ्छः स्वच्छन्दनिपतितानेकतरुकुसुममकरमेदु-रितमेदिनीपृष्ठचारुणा चरणपातमञ्जुसिञ्जानसुकुमारसिकतेन तस्यो-द्यानस्य मध्यभागेन कतिपयशरक्षेपमात्रमध्वानमतिक्रान्तः कदाचिद-दृष्टपूर्वमितरतरुविलक्षणाकारतयात्यद्भुतकरमुद्रश्मिमरकतच्छदच्छाया-न्धकारितदिगन्तरमनिलतरलतातरङ्गितैरनेकवर्णचारुभिर्दिव्यांशुकक-र्पैः पल्लवितमुल्लसत्करालकिरणस्तबकैः शाखावलम्बिभिराभरणनिकु-

म्बैः स्तबकितममरकामिनीसंवाहनविलासमसृणिताभिरायामिनीभिर्मणि-लतादोलाभिर्दन्तुरितमन्तरान्तरा च तारकिततलभूभागैरालीढफलमधु-वारविद्याधरद्वन्द्वोज्झितै रक्तपङ्कजप्रकरानुकारिभिः पद्मरागचषकचक्र-वालैरलंकृतमितस्ततश्च चित्रीकृताच्छिद्रच्छायैरध्वखिन्नसिद्धाध्वन्यशयनी-कृतैः शाखान्तरालनिपतितातपच्छेदचारुभिश्चामीकरवल्कलैर्विभूषितम-शेषतश्च जटिलीकृतविटपव्रातैः शिखरसंचरद्वनदेवताकेशपाशभ्रंशिभिः प्रालम्बायमानैर्दिव्यकुसुमदामभिरामोदितममन्दसांध्यरागभिन्नाभिनवघ-नसंघातकल्पमनल्पं कल्पतरुखण्डमपश्यत् ।

तस्य च मध्यभागे झगिति दीपिताशेषदिग्भागमाभोगरुद्धवसुंधरो-त्सङ्गमुत्तुङ्गशृङ्गोत्तम्भिताम्बरमतिभास्वरत्वादपरिस्फुटविभाव्यमानावयव-शोभमुद्यानजाड्यपीडया दवाग्निशिखाखण्डमिव पिण्डीभूय स्थितमद-भ्राभ्रभ्रमिखेदेन सौदामिनीसंदोहमिव लब्धनिद्रमुदधिजलात्यशन-दुःखासिकयावडवामुखमिवागत्य विश्रान्तमुद्दण्डवात्यावर्तवशेन भोगा-वतीशातकुम्भाम्भोजवनरजोराशिमिवाकाशमुत्पतितममृतमथनकदर्थित-मन्दरक्रोधेन निर्भर्त्स्य वैरोचनममरशैलमिव पातालमूलान्निर्गतमशेषतश्च विसर्पता कुसुम्भरसरागलोहितेनातिबहलतया किसलयीकृतप्रान्तवन-स्पतिपलाशराशिना प्रवालयष्टीकृतार्ककिरणेन सांध्यसमयीकृतवासरे-णालक्तकतूलपटलीकृतशिखरासन्नघनमण्डलेन भक्तिपरसुरसुन्दरीसुखा-वतरणाय सिन्दूरकुट्टिमानीव रचयता ग्रीष्मवशविजृम्भिता रजोरोधाय कुङ्कुमजलासारमिव क्षिपता गगनकुट्टिमालंकरणाय जपाकुसुमनिकरा-निव प्रकिरता दाहावलोकनसकौतुकोपवनप्रीतये मिथ्यादवाग्निमिव प्रथयता तरुतलान्धकारतिरस्काराय तरुणातपमिव वर्षता प्रभाजालेन दिवापि ज्वलितौषधिकलापमिव पल्लवितरक्ताशोकमिव कुसुमितपलाश-

मिव विकसितबन्धूकमिव तं प्रदेशं कुर्वाणमुत्कृष्टाष्टापदघटितेन तडित्पाटलत्विषा मरकतकपिशीर्षकप्रभाजटालेन सतिमिरसंध्यारागवलयेनेव रविमण्डलममरगिरिवप्राकारेण नवप्राकारेण परिवृतमन्तःप्राकारभित्तिसमन्ततो निर्मितानामतिरम्याकृतीनां स्फाटिकानामपि संक्रान्ततरुप्रतिमाभिः श्यामायमानकान्तितया मरकतमयानामिव प्रासादानामासादितपरभागैः शिखरमण्डलीडम्बधारिभिः प्रतिबिम्बैः परिक्षिप्तशिखरमग्रशिखरसङ्गिनो मृगाङ्कमणिकलस्य ज्योत्स्नापटलपाण्डुना द्युतिमण्डलेन महत्त्वचरितार्थतापादनार्थं धृतेन धवलातपत्रेणेव विस्तारितच्छायमच्छमणिकुट्टिमोच्छलत्प्रभापटलनिर्मग्नमूलतया प्लवमानमिव सुघटितस्फटिकोपलपट्टकल्पितानल्पपीठबन्धा·······च्छतयान्तरिक्षस्थितमिव विभाव्यमानं कृतावलोकनमिवेन्द्रनीलजालकैर्विहिताह्वानमिव पवनचलितोर्ध्वध्वजपताकाञ्चलैः प्रस्तुताभ्युत्थानमिव तुङ्गस्तम्भैरारब्धसंभाषणमिव गवाक्षमुखनिलीनकलापिकेकारवैः क्वचित्सितभुजङ्गशङ्किमयूरोपरुध्यमानबिम्बागतचलच्चीनांशुकपताकं क्वचिद्धूतचञ्चुशुकमुच्यमानदाडिमबीजबुद्धिजग्धसूर्यकान्तवान्तकणिकं क्वचित्प्रदीपलोलशलभलङ्घ्यमानोच्छि····पुष्परागं क्वचिदामिषाशनश्येन हेलाक्रम्यमाणकृत्रिमविहङ्गं क्वचिन्मदनपरायत्तमत्तपारापतपरिक्षिप्यमाणनिजप्रतिबिम्बं क्वचिदम्बुधारो················क्वचिच्चातकचुम्ब्यमानमौक्तिकलतामालम्बं वैशम्पायनशापकथाप्रक्रममिव दुर्वर्णशुकनाशमनोरमं जीवमिव, चित्रकर्मखचितप्रदेशं विदग्धकामिनीकेलिमन्दिरमिव मणितारावभासितोदरमुत्तमपुरुषमिव विशालनेत्रहृत्कपाटं चक्रवर्तिसैन्यमिवानेकरत्नशारीकृतमत्तवारणपरिकरं वराङ्गनावपुरिव शातकुम्भस्तम्भधृतपीवरोरुत्वकं वसन्तचूतद्रुममिव चारुमञ्जरीकमनेकमणिमालालंकृतमपि रत्न-

चतुष्कराजितं ध्वजाधिष्ठितमपि सिंहाक्रान्तमङ्गीकृतविमानाकारमपि सर्वतोभद्रमभ्रमणिनिपतितप्रतिमानिभेन च भग्नगतिना दिनकरेणापि सदैन्यमात्मरथप्रस्थानपथमिव प्रार्थ्यमानं शिखरोल्लेखनदुःस्थितेन व्योम्नापि मन्थरतामिव ग्राह्यमाणं कृत्रिममृगेन्द्रक्रमघातभीतेन जलद-वृन्देनाप्यभयमिव याच्यमानसंभावनीयोच्छ्रयजनितविस्मयेनात्मनापि निपात्येवालोक्यमानं प्रलयार्कमण्डलोत्पत्तिमृत्पिण्डमिव प्रजापतिकुला-लस्य मौलिमुकुटमिव मर्त्यलोकभूपालस्य तपनीयबुध्नमिव तारका-कुसुमनभःकल्पद्रुमस्य विद्रुमकलशमिव शेषाहिदण्डधरामण्डलो····वारणस्य तत्क्षणोदितार्कबिम्बबहुलरागाभिः पद्मरागशिलासंहतिभिरा-हितनिर्माणं निर्मानुषममानुषलोकसुलभदर्शनमायतनं ददर्श ।

तच्च तथाविधमपरत्र कुत्रचिददृष्टपूर्वमपूर्वाकारविशेषमशेषाश्चर्य-पर्यन्तभूमिभूतमकाण्ड एवाविर्भूतमायतनमतनुविस्मयस्फारितपुटाभ्या-मुत्पद्य राजिभ्यां चित्रलिखिताभ्यामिव लोचनाभ्यां किमिदमिति सक्षोभाक्षमीक्षमाणः क्षणमात्रमुपरतापरकरणसंवेदनशक्तिरेकेन्द्रियत्व-मिवापेदे ।

ततश्चन्द्रकान्तसोपानपरम्पराक्रान्ततलभागेन पतत्तरङ्गितगङ्गास्रोत-सेवाम्बरविवरेण वरीयसा मरकतमणिगोपुरेणोत्सर्पिचूडामणिमरीचि-मांसलितमण्डपद्वारवन्दनमालाप्रवालसन्निवेशः प्रविश्याभ्यन्तरं दूरादेव विभाव्यमाननिरुपमरूपशोभामभिमुखीमभितः प्रतिष्ठितयक्षदेवताप्रति-यातनासनाथद्वारभागस्य नागदन्तावसक्तधवलचामरार्चितचारुभित्तेरेक-पार्श्वावलम्बमानसंकोचितदेवाङ्गजवनिकापटस्य जयन्तिकावलम्बिजाम्बू-नदशृङ्खलाकलितवाचालवज्रघण्टस्य दह्यमानप्रबलकालागुरुधूपधूमान्ध-कारमन्दायमानमणिदीपदीधितिसंदर्भस्य गर्भवेश्मनो गर्भभागमलंकुर्वाणां

ग्रहचक्रालंकृतमृगभाजि सिंहोद्भासिते नभस्तल इवालघीयसि सिंहासने निबद्धपद्मासनामुपर्युपरि विरचितोत्तानकरयुगलकिसलयिताङ्कमध्यामासङ्गिनीभिः कृष्णागुरुपङ्कलिखिताभिरिव पत्रभङ्गलताभिः केशवल्लरीभिरध्यासितोभयांशपीठामपाङ्गभागचुम्बितश्रवणां तेन किंचिन्नतपक्ष्मणा निर्विकारस्तारकेण चक्षुषा विद्योतितवदनेन्दुबिम्बामंसावलम्बिधवलचामरसुरेन्द्रसेवितसव्यापसव्यपार्श्वा प्रभापहृतबिम्बलक्ष्मीलाभाय भास्वतेव सेवागतेनातिभास्वराकृतिना प्रभामण्डलेनोद्भासितामिन्दुमण्डलं सितातपत्रत्रयीप्रकाशितत्रिभुवनैश्वर्यामशेषतश्च विविधविमानवाहनाधिरूढैरत्युदाराकृतिभिरप्सरोविराजितपार्श्वैरनिमेषलोचनतया रूपालोकनपरैरिव कैश्चिदास्फालितदिव्यन्तर्यैः कैश्चिदुत्सृष्टकुसुमवृष्टिभिः कैश्चिल्ललाटघटिताञ्जलिपुटैरम्बरतलवर्तिभिः कृत्रिमसुरसमूहैः परिकरितामार्द्रगोशीर्षचन्दनाङ्गरागवाहिनीमामोदितमन्दिरोदराभिर्मकरन्दलोभलग्नैरतिनिष्पन्दतया प्रसुप्तैरिव मूर्छितैरिव ग्रथितैरिव मधुकरैः सारीकृताभिः पारिजातकुसुमस्रग्भिरभ्यर्चितामगाधभवजलधिसेतुबन्धस्य बन्धनिर्मुक्तात्मनो मुक्तिसुखैककारणस्य निष्कारणबन्धोः परमकारुणिकस्य शरणार्थिजन्तुसार्थसाध्वसमुषो निर्निमेषेण केवलज्ञानचक्षुषा साक्षात्कृतसकलभावस्य भुवनत्रयगुरोर्युगादिपार्थिवस्य प्रथमजिनपतेर्ऋषभस्य निर्भूषणामप्यनन्तगुणभूषणामपहस्तितगभस्तिमालितेजसा विग्रहवतेव केवलालोकेन सर्वाङ्गेभ्यो विगलता प्रभापूरेण परितः परीतां महाप्रमाणां चिन्तामणिमयीं प्रतिमामपश्यत् ।

अनन्तरं च निरन्तरोदञ्चदुच्चरोमाङ्कुरकदम्बकेन कदम्बकेसरोपहारमिव किरता विग्रहेणोदग्रपक्ष्माग्रलग्नोज्ज्वलाश्रुजलविप्रुषा महार्घमुक्ताफलार्घमिवोत्क्षिपता चक्षुर्द्वयेनोपलक्ष्यमाणहृदयानन्दथुना मन्थरमुपसृत्य

शिरसि विरचिताञ्जलिमुकुलकरालभालपट्टस्तटघटितैकशुक्तिसंपुट इव जलराशिरतुलया भक्त्या प्रणम्य प्रणतसुरमुकुटकोटिचुम्बितचरणपरागमपरागं तृणवदुज्झितान्तरायमनन्तरायं त्रिभुवनभवनदीपमभवनदीपं संसारजीर्णारण्यैकपारिजातमपारिजातं सकलभव्यलोकनयनाभिनन्दनं नाभिनन्दनमानन्दगद्गदया नवोदभारालसरसत्पयोदनादमेदुरया प्रासादभित्तिप्रतिनादच्छलेन सकलमपि गुणकलापमेकरूपेणाभिधातुमशक्यमाकलय्य कृतानन्तरूपयेवातिगम्भीरया भारत्या स्मरयन्निव समवसरणदुन्दुभिध्वनेरिति कर्तुं स्तुतिं प्रस्तुतवान्—

'शुष्कशिखरिणि कल्पशाखीव, निधिरदनग्राम इव, कमलखण्ड इव मारवे, ध्वनिभवभीमारण्य इह वीक्षितोऽसि। मुनिनाथ, कथमपि दृष्टे भवति नयनसृष्ट्या सममद्य जन्म। जिन, सफलमभून्मम अकृतपुण्यमपि सुकृतिजनं प्रति लघुमात्मानमवैमि न संप्रति' इत्यादिभिरपराभिरप्यनेकप्रकाराभिरुदारपदवृत्तशालिनीभिरन्वर्थगुणग्रथनहृदयंगमाभिः संवेगविस्तारणपटीयसीभिः स्तुतिभिरावर्जितप्राज्यपुण्यभारः परिक्षीणघनकल्मषसंघातलघुमपि संभावितगौरवमवाप्तनिःशेषतीर्थाभिषेकमिव समग्रग्रहकृतानुग्रहमिव कराग्रलग्नसप्तलोकराज्यसंपदमिव पादतलाक्रान्तदुःखपरम्पराकूपारपारमिव पावनं च सुखिनं च सुकृतिनं च कृतकृत्यं चात्मानं मन्यमानः, चिरावस्थानविस्मृतगतिक्रमामिव कपोललावण्यपङ्कलग्नामिव दीर्घकालविरतनिमेषखेदनिःसहायमिव लब्धलोकोत्तरास्पदपरित्यागकातरामिव मुनीन्द्रमुखचन्द्रात्कथंचिदनुरागनिश्चलां दृष्टिमाकृष्य पाटलचञ्चुपुटसूच्यमानशुकपेटकावस्थितिरतिप्रभाढ्योऽयमिन्द्रनीलमत्तालम्बश्चन्द्रिकाशङ्किचकोरलिह्यमानवदनेन्दुकान्तिरतिसुन्दरीयमिन्दुमणिशालभञ्जिकाभिन्नवर्णरत्नोपलपट्टसंघटनख

लाखण्डलचापखण्डनिर्मितेवेयमाभाति स्तम्भपङ्क्तिरवलम्बितोज्ज्वलमुक्तावलीकलापमधोमुखमयूखकन्दलमिन्दुमण्डलमिवेदमानन्दयति सितं दुकूलवितानमिति प्रशस्तानेकवस्तुदर्शनरसाक्षिप्तदृष्टिरसि यष्टिकरालकरतलैरमलमाणिक्यस्तम्भपातिभिः स्वप्रतिमाशतैरनुगम्यमानमूर्तिलक्ष्मीसंपत्तिपरिवार इव सुचिरमितस्ततः प्रासादकुक्षिषु विहृत्य दक्षिणभित्तिप्राग्भागभाजि बद्धगुञ्जप्रभञ्जनावतारचारौ चारणाभिलिखितसुभाषितविभूषितद्वारशिरसि द्यूतरसिकसुरकुमारकोत्कीर्णविविधफलकाङ्कितलले भुजङ्गकामिनीजघनपुलिनस्पर्शलालितोत्सङ्गे(?) विनिर्यदशितागुरुधूमवर्तिभ्रान्तिदायिना मरीचिचक्रवालेन धूम्रीकृताहिमांशुमहिसि(?)महीयसि महानीलवातायने संभ्रमोत्पतितदुर्लक्षपारापतमिथुनपक्षरवचकितचक्षुःकृतस्मितमुपाविशत् ।

मत्तवारणोत्सङ्गसमर्पिताङ्गभारश्च तस्य वातायनस्य पाश्चात्यभित्तिगर्भविन्यस्ते स्त्यानचन्द्रिकापटलत्विषि स्फाटिकशिलापट्टे निकुट्टितामतिस्पष्टवर्णतया तद्दिनोत्कीर्णामिव मरकतद्युतिपूरितनिखिलरेखारब्धमांसलाभिरत्यच्छतयाश्रयस्य निरालम्बाभिरिवाम्बरतलोत्कीर्णाभिरिव समतया प्राञ्जलतया च यन्त्राकृष्टाभिरिव सरस्वतीकण्ठमणिकण्ठिकाकारिणीभिर्वर्णपङ्क्तिभिरुद्भासितां प्रशस्तिमैक्षत् । तत्क्षणमात्रमर्पितेक्षणश्च तस्यामानन्दनिर्भरेण चेतसा चिन्तां विवेश । किं तदस्ति नाम रमणीयमद्भुतं वा जगति यन्न दर्शयतीन्द्रजालिक इव मायाप्रगल्भः शुभकर्मणामासादितोदयः परिणामो येन यानि वार्तास्वप्यनाकर्णनीयानि स्वप्नेऽप्यनुपलभ्यानि मनसाप्यसंकल्पनीयानि वर्षशतैरप्यननुभवनीयानि जन्मान्तरैरप्यनवलोकनीयानि मर्त्यलोके तान्येकस्मिन्नहनि मुहूर्ताभ्यन्तरे सहसैवाद्य मे दृष्टिपथमुपागतानि । प्रथमं तावत्पर्यटदनन्तसत्त्व-

संघातघोरे संसार इवातिदूरपारेऽस्मिन्महाकान्तारे सारभूतं धर्मतत्त्वमिवानेकमङ्गगम्भीरं सरो दृष्टम्। अथ तदवगाहनकर्मनिर्मलीभूतात्मना त्रिविष्टपमिव त्रिदशोपभोगयोग्यमुन्निद्रकल्पद्रुममालामनोहरमुद्यानमिदं क्रमेण चापवर्गस्थानमिव वर्णनापथोत्तीर्णमाहात्म्यस्वरूपमेतज्जिनायतनम्। अतः परं किमन्यदवलोकनीयम्।

संप्रति हि दीयते दर्शनीयकथानां मुद्रा, क्रियते तेजस्विवार्तानां निवृत्तिः, वितीर्यते आश्चर्यदर्शनस्योदकाञ्जलिः, विधीयते लोचनयोरुभयथापि पट्टबन्धः, कथं नु नामास्य प्राणिन इव कार्त्स्न्येन कर्मपरिणतिविशेषा, ज्ञायन्ते ज्ञायमाना अपि केन प्रकारेण, वर्ण्यन्ते वर्ण्यमाना अपि कया युक्त्या परस्य प्रतीतिविषयमारोप्यन्ते। वञ्चिताः खलु दिवोकसोऽपि ये परित्यक्तसुरलोकवसतयः सततमिह न वसन्ति। किमन्यजन्मान्तरे कृतमवदातमेभिः पारापतप्रभृतिभिः पत्ररथैः कर्म येन तिर्यक्त्वेऽप्युपनतोऽयमायतनच्छद्मना विमानवासः। न जाने केन सुकृतकर्मणा निर्मापितमिदम्, केन वा निर्मितम्, कुतो वा रत्नशिलाराशिरेतावानेष लब्धः। न तावदतिसमृद्धोऽपि मर्त्यधर्मा कश्चनापि कारयितुमिदमीश्वरः। न विश्वकर्माणमन्तरेण कर्मनैपुणमित्थंभूतमपरस्य शिल्पिनः संभाव्यते। न च रत्नसानुगिरेरन्यत्र रत्नदृषदामीदृशीनामुत्पत्तिः श्रूयते। सर्वथा देवनिर्मितेनामुना भवितव्यम्। मन्ये च येनैतदायतनमुत्पादितं सरोऽप्यदस्तेनैव खानितमारामोऽप्येषः। तस्यैव कीर्तिर्या चास्य वृत्तान्तस्याभिव्यक्तेः कारणम्। तस्यामपीह प्रशस्तावष्टादशलिपिव्यक्तिव्यतिरिक्तः कोऽप्यपरो लिपिविन्यासः। स एष व्यक्ताक्षरोऽपि न शक्यते ऊहितुम्। केवलमालोकितपूर्व इव चेतसि चमत्कारमातनोति। न चात्र संचरणे

वनचरोऽपि तथाविधः कश्चिदालोक्यते यमापृच्छ्य सम्यग्वृत्तान्तमेन-मवगच्छामि । यद्वा किमनेन पृष्टेन ज्ञातेन वा । प्रयासमात्रफलेन प्रयोजनम् । ज्ञात्वापि कस्य प्रतिपाद्य निर्वृतो भविष्यामि विना कल्पकोटिजीविना कुमारहरिवाहनेन । न जाने वयस्यः क्वेदानीं वर्तते । इत्यादिचिन्ताव्याक्षिप्तचेतस एवास्य सुरासुरवृन्दनिर्दयाकर्षण-भ्रमन्मन्दरतटाच्छोटनसमुच्छलदमृतशीकरासारशिशिरस्तर्पयन्निवार्दय-न्निव हृदयमतिशयपेशलो ध्वनिरतर्कितव्यक्तिरेव श्रवणकन्दरे मन्द-मन्दमविशत् ।

उपजातसंभ्रान्तिना च मानसेन तस्य शब्दस्य दत्तकर्णस्तम्भित इवोत्कीर्ण इव लिखित इव निश्चलसर्वाङ्गः क्षणमात्रं सिंहलराजपुत्रः स्थितवान् । अथ सहसैवोद्भिद्यमानपुलकाञ्चितकपोलभित्तिना विलोल-लोचनोत्पलेन मुखशशिना प्रकाश्यमानाधिकसंभ्रमः समचिन्तयत्— 'हन्त, किमिदमकाण्ड एवापरमाश्चर्यमुपनतं यतः क्वचिदत्र केनापि कलकण्ठकोमलगिरा श्लोक इव पठ्यते । तत्र च हरिवाहनशब्द इवोच्चार्यमाणः श्रूयते । क एष हरिवाहनः । किं वयस्यः, आहोस्वि-द्वयस्यनामधेयाभिधेयः, कोऽप्यपरः, कुतोऽत्र वयस्यस्य संभवः, प्रायः केनापि करुणापराधीनवृत्तिना दिव्येन ममेदमाश्वासनं क्रियते । कृतमलीकविकल्पकल्पनाभिर्मनसा खेदितेन । पश्यामि तावत्कः पुनरेष पठति' इति कृत्वा मतिमुन्मुक्तवातायनस्त्वरिततरमायतनान्निर्गत्य तं पाठशब्दमनुसरन्नामोदिहरिचन्दनोदकच्छटासिक्तेन मौक्तिकचतुष्कवि-रचनाचारुणा कुङ्कुमारुणाभिरङ्गनाचरणपदमुद्राभिर्द्विगुणितकनकपङ्कजो-पहारेण झङ्कारानुमीयमानपरिमलान्धनिलीनमधुलिहा महानीलमणि-कुट्टिमेन व्योम्नेव यामिनीपतिर्याम्यदिङ्मुखाभिमुखः पदशतमात्रमन्तरं

जगतीमध्य एव जगाम। गत्वा च संपिण्डितसुरचापपरमाणुनिवहमनोहराकारमनेकं वर्णतया, कचिद्वधूलोचनयुगमिव कृष्णतारोचितम्, कचिद्विन्ध्याचलमिव धवलताकान्तम्, कचित्सुग्रीवमिव कपिशतान्वितम्, कचिद्दशास्यमिव नीललोहितप्रभावाप्तश्रियम्, विजयार्धशैलमिव मालिकात्रयमनोहरम्, पौर्णमासीदिनावसानमिव सकलशशिखरांशुभूषितम्, विपिनमिव कपोतपालीकलितमुल्लसितकोमलार्करोचिषं शिशिरमुद्दामकुसुमप्रकरशोभनं सुरभिमासन्ननभसं शुचिमशेषमणिशिलाविशेषकृतनिर्माणमुदन्मुखद्वारमङ्गभारभङ्गुरितकमठराजपृष्ठमलघिष्ठमभिनवं मठमैक्षिष्ट।

प्रविष्टमात्र एवात्र पुरतो दत्तदृष्टिरुत्कृष्टवसनधारिणमुदारदिव्याभरणभूषिताङ्गमङ्गरागपरिमलामोदितदिगन्तमवतीर्य मणिशिलासोपानमालया शिखरशालायास्तत्क्षणमेव द्वाराभिमुखपरिवर्तिताननमवतरणकम्पादीषदवस्रस्तकुसुमस्रजः शिरसिजकलापस्य तिर्यङ्नमितेन वामपाणिना शनैः शनैरारब्धसंवरणमानन्दनिर्भरतया हृदयस्य ताम्बूलगर्भतया च गण्डद्वयस्य किंचिदविशदोच्चारितपदं प्रत्यङ्गमर्पितेन चक्षुषा प्रसादलब्धामिवावलोक्य वारंवारमनुपमामात्मनो वेषलक्ष्मीमुपजातविस्मयमिमां द्विपदिकां पठन्तमतिसगर्वं गन्धर्वकमपश्यत्। आकल्पान्तमर्थिकल्पद्रुम चन्द्रमरीचिसमरुचिप्रचुर यशोंशुभरितविश्वंभर भरतान्वयशिरोमणे जनवन्द्यानवद्यविद्याधर विद्याधरमनस्विनीमानसहरिणहरण हरिवाहन, वह धीरोचितां धुरम्। दृष्टमात्र एव च तत्र संजातपरमोच्छ्वासः प्रथमपाथोदाभिवृष्ट इव मरुस्थलाभोगः पार्वणेन्दुचन्द्रिकापरिप्लावित इव ग्रीष्मकुमुदाकरः परां निर्वृतिमवाप।

मन्यमानश्च तत्र क्षणे साक्षादेव संपन्नमात्मनः सुहृदा सह समागममानन्दजलपरिप्लुतेक्षणो विक्षिपन्विरलविरलानि पदानि तदभि-

मुखो बभूव । सोऽपि तं तथोपसर्पन्तमुद्वीक्ष्य सहसोपसंहृतपीठनिभृतः कृतावस्थितिश्च तत्रैव देशे समरकेतुरयमिति दृढोपजातप्रत्ययोऽपि तावत्यां भूमौ तथाविधस्य तस्यासंभावयन्नागमनमुपजातभ्रमः स्तम्भित इवाकृतोचितप्रतिपत्तिर्मुहूर्तमवतिष्ठत् । कृताभिभाषणश्च सितार्द्रदृष्टिना सिंहलेन्द्रतनयेन सत्वरमुपेत्य शिरसि रचिताञ्जलिः प्रणाममकरोत् । प्रसारितोभयभुजापाशकृतदृढाश्लेषं च तं नमस्कृत्य भूयः प्रमृष्टरजसि निजवस्त्राञ्चलेन निकटवर्तिन्येकत्र पट्टशालामत्तवारणकमणिपट्टे न्यवेशयत् । 'प्रस्तुतांघ्रिसंवाहनश्च गन्धर्वक, सर्वदाभिवाञ्छितप्राप्तिना कथंचिदनुकूलदैवसंपादितेन दर्शनेनैव ते विगतः श्रमोऽस्माकम्' इति निवारितो वारंवारमपसृत्य नातिसंनिवेशो तस्यैव मत्तवारणस्यैकपार्श्वे निषसाद । कृतासनपरिगृहं च तं प्रहर्षपुलकितास्यमानन्दजलवर्षिणा विरतपक्ष्मस्पन्देन चक्षुषा निरीक्ष्य सुचिरमीषत्कृतस्मितः समरकेतुरुवाच—'सखे गन्धर्वक, गाढं दृढस्मृतिर्भवान् । दृष्टमात्रा अपि प्रत्यभिज्ञाता वयम् । विस्मरणशीलाः सकाममित्येतावतो दिवसानस्माकं त्वयि बुद्धिरासीत्, येन तदानीमयोध्यायामुपवनाध्यासिः 'कुमारहरिवाहनस्याग्रतः प्रातरेवाहमागमिष्यामि' इत्यभिधाय प्रस्थितेन तत्सुवेलप्रस्थगोचरं खेचरनगरमतिचिरेणापि न कृता प्रतिनिवृत्तिः, न च स्वकुशलदानमात्रेणापि जनिता नश्चित्तनिर्वृतिः । केवलमगाधशोकजलनिधौ निक्षिप्ताः । किं तस्य वृत्तम्, किं व्यसनमापतितं येन नायातः, इति भवन्तमुद्दिश्य तत्तदनभिशङ्कनीयमाशङ्कमानानामनुदिवसमस्माकमतिगताश्चत्वारोऽपि ते वर्षकल्पा वार्षिकमासाः । कथय । किं तदाकारणमनागमनस्य । किं सत्यमेव विस्मृता वयम्, अवश्यकरणीयेन वा केनापि महता कार्यान्तरेणान्तरैवोपस्थितम्, अथाध्व-

श्रमादिदोषोत्थापितेन प्रकृतिसुकुमारायास्तनोरपाटवेन कृतः प्रतिबन्धः । किं चास्मदन्तिकादुच्चलितेन भवता तस्मिन्नेव दिवसे समासादितः सुवेलाद्रिः । आवेदितस्तत्रभवतो विचित्रवीर्यस्य चित्रलेखासंदेशः । उपासिता द्रविडराजमहिषी गन्धर्वदत्ता । प्रापितः स तद्दुहितुरस्मत्प्रेषितो लेखः । कृतावस्थितिः काञ्च्यां कंचित्कालमासादितः कोऽपि तत्रान्यत्र वा राजपुत्र्यास्तिलकमञ्जर्याः पाणिग्रहणसमुचितो राजपुत्रः । कास्ते स ते सहायश्चित्रमायः । तथा च किंनामधेयोऽयममरगिरिणाप्यनपहार्यरामणीयकश्रीरहार्यः । केन खानितमिदं मानसेनाप्यखण्डितख्यातिमदमसंख्यजलचरविहङ्गवाचालितोपकण्ठकच्छमच्छस्वादुविपुलोदकं पद्मसरः । कस्य सुकृतिनः कीर्तिरेष सुरविमानकल्पः कल्पपादपप्रायतरुणा परिगतः सर्वत एव सार्वर्तुकेन दिव्यारामेण पद्मरागशिलामयः प्रासादः । कश्चास्य त्रिदशसंचरणसमुचितपृष्ठदेशस्य काष्ठाधिरूढशोभासंपदः शिखरभूमिकामधितिष्ठति मठस्य, येन सार्धमधुनैव कृत्वा संलापमुत्फुल्ललोचनः किमपि हर्षेणावतीर्णो भवान्' इत्यादिपृष्टः सविस्तरं सिंहलेन्द्रसूनुना गन्धर्वकः स्थित्वा मुहूर्तमवचनः सत्रप इव शनैरवोचत्—'आर्य, किं ब्रवीमि । बुद्धिरपि मे न पश्यति वक्तव्यम्, विवक्षापि न प्रवर्तयति वाचम्, वागपि न संसृज्यते जिह्वाग्रेण । प्रनष्टनिःशेषकष्टरूपः प्राक्तनावस्थः स्वस्थचेतास्तथाविधाकार एवाद्य दृष्टः । किमुत्तरं प्रयच्छामि । वितथभाषी च विधिना कृतः । किं तदानीमनागमनकारणमात्मनः कथयामि । अनुपजातप्रतिज्ञातार्थनिर्वाहेण युक्तियुक्तमप्युच्यमानं कीदृशं किं पुनरसंभाव्यमानतया शिशुजनस्यापि हास्यरसवृद्धिहेतुरीदृशं यच्च विशदप्रतिभासमतिदीर्घकालमनुभूतमात्मनापि शक्यते न श्रद्धातुम् । तद्विचारचतुरबुद्धेः कथ्यमानं

महाभागस्य कथमिव प्रतीतिपथमवतरिष्यति । तथा हि—दिव्यैरप्यशक्यप्रतीकारं व्यसनमापन्नोऽस्मीति प्रत्यक्षविरुद्धम्, त्वत्कार्यसाधनपराधीनतैव विघ्नहेतुरित्यप्रातीतिकम्, जीवन्नेव पञ्चत्वमापन्न इत्युन्मत्तप्रलापः, शरीरमपि तन्नैतदिति प्रत्यभिज्ञानानुपपत्तिः । एवं च सर्वतो निरवकाशवाक्प्रवृत्तिः, किमनागमनकारणं कथयामि । सर्वथा तिष्ठत्वेषा कथा । उत्तिष्ठ वा वद्धवप्रष्टा मे(?)। प्रतिष्ठस्व कतिचित्पदानि । पश्याद्यैव संसिद्धसकलविद्यमचिरानुभूतभुवनत्रयाद्भुतमहाराज्याभिषेकमङ्गलमासादितमहार्हविद्याधरचक्रवर्तिपदमुन्मयूखमाणिक्यखण्डखचितकाञ्चनकिरीटभास्वरशिरोभिः खेचरेश्वरैः प्रणम्यमानपादपङ्कजं सहस्राक्षमिव साक्षादवनिमवतीर्णं भ्रातरमात्मीयम् । अनुभवाभिमानसलिलसेकसंवर्धितस्य दुःसहानेकमार्गदुःखोपनिपातदुर्वातविद्रवैरप्यमन्दितप्रसरस्य निरत्यप्रत्ययप्रदर्शितयशःकुसुमसंपदो निजव्यवसायकल्पपादपस्य स्वादुफलम् । अतिचिरकालमनुभूतकष्टां कुरु कृतार्थां नयनसृष्टिमप्रतर्कितामृतवृष्टिकल्पेन । कोटिमधिरोहतु परामस्यापि भवदास्यकमलावलोकनेन परमाभ्युदयालाभसंभवः प्रमोदः । पश्चादखिललोकोत्पादिताश्चर्यमसद्वृत्तान्तमपरमप्ययोध्यानिर्गमात्प्रभृति यत्पृष्टं तदपि सर्वं क्रमेण ज्ञातमसि । देवोऽपि हरिवाहनश्चण्डगह्वरनाम्नि वैताढ्यशिखरे खेचरैर्विहितमनुभूय राज्याभिषेकमायातो नातिबहुपरिच्छदः सांप्रतमस्यैव दिव्यकाननस्यानेकफलकुसुमसमृद्धपादपोत्तरमुत्तरं भूमागमध्यास्ते ।' इत्यावेदिते समरकेतुरेकहेलयोत्तीर्णनिखिलदुःखभारः प्रशान्तनिःशेषहृदयान्तकतया क्षीरसागरोदर इव क्षिप्तममृतनिर्झरैरिव प्लावितं हरशिरःशशाङ्केनेवाङ्कमारोपितमुद्वहन्नानन्दनिर्भरमात्मानमतिदूरविकसितेक्षणो मत्तवारणकादुदतिष्ठत् ।

निर्गत्य च मठात्प्रत्यक्षुखं प्रचलितः क्रमेण तेषां प्रागुपवर्णितानामादिदेवायतनपर्यन्तवर्तिनां स्फाटिकप्रासादानामन्तःप्रतिष्ठिताः काश्चित्पुष्परागनिर्मिताः प्रसृतबहलोद्द्योतबद्धपरिवेषमण्डलतया समवसृतिसालमध्यवर्तिनीरिव विराजमानाः, काश्चित्पद्मरागमयीर्महानीलसिंहासनोल्लसितकान्तिसंततिसगत्या परितलिनकालमेघपटलान्तरितविग्रहं ग्रहग्रामण्यमिव विगृह्णतीः, काश्चिच्चन्द्रिकान्तनिर्वृताः सर्वपथीनदीप्तिपटलाप्लावितभद्रपीठतया क्षीरोदसलिलक्षाल्यमानमेरुपृष्ठं जन्माभिषेकलीलामिव दर्शयन्तीः, काश्चिन्मरकतप्रभाप्रवाहहरितायमानकान्तिनिर्भरतया सेवालितलावण्यजलानीवाङ्गानि दधतीः, काश्चिदिन्द्रनीलप्रकृतीरुपान्तज्वलन्मणिप्रदीपप्रतिबिम्बकरम्बितावयवतया निश्चलोल्काकलापदन्तुरमुत्पातान्तरिक्षमिवाक्षिपन्तीः, रूपान्तरनिरीक्षणप्रवर्धमानाक्षेपतया मन्दीभूतहरिवाहनदिदृक्षारसक्षरदमन्दानन्दबाष्पवृष्टिर्ललाटघटिताञ्जलिपुटा गौरवाकृष्टेनेव सुदूरमवनमता मुहुर्मुहुरुत्तमाङ्गेन वन्दमानो जिनानामजितादीनामप्रतिमशोभाः प्रतिमाः प्रदक्षिणीकृतमूलायतनस्तत्कालम् 'इत इतो गम्यताम्' इत्यभिधाय पुरःस्थितेन स्कन्धदेशारोपितकृपाणयष्टिना गन्धर्वकेणोपदिश्यमानसरणिरुत्तरया प्रकारप्रतोलिकया निर्जगाम।

गत्वा च किंचिदन्तरमुत्तरदिग्विभागेनोद्यानस्य दूरादेव रदनविघट्टनजन्मनातिमुखरेण खरखलीनखणखणारवेणानुमीयमानमाननस्रस्तपाण्डुरफेनपिण्डस्तबकतारकितभूतलमालोलकर्णचामरशिखाहतिविषमविकूणितेक्षणं पर्याणबद्धपर्यन्तोद्गतदरावच्छुष्कश्यानफेनराजिव्यज्यमानदूरागमनखेदमितस्ततः शब्दानुसारसंभ्रमवलमानस्तब्धकर्णशुक्तियुगलमनवरतचरणाग्रवल्गुनायासितवल्गावलग्नप्रेष्यपुरुषपरुषहुंकारपुनरुक्तोन्नमन्निर्मांसमुखनालमापूरितवनान्तरालतरुतलमतुलमश्ववृन्दमद्राक्षीत्।

दृष्ट्वा च विस्मितमानसः 'सरस्तीराभिमुक्तकलतामन्दिरोदरप्रसुप्तेन निद्राविगमे मया श्रुतो यः श्रुतिपथोन्माथी हेषाध्वनिः स नूनममुना सरोभ्यर्णचारिणा प्रथममिदमुद्यानमवतरता तुरङ्गव्यूहेन कृतः' इति वितर्कयत एवास्य मकरकेतुसैन्यास्फालितचापसहस्रनिर्घोषमांसलो गृहागतहरिवाहनप्रहर्षप्रनृत्ताया रसनाकलापरव इवोद्यानश्रियो दशनार्धगृहीतदर्भगर्भस्थलीस्थितप्रोथपुटान्युत्कोटिविषाणच्छलेन शूलप्रोतानीवातिनिश्चलानि मुखान्युद्वहमानैरामीलितदृष्टिभिः कृष्णसारैः श्रूयमाण इतस्ततस्तारकितभूतलमानन्दाश्रुबिन्दुविसरमिव कुसुमप्रकरमनवरतमुत्सृजद्भिः विरहकविटपैः सूच्यमानपञ्चमस्वरप्रवृत्तिरामन्द्रास्फालितमृदङ्गनादोत्कण्ठितानां च शितिकण्ठवयसामुदञ्चितकण्ठकन्दलीदीर्घेण क्रियमाणषड्जस्वरानुवाद इव कूजितेन रतिरसतरङ्गिणीपूरायमाणस्तरुगहनान्तरितमूर्तेर्गाथकजनस्य प्रबलवेणुवीणाविलापसंवलनतारो गीतझात्कारः कर्णमूलमविशत् ।

तेन च मनुष्यलोकदुःश्रवेण श्रवणेन्द्रियाह्लादिना सुहृदवस्थानलीलापिशुनेन श्रवणविषयमुपसेदुषा दिव्यगीतशब्देनोत्सार्यगाम्भीर्यमुद्गताश्रुबिन्दुक्लिन्नलोचनोदरेण कठोरपुलकपक्ष्मलितकपोलभित्तिना स्मितज्योत्स्नाविशदेन वदनशशिना व्यक्तीकृतं हर्षवैकृतं नियन्तुमितस्ततो दृष्टिपातैः कृतालीकचित्तव्याक्षिप्तिरभ्यर्णेष्टसमागमप्रीतिरसविसंष्ठुलैरखिलाङ्गैः परवानिवानेकसहस्रसंख्यानामेकनीलवर्णमिव विश्वं दर्शयितुमुत्थितानां पृथक् पृथक् वीथीक्रमनिर्मितानामपि परस्परसंपर्किणातिमांसलेन हसितनीलीरसनीलिम्ना प्रभाप्लवेन निर्विभागानामिव विभाव्यमानानां भुवनविजयप्रवृत्तमकरध्वजगजानीककदलिकासंदोहसंदेहदायिनां कदलीगृहाणामन्तरेण स्तोकान्तरमतिक्रम्याङ्घ्रिपच्छायाकला-

पमिव पल्लवितमश्वकान्तिहरितं हरिदश्वरथपताकानिकुरम्बमिव प्रतिबिम्बितमम्बरमन्दाकिनीजम्बालकूटमिव वीचिविघट्टनभ्रष्टमभ्रसमयध्वान्तसंघातमिव नभसः शर्वर्या सह विरतविरहविनोदनाय गतमनिलसङ्गतरलाभिरुष्णसमयमवजित्यावार्जिताभिर्वैजयन्तीविततिभिरिव प्रान्तपातितपनपादच्छेदनवाञ्छया व्यापारिताभिः परश्वधपरम्पराभिरिव पत्रराजिभिरव्यज्यमानविवराभिर्विराजितमविरतारब्धवारिच्छटासेककिंकरपुरुषमध्यपतितेन शतपत्रकोशरजःकषायमुदकशीकरनिकरमादाय पुनरुक्तमापतता पर्यन्तसरसीसमीरणेन कौतुकादिव चतुर्दिशमुपसिच्यमानमुपरचितसिन्दूरकुट्टिमकमनीयाभ्यन्तरमन्तःप्ररूढस्य किंचिदारूढप्रौढेरुद्गाढसौकुमार्यावलीढसुदृढमूलस्य मूलभागकल्पितेनानल्पीयसा कार्तस्वरशिलापीठबन्धेन महार्हसिंहासनेनेव यथार्थीकृतसकलवनस्पत्याधिपत्यस्य प्रवालभङ्गमुग्धस्निग्धपल्लवालंकृतस्य मरकतहरितहारिपत्रनिवहनिवारितदिनेशदीधितिप्रवेशविशदच्छायस्य विसारिसौरभाहृताभिरपहायोपवनपादपानुपसर्पन्तीभिर्मदान्धमधुपधोरणीभिरहमहमिकयेव विलुप्यमानमञ्जरीजालकस्य मुनिजनमनःस्खलितमार्गणप्रसरामर्षितेन कुसुमधनुषासकृत्सायकीकृतकुसुमस्य दक्षिणश्रवसि गृहीतसविशेषभूषणया स्मरप्रणयिन्या शतशोऽवतंसिताग्रं किसलयस्य दिङ्मुखविसर्पणक्षीणपरिमलेन मलयमरुता सततमापीतपरिमलस्य परिमण्डलतयातिमनोहरस्य नातिमहतः पारिजातकतरोर्निरन्तराभिरविरलस्तबकतारखर्वितशिखाभिः शाखाततिभिः समन्ततः स्थगितमुभयतः कृतोर्ध्वापस्थानैः पृथुतरोरुस्तम्भशोभिभिः शरन्नभःसन्निभासितपत्रप्रभाश्यामायमानशरीरकान्तिभिः कदलीद्रुमैरिवापरैरुपरचितपङ्क्तिभिः पुरुषैः पुरोदर्शितदीर्घरथ्यामुखमञ्जिरकुट्टिमोपविष्टनिभृतभूपाललोकमेकदेशारब्धमधुरगान-

गाथकपेटकोपयुष्टमुद्धुष्टजयशब्दवन्दिवृन्दाध्यासितसविधभूभागमागृहीतकनकदण्डप्रतीहारमण्डलाधिष्ठितद्वारदेशमभिरामदर्शनमारामलक्ष्म्याः साक्षादिव चतुःशालमतिविशालमेकमकठोरहारीतहरितप्रभं रम्भागृहमपश्यत् ।

तस्य च मध्यभागे कृतावस्थानममलांशुकच्छादिते किंशुकच्छविनि चरणारविन्दरुचिसंतान इव स्त्यानतां गते पृथुनि कुरुविन्दमणिशिलातले निषण्णमच्छशिशिरेण शैलेन्द्रमिव हिमद्रवेण चन्द्रातपरुचा दिव्यचन्दनेनापादमनुलिप्तमतिविमलघनसूत्रेण संख्यानशास्त्रेणेव नवदशालंकृतेन श्वेतचीनवस्त्रद्वयेन संवीतमखिलदेहाभरणमणिसंक्रान्ताभिरासन्नचामरग्राहिणीप्रतिमाभिर्विद्यादेवताभिरिव सद्यःसाधिताभिः सर्वतोऽधिष्ठितशरीरमानाभिलम्बमभिनवं मौक्तिकप्रालम्बमद्याप्यशुष्कमभिषेकवारिकणकलापमिव हेमाचलशिलाविशालेन वक्षसा धारयन्तं निसर्गनिर्मलालोकाभ्यामभिनवं नयमार्गमुपदेष्टुममरगुरुभार्गवाभ्यामिवोपगताभ्यामिन्दुमणिकुण्डलाभ्यामाश्रितोभयश्रवणमलिकतटसङ्गिना विततभास्वरेण कनकपट्टबन्धेन वलयितमुत्तमं मणिमुकुटमरिकुलविनाशार्थमुद्गतं तपनमण्डलमिव सपरिवेषमुत्तमाङ्गच्छविमुद्वहन्तमितस्ततः प्रहिततरलतारकाभिर्दिग्भिरिवासवागताभिश्चतसृभिर्वारवनिताभिरुद्धूयमानचामरमुदारनेपथ्यसहचरीवृन्दपरिवृतया विधूयमानेन कान्त्या विलासिनीसंहत्या च विरलमविरलमुज्ज्वलहेमदण्डेन बालव्यजनकव्रजेन वीज्यमानया सखीजनोत्सङ्गनिहितनिःसहार्धदेहयोद्धृतैकैकमणिवलयमात्रालंकारया ताम्बूलविरहोत्कलितमधुरबिम्बाधररागया शरद्दिवेव चन्दनाङ्गरागपाण्डुरपयोधरया राजहंसिकयेव सरसमृणालिकाहारभूषितशरीरया तत्कालमेव सलिलादुद्धृतैः कमलकुमुदकुवलयमृणालैः कल्पि-

तोपधानमब्जिनीपत्रसंस्तरमधिशयानया जगत्रयातिशायिरूपलावण्यया नवीनवयसा नरेन्द्रकन्यया सनाथीकृतपार्श्वमङ्घ्रिपैरपि कृतोर्ध्वावस्थानैरनुजीविभिरिव परिवृतं कदलीभिरप्यनिलदोलायितदलाभिश्चामरग्राहिणीभिरिव वीज्यमानं धरण्याप्युपरिधृतसरलकाण्डसुरपादपया गृहीतातपत्रयेवोत्सङ्गितमह्नापि तरुशाखान्तरप्रवेशितप्रांशुरविकरेण प्रतिपन्नकनकवेत्रेणेव प्रकटितानुभावं **हरिवाहन**मद्राक्षीत्।

अथोपसृत्य पुरतः सत्वरेण स्खलत्पदप्रसरया गिरा गत्या च सूचितहृदयहर्षप्रकर्षेण 'देव, दिष्ट्या वर्धसे। परागतो युवराजः **समरकेतुः**' इत्यावेदिते गन्धर्वकेण संभ्रान्तचेताः सहसैव **हरिवाहनः** परित्यज्यमानतया राजकन्यया सह प्रवृत्तां कथां 'कथय कथय, क्व वर्तते क्व वर्तते' इति सगद्गदं गदन्नासनादुत्तस्थौ। द्वारदेशावस्थापितेक्षणश्च दृष्टवानीषदवनतदृष्टिपातमापतन्तमभिमुखे दुःखविधृतकण्ठदेशागतोद्गाढबाष्पवेगमकृत्रिमानुरागेण सुहृदा प्रथममेव प्रणयिनीकृताया विद्याधरविषयभूमेर्महादेवीपदाभिषेकमिव कर्तुं तुषारनिष्पन्दशिशिरैरानन्दाश्रुवारिभिराकर्णमायते नयनपात्रे पूरयन्तमविरलकराङ्गुलीगलन्नखमयूखजालजलधारेण रोमाञ्चजालकमुचा मन्दं मन्दं दोलायमानेन प्रांशुना भुजादण्डद्वयेन सद्य एव प्रतीर्णायाः सुहृद्दर्शनप्रतिज्ञापगायाः पारमाश्रयन्तमिव लक्ष्यमाणमतिशयकर्कशेन वातातपस्पर्शेनातिमात्रकर्शितमपि जलनिधिमिवापरित्यक्तसहजलावण्यमभिनवलताप्रताननद्धविकटोर्ध्वजूटमधिजघनमासक्तसूक्ष्मवल्कलमनिलविलुलितेन वनतरुपुष्परेणुना धूसरितसकलावयवमनेकदुःखनिधानमानुष्यकद्वेषेण वृक्षतामिव लब्धुमारब्धोद्यममाधारमिव धैर्यस्य, हृदयमिव सौहृदस्य, स्वतत्त्वमिव सत्वस्य, परिपाकमिव पौरुषस्य, जयस्तम्भमिवावष्टम्भस्य,

दृष्टान्तमिव कष्टंसहानाम्, सुदुस्तरव्यसनसागरविलङ्घनैकसेतुं समरकेतु-मालोकितमात्र एव तत्र गलितनिःशेषहृदयातङ्कभारः सहसैवाध्यासितस्वदेशमिव दृष्टसकलज्ञातिलोकमिवानेकसहायशतपरिवृतमिव प्रत्यागतसमस्तपूर्वानुभूतनिर्भरक्रीडासुखसमूहमिवात्मानमुद्वहन्नधिष्ठितोभयकपोलेन सिंहलेश्वरसूनुमभिसरभसप्रधावितस्य चक्षुषः प्रसरमपवारयन्तमानन्दाश्रुजलपटलमिव परिमार्ष्टुमनवरतमुत्तिष्ठता पुलकजालकेन पिशुनितान्तःप्रहर्षोदयः किसलयाग्रहस्तपर्यस्तदशमुद्रिकाशकुसुमप्रकटितस्मिताभिः पूर्णपात्रसंभावनयेव वारंवारमवलम्ब्यमानमासन्नवर्तिनीभिर्वनलताभिराकर्षन्कराग्रेण सत्वरमुत्तरीयसि चलाञ्चलं कदलीगृहाभ्यन्तर एव द्वित्राणि पदान्यभिमुखमगच्छत्। उपसृतं च तं क्षितिचुम्बिना शिरसा कृतप्रणाममुत्क्षिप्य सरभसप्रसारितबाहुयुगलः प्रवेशयन्निव हृदयमेकतां नयन्निव शरीरेण निर्दयाश्लेषनिःपिष्टवक्षःस्थलपुलकजालमालिलिङ्ग। शिथिलितपरिष्वङ्गं च भूयः प्रणम्य भूमावुपविशन्तमाकृष्य निजविष्टरैकदेशे न्यवेशयत्। परिष्वज्य च पुनः पुनः प्रीतचेताः पप्रच्छ कुशलम्। स्थित्वा च तन्मुखासक्तदृष्टिरनतिदीर्घकालमीषद्वलितवदनः स्मितोद्भेदविशदमक्षिपत्तस्यां क्षितिपदुहितरि चक्षुः। अवदच्च—'देवि, सोऽयमखिलसिंहलद्वीपभर्तुर्महाराजचन्द्रकेतोरात्मजन्मा स्वयंवृतो वरस्त्वदीयायाः स्वश्रु(सु)र्मलयसुन्दर्याः सकलवीरवर्गाग्रेसरो युवराजसमरकेतुर्यत्स्नेहमोहितेन मया मनोरथानामप्यपथभूतमप्रार्थिताभिमुखेन भगवता दैवेन कथमपि करुणया संपादितमेकपद एव परिहृतं त्वदीयमुखपङ्कजावलोकनसुखमङ्गीकृतः कालमियन्तमेतावानयं क्लेशः' इत्युक्तवति हरिवाहने तां कृतस्मितामुत्थाय समरकेतुः सादरं प्रणनाम। प्रणतोपविष्टं च तमसौ प्रकटितसंभ्रमारंभविकसितपुटेन

निश्चलपक्ष्मणा निस्तरङ्गतारकेण चक्षुषा पिबन्तीवालपन्तीवाह्वयन्तीव सविधं समुपवेशयन्तीव सप्रेमबहुमानमपश्यत् । अत्रान्तरे कनकवेत्रहस्ता प्रविश्य प्रतीहारी सप्रश्रयमवनिपतिकन्यकां तां व्यजिज्ञपत्—'भर्तृदारिके, देव्या पत्रलेखया त्वज्जीवितपरित्यागव्यवसायवार्तामाकर्ण्य लोकादधिकमुत्पन्नहृदयोत्कम्पया विसृष्टः कञ्चुकी द्वारि तिष्ठति' इति मुखनिहितनिश्चललोचना च विलम्ब्य क्षणमलब्धोत्तरा सत्वरमेव निश्चक्राम ।

निर्गतायां च तस्यामतिक्रान्ते कियत्यपि कालक्षणे गीतविधिविचक्षणः कोऽपि मध्यंदिनावसरया पाठावसाने समासन्नदीर्घिकातीरवर्ती बारंवारमावर्तितपदामार्यामिमामुच्चैरगायत्—

'तव राजहंस हंसीदर्शनमुदितस्य विस्मृतो नूनम् ।
सरसिजवनप्रवेशः समयेऽपि विलम्बसे तेन ॥'

श्रुत्वा च सुचिरमेतामवगतार्थो विहस्य हरिवाहनस्तां महाराजकन्यामवादीत्—'देवि, दैवज्ञवेदितस्य विद्याधरराजराजधानीपुरप्रवेशलग्नस्य समयाभिलङ्घनशङ्किभिः शाक्यबुद्धिपुरःसरैः प्रवर्तितो बुद्धिसचिवैः विराधनामा नरेन्द्रनर्मसचिव एष हंसमिषेण मामितो गमनाय त्वरयति । तदादिश । गच्छाम्यहम् । त्वमपि गत्वा देवीमवलोकय' इत्यभिदधानः सहसैव मागधजयध्वनिकलकलेनोदतिष्ठत् । द्वारसंगलितसत्वराङ्गरक्षकरतलप्रचलदुत्खातखड्गमण्डलीपरिगतश्च विकचनीलोत्पलवनमध्यचारी राजहंस इव गत्वा सविभ्रमं ससंभ्रमाधोरणढौकितां कुम्भपीठपातिताङ्कुशकोटिघट्टनोपविष्टामनवरतनिष्ठुराक्रोशकर्शितोत्थानयत्नां यामगजवशामग्रतोऽधिरूढेन समरकेतुना समर्पितपाणिरध्यरोहत् । अथोष्णीषपट्टकृतशिरोवेष्टना दृढाकृष्टकञ्चुक-

कसाधिककृशोदरश्रियः स्कन्धविन्यस्तवल्गाविहस्ताग्रवामहस्तास्तदितरकरावलम्बमानलम्बाजिनयष्टयः पादकटकप्रविष्टैकाङ्घ्रिपल्लवावष्टम्भेन परिवर्धकैरपरकटकाक्रान्तिनिश्चलीकृतपर्याणैरुपस्थापितान्पुरः पार्थिवा यथाश्वमश्वानारुरुहुः।

तैश्च तरलायमानतारहारच्छटाछोटितवक्षःस्थलैरान्दोलितश्रवणोत्पलगलत्परागपांशुलकपोलपालिभिरालोलमौलिशेखरस्खलनस्वलीकृतालिजालैः सहेलव्रजद्वाजिभिः सह विघटमानसंघट्टमानच्छत्रधारैरागत्यागत्य परिचार्यमाणः पर्याणपृष्ठाधिरूढप्रौढपुरुषोत्तम्भितया जृम्भोत्तानकुम्भिकाकुसुमसमभासा श्वेतातपत्रिकया निवार्यमाणातपस्तापनिर्वापणप्रकीर्णशीकरनिकरकोरकितकरटैः साटोपसर्पणोत्तालताण्डवितकेतुभिः कतिपयैरेव दर्पशौण्डैर्वेगदण्डप्रायैरनेकपैरथान्यपृष्टः प्रतिपिपादयिषितप्रथमसेवासविशेषदर्शितादरेण परस्पराङ्गसङ्गप्रसङ्गाधिगतगतिबाधिनापि बद्धमध्यवेगमन्वक्प्रतिष्ठमानेन पृष्ठापतत्पृष्ठतुरगखुरगतिगतावधानधावमानाश्च कर्षकेण हेलोच्छलच्छात्रिकेण प्रोड्डीयमानमायूरातपत्रकेण रथापतत्पतद्ग्रहग्राहिणां सस्रंसितासिरेखरिङ्खत्खड्गधारेण शिखिपिच्छगुच्छाच्छादितैकदेशदारुयष्टिश्लिष्टबाहुशिखरवहद्वारिकरकवाहकेनानुगम्यमानः परिजनेन निर्गत्य तस्माज्जिनायतनकाननादनुससार कौबेरदिक्पथम्। अथातर्कितितारकापथप्रस्थानलीलोत्थापितविस्मयेन समरकेतुना सविस्मयमवलोकितां प्रलयजलधिपङ्कपर्यङ्कलुठितवैकुण्ठकोलकायकालीं कुपितकालपवनकालकलितां केलिमिव, कालीयस्य तत्कालकर्कशार्कमरीचिसंपर्कमूर्छितां मूर्च्छामिव, महीगोलस्य शकलीकृत्य काश्यपीगोलमुत्कलितां कण्ठस्य कालकूटकालिकामिव, कालाग्निकण्ठे कालस्य विषमविषधरविषानलोद्वेगवेगोद्गतां पद्धतिमिव, पातालपङ्कस्य

बहुशैवलच्छटावच्छादितामपसरणसरणिमिव, प्रलयान्तशान्तोत्तराशाजलराशेरवनिपीठपर्यस्तपीवरप्रवाहां मदवारिवाहिनीमिव, सार्वभौमस्य भूमौ प्रतिमागतां रयरेखामिव, अनूरुसारथिरथार्वतामखर्वपर्वतशिखरशेखरितान्तरामन्तरान्तरा वहद्भिमलजलवाहिवाहिनीप्रवाहाभिरुत्पतत्पांशुमुष्टिभिः कथितस्पष्टिततरुस्तम्भवृतवनस्तम्बेरमस्तोमाभिः पर्यस्तजर्जरभूर्जवल्कलभारसुखसंचाराभिरुज्जिहानमञ्जिष्ठाङ्कुरजालाङ्कितजलाशयोपशल्याभिर्निपतिततिरश्चीनप्राचीनामलकतिलकिततलाभिर्दरीगृहप्रस्तरगलितगुञ्जाफलकाञ्चीसूचितवनेचरीचित्ररतविमर्दाभिर्गवयखुरखण्डितमनःशिलातलतलिनितोद्देशाभिः क्षुण्णहरितालपिञ्जरजटालजरद्वृक्षप्रेक्षणीयाभिररण्यमहिषविषाणशिखरोत्खातनीलगिरिकूटाट्टहासिनीभिः कवलितपृदाकुदर्दुरदारणोद्यतनिषादनादितानूपाभिर्वनस्थलीभिरुद्भासितामुर्वीनिर्व्याजभूषणैश्चानेकरूपैर्जातः हिमरूपजन्महेतुभिश्च, दुर्वर्णजननवर्णनीयवीर्यैश्च, श्रुत्वात्मलाभदायिभिश्च, रीत्युपादानकारणैश्च, वङ्गप्रसविभिश्च, नागप्रभवैश्च, कङ्कादिलोहोल्लासकल्पैश्च, नष्टशल्याकृष्टिकृष्टिभिश्चास्स(श्म)सारभूमिदृष्टसारैश्च, स्पर्शवेधिभिश्च, पद्मरागादिरत्नपरीक्षाक्षमैश्च, क्षुद्रोपलैरलंकृतामनेकसिद्धिश्रद्धालुसिद्धान्विष्यमाणाभिश्च, विचित्रपत्रपुष्पफलमूलोपलक्षाभिरक्षुण्णनामभिरवग्रहादिनिग्रहोपयोगिनीभिश्च, सकलदुष्टदृष्टिमोहदृष्टशक्तिभिश्च, रससमूहमारणमहितमाहात्म्याभिश्च, स्तम्भस्तोभोद्भासनविद्वेषणादिप्रयोगयोग्याभिश्च, शतधारस्यापि धारास्तम्भनप्रगल्भाभिः कालकूटस्यापि रसपाटवापनोदिनीभिस्तक्षकस्यापि विषतीक्ष्णतातिरस्कारिणीभिर्भुवनत्रयस्यापि सुभगकरणीभिरञ्जनमात्रदर्शितादृश्यदूरान्तरितभावाभिरङ्घ्रिलेपमात्रप्रवर्तितानिलवर्त्मगमनाभिस्तिलकक्रियामात्रकृतसकलतनुतिरोभावाभिरभ्यवहार-

मात्रजितजरारोगमृत्युभयाभिर्महाप्रभावाभिरोषधीभिरवन्ध्यां क्वचिदुपलरूपतापरिणतैकदेशेन तृणपलाशादिनार्धमग्रे गम्यमानशीलैः शिलोदकैरशून्यां क्वचित्पान्थतण्डुलप्रस्थंपचैः प्रतिगर्तमावर्तिनोत्क्वथनेन कथ्यमानप्रकृतिभिर्दहनोदकैरुपेतां क्वचिदुपान्तमूर्छितपतत्रिसूचितसामर्थ्यैः सत्त्वरक्षार्थमाटविकरचितकाण्टिपरिवेषैर्विषोदकैर्विदूषितां स्थानस्थानेषु मणिमयोर्ध्वसंस्थानाभिर्महाप्रमाणत्वादुद्ग्रीवपुरुषप्रलयदृश्यमुखमण्डलाकृतिभिरन्तरिक्षचारिणा खेचरगणेन शिरसि पात्यमानपुष्पवृष्टिभिरनैदंयुगीनमनुष्यकल्पिताभिः कल्पान्तरस्थायिनीभिः प्रसिद्धसिद्धप्रतिमाभिः प्रसाधितामितश्चेतश्च नाकिमिथुनमन्मथक्रीडोचितैश्चित्तहारितया नन्दनवनोद्देशैरिव दिवश्च्युतैरीर्ष्यासमरविच्छिन्नकिन्नरमिथुनपिच्छलाञ्छितलतासद्मभिरन्योन्ययुध्यमानपोत्रिप्रकाण्डकुण्डोच्छलितमुक्ताफलधवलितैरशङ्कमृगकुलकलिततापसाश्रमतमालवनखण्डैराहिण्डद्भूरिभारुण्डमण्डलैरारण्यकोच्चोटितवल्कलपट्टकस्थपुटिताग्निसौधशिलातलैरनोकहस्कन्धावतीर्णसरसप्ररोहाभू(?)ह्यमानधरणीगतनिधानैः स्वर्णचूर्णावकीर्णभस्मपुञ्जकव्यज्यमाननरेन्द्रधातुवादक्रियैर्वरार्थिनिरशननरोपरुद्धगिरिशिखरचामुण्डायतनमण्डपैर्वातिककुट्टाकटङ्कशकलिताकृत्रिमशिवलिङ्गैरेकैकधार्मिकाध्युषितनिर्भरप्रपातासन्नासू(शू)न्यसिद्धायतनैर्विविक्षुसिद्धविक्षिप्तवलिशबलितासुरविवरद्वारैर्भीतभीताध्वन्यदृश्यमानरसातलसहोदरपतनकन्दरैर्यदृच्छाप्रवृत्तविद्याधरपुरंध्रिसान्निध्यक्षुभितरसकूपिकैः स्मरान्धखेचरानीतभूगोचरवधूविलापवाचालैरर्धजर्जरद्विरदशय्यासहस्रसूचितातिक्रान्तचक्रवर्तिसैन्यसंनिवेशैः प्रदेशैरुपशोभितां सर्वतश्च सर्वविद्याधरनगरनिर्गतैः सर्ववर्णान्तःपातिभिः सर्वारम्भविरतैः सर्वविषयप्रतिषेधलब्धाशयशुद्धिभिः सिद्धिनिमित्तमङ्गीकृतारण्यवा-

सैश्चिरागतैश्चाभिरप्रविष्टैश्चसरित्तटनिवासिभिश्च गिरिगुहाध्यासिभिश्च गह्वरोपगह्वरविहारिभिश्चनिर्झरानुसारिभिश्च सदनीकृतलताजालैश्च परित्यक्ताभ्यवहारैश्च फलमूलप्रायाहारैश्चपञ्चतपःसाधनविधानसंलग्नैश्चाकण्ठमुदकमग्नैश्च प्रारब्धधूमपानाधोमुखैश्च ब्रध्नबिम्बनिरीक्षणोद्वीक्षणैश्च जंजपूकैश्च वाचंयमैश्च कैश्चित्कन्दमूलोद्धारिभिरवगाढवातातपोपहतवारिभिर्विधृताजिनजटाकलापैस्तापसाकल्पं कलयद्भिः कैश्चिदुद्दण्डकोदण्डपाणिभिः प्राणिविशसनोपरतैरन्तिकस्थप्रेयसीभिः संभोगसुखपराङ्मुखैः पत्रशबरपरिबर्हं वहद्भिराप्तोपदेशप्रतिपन्ननानाविधव्रतैराराधयद्भिश्च नानाविद्याविद्याधरैरध्यासितां स्फटिकराजपट्टप्रायोपलां सैकतप्रायभूतलां नीवारप्रायतृणोलुपां कस्तूरिकामृगप्रायश्वापदां शिखण्डिपरभृतप्रायाण्डजां किंपुरुषप्रायवनचरां चन्द्रकान्तनिष्पन्दप्रायनिर्भरां गल्वर्कोद्गीर्णपावकप्रायदावानलं वनदेवतानिःश्वसितपवनप्रायमारुतामेकशृङ्गवैताढ्यपर्वतान्तरालाटवीं वीक्षमाणः क्षणेनैव दक्षिणोत्तरश्रेणितिलकभूतं पुरुहूतनगरीरूपविभ्रममुदग्रमणिशिलाशालशिखरोल्लिखितगगनोदरं गगनवल्लभनगरमाससाद ।

प्रतिसदनमुत्तम्भितविविधवस्त्रध्वजेन गन्धजलसिक्तनिजनिजप्रतोलिना सर्वतो विप्रकीर्णपुष्पप्रकरेण निर्यत्नसाधिताखिलप्रधानविद्यः परिगतः समागतसकलतन्त्रैः खेचराधिपतिभिरद्यैवोपजातसमागमेन प्रेयसा सदृशरूपयौवनेन सुहृदा स्वदेशागतेन सार्धमचिरानुभूतराज्याभिषेकसंपदभिनवः प्रभुरस्माकमागच्छतीत्याकर्ण्याकर्ण्य समुपजातकुतूहलेन सहेलमारुह्य हर्म्याग्रशिखराणि सस्पृहमहं प्राथमिकोपमर्दितपरस्परेण दृश्यमानः पौरनरनारीजनेन वव्राज राजमन्दिरम् ।

तत्र च प्रवर्तितोत्सवेन प्रहतपटुपटहझल्लरीमृदङ्गमङ्गलतूर्यवर्धितद्विगुणरभसेन सविशेषसुन्दरवेषधारिणा संनिधापितसितकुसुमदूर्वाच-

न्दनेन प्रधानविद्याधरवधूजनेन निर्वर्तितावतारणकमङ्गलः प्रतिकल्पोपनीतविविधवस्त्रविलेपनालंकारं विविधमुपदर्शितादरः प्रस्थाप्य दर्शनागतं प्रधाननगरलोकमनुगम्यमानः परिजनेन भोजनभवनमगच्छत्।

गत्वा च खेचरीवृन्दसंपादितमज्जनेन निवसितानर्घवाससा प्रतिपन्नसर्वाङ्गीन(ण)दिव्याङ्गरागेण महार्हरत्नालंकारधारिणा विधृतमल्लिकमाल्यशेखरेण निजासनान्तिकोपविष्टेन समरकेतुनान्यैश्च यथानिबद्धस्थानविनिविष्टैर्विद्याधरकुमारैः परिवृतो निर्वर्तयांचकाराहारकर्म।

क्रमातिवाहितदिनश्चोत्थाय भुक्त्यास्थानमण्डपाच्चक्रे यथाक्रियमाणमावश्यकविधिं सांध्यम्। अध्यासितप्रासादशिखरश्च मुख्यैः खेचराधिपतिभिः सह स्थित्वा विचित्रकथाविनोदेन सुचिरमुचिते शयनसमये समीपस्थपरिजनोपदिष्टमार्गः शयनश्चित्रशालामगच्छत्। अधिशयितपर्यङ्कश्च वारंवारमवलोक्य निकटनिहितापररत्नपर्यङ्कनिविष्टमनेकदुर्गदेशान्तरागमनदुर्बलं म्लानवपुषं समरकेतुरधिकमन्तः संतापमवहत्। अपृच्छच्च खिन्नवर्णोच्चारया वाचा यथावृत्तमादितः प्रभृति मार्गागमनवृत्तान्तम्। अयमस्मै सर्वमात्मवृत्तान्तं न्यवेदयत्। अनन्तरमीषदुपजातनिद्रश्च नीत्वा रजनीशेषमारोहति मृदूकृतान्धकारगर्वे पूर्वशिखरिणमरुणसारथौ सौधवातायनसविधचारिणा चारणेन बहिरुच्चार्यमाणं वृत्तकुलकमेतदश्रौषीत्—

'निद्रात्यूहपतद्गिरौ रतिगृहाः साक्रन्दचक्रा नदा
विद्राति द्युतिरौडवी निबिडितां धत्ते प्रदीपच्छविः।
द्यौर्मन्दस्फुरितारुणा तिमिरिणी सर्वंसहा सर्वथा
सीमा चित्तमुषामुषः क्षणदयोः संधिक्षणौ वर्तते॥

जाता दाडिमबीजपाकसुहृदः संध्योदये तारका
यान्ति प्लुष्टजरत्पलालतुलनां तान्तास्तमस्तन्तवः।
ज्योत्स्नापायविपाण्डुमण्डलमपि प्रत्यङ्नभोभित्तिभा-
क्पूर्णेन्दोर्जरदूर्णनाभनिलयप्रागल्भ्यमभ्यस्यति॥
उद्यज्जाड्य इव प्रगेतनमरुत्संसर्गतश्चन्द्रमाः
पादानेष दिगन्ततल्पतलतः शङ्कोचयत्यायतान्।
अन्तर्विस्फुरितोरुतारकतिमिस्तोमं नभःपल्वला-
द्ध्वान्तानायमयं च धीवर इवानूरुः करैः कर्षति॥
सद्यः संहृतघोरघूत्कृतिमनाग्ध्यामीभवद्दृष्टयो
जीर्णानोकहकोटराणि शनकैर्मार्गन्त्यमी कौशिकाः।
किं चास्कन्दति शैलकन्दरभुवो भिन्नं करैरारुणै-
रेतद्दर्पकरालकोलकपिलश्यामं त्रियामातमः॥
ताम्बूलद्रवरागराजिरुचिरैर्मध्ये बहिर्धूसरैः
किंचिन्नूतनकाञ्चनारसुमनःपत्रं हसन्त्योऽधरैः।
एताः पण्यपुरंध्रयो निधुवनक्रीडाजडैरङ्गकै-
र्निर्गत्य प्रियसद्मनः स्ववसतेर्वीथीरलंकुर्वते॥
जाताः सर्वदिशो दिनान्धवयसामन्धास्तवेव द्विषां
प्राप्यन्ते घटना रथाङ्गमिथुनैस्त्वद्वाञ्छितार्थैरिव।
आरोहत्युदयं प्रताप इव ते तापः पतङ्गत्विषां
द्रष्टुं नाथ भवन्मुखश्रियमिवोन्मीलन्ति पद्माकराः॥'

श्रुत्वा चेदमुन्मिषितलोचनः सलीलमुत्थाय शयनात्ससैनिको नगरबाह्यायां जगाम। परिभ्रम्य च स्वभावरमणीयपरिसरेष्वारामेषु सरःसु देवतायतनमण्डलेष्वावासमाजगाम। मध्याह्नसमये च दूरादेव

दृश्यमानशुभ्रादभ्रविस्तारमदृष्टपारतरुसरित्सरोवराढ्यं वैताढ्यभूधरमध्यारोहत् । कृतावस्थितिश्च शिखरदेशे करतलस्थमिव नाकलोकमङ्घ्रिमूले निलीनमिव मध्यमं भुवनमध्यासितानीव दृष्टिमध्यमाशामुखानि मन्यमानः समन्तात्प्रहितदृष्टिरुष्णीषपट्टमिव जम्बूद्वीपस्य, मानसूत्रमिव भारतवर्षस्य, सेतुबन्धमिव गगनसिन्धोः, सीमन्तमिव भुवः, हारमिव वैश्रवणहरितः, ताण्डवप्रसृतखण्डपरशुभुजदण्डभस्मेव रेखाकारेण पतितम्, प्रलयविप्लुतक्षीरसिन्धुफेनमिव निम्नानुसारेण स्थितम्, त्रिदिवदर्शनोत्कण्ठया मन्दाकिनीप्रवाहमिव हेलयोत्पतितम्, समग्रमेदिनीभारधारणक्षमं रूपान्तरमिव शेषस्य विस्फुरद्रत्नकटककान्तं बाहुमिव क्षीरोदस्य, पातालावधिप्रविष्टमूलं निश्चलबन्धमिव भूगोलस्य, विशालकटकावष्टब्धभूतलं प्रतिपक्षमिव हिमवतः, पूर्वापरोदधिवेलावलग्नमुदकपानतृष्णया जीर्णसंवर्तकाम्बुदसंघातमिव युगान्तसमयमुदीक्ष्यमाणमिन्दुद्युतिमुषा देहप्रभोल्लासेन पौलस्त्यहस्तोल्लासितं कैलासमिव हसन्तं प्रकटितबहुश्रोतसा निर्झरनिवहेन तुहिनशैलस्पर्धया जाह्नवीसहस्राणीव सृजन्तं दिगन्तरव्यापिभिर्दरीमुखसमीरैः सुमेरुमहिमाभ्यसूयया निश्वासानिव विमुञ्चन्तमश्रान्तसंततिभिः शकुनिकोलाहलैः केशवभुजायन्त्रामन्देरितं मन्दरमिवाधिक्षिपन्तं कुलिशकृत्तपक्षव्रणनिभासु गम्भीरगैरिकखनिषु लम्बमाननिश्चलनिरायताङ्गैरजगरकुलैर्दुष्टरक्तापकर्षणार्थमायोजितै······लोको जालकैरिव दुरालोकपार्श्वभागम्, कैश्चिदुद्भिन्नवैडूर्यरत्नाङ्कुरकलापैरधः करालकन्दरादर्शनजातरोमाञ्चैरिवातीततारापथैः पृथुपराक्रमाणि क्रीडाकिरातवंश्यानि शबरवृन्दानि, कैश्चिदितस्ततश्चलिततनुसरिद्द्रोणिकैः स्खलनपर्यस्तसूर्यरथपताकैरिव पतनभीतविद्याधरसङ्घपरिहृतलङ्घनानि सिद्धायतनानि, कैश्चिदन्धकारगह्वर-

प्रवेशितसरलनिर्झरसलिलधारैरसुरकन्याधिरोहणार्थमवलम्बितरज्जुजालैरिव सततसप्तर्षियात्रापवित्रितानि दिव्याश्रमपदानि, कैश्चिदुत्तुङ्गतालतरुवनैस्त्रिविष्टपमुपस्प्रष्टुमूर्ध्वीकृतभुजैरिव निरातङ्कनाकिमिथुनाभ्यस्यमानमन्मथक्रीडामणितानि मणिशिलालयनानि, शिखरैर्धारयन्तं निविष्टानन्तवनदेवतानगरमिव लतागृहव्रातैराविष्कृतानेकपातालमिव सान्धकारकन्दरैः प्रसूतनिःसंख्यापत्यमिव दिङ्नागयूथैरुत्थापितप्रबलबहुलप्रदोषमिव तमालमरुमण्डलैरावासितापारवासरमिव स्वर्णसानुप्रभाप्राग्भारैः प्रकटितानेकरामायणमिव किलिकिलायमानवानरानीकनिकायैर्दर्शितापूर्वप्रजासर्गमिव किंपुरुषवर्गैः, क्वचिद्वृद्धमण्डलगरुडगोत्रपक्षिव्यावर्ण्यमानद्वीपान्तरप्रचारवार्ताम्, क्वचिद्द्विपक्षवारणविरोधपरिणतगजोन्मूलितगलद्गण्डशैलम्, क्वचिन्मृगारातिकरकुलिशदारितजलदगर्भोद्गीर्णमुक्ताफलाकीर्णम्, क्वचिन्नृत्तप्रवृत्तनीलकण्ठनिवहदर्शिताकालशाड्वलम्, क्वचिन्मुग्धवनमहिषपुरस्कृतपलायमानाश्वमुखसमूहम्, त्रिविक्रममिव पादाग्रनिर्गतत्रिपथगासिन्धुप्रवाहम्, रथमिव चक्रवर्तिबलचूर्णितासन्नभूतलम्, मेरुकल्पपादपालीपरिगतमपि नमेरुकल्पपादपालीपरिगतम्, वनगजालीसंकुलमपि नवनगजालीसंकुलं तमवलोकितवान्। उपजातविस्मयं च तत्तस्य शिखरिणः स्वभावरमणीयासु शिखरश्रेणिषु पुनः पुनः प्रहितदृशमुद्दिश्य नग्नाचार्य एकः समुच्चार्य जयशब्दमब्दध्वानजयिना स्वरेण प्रक्रमागतमिमं श्लोकमपठत्—

दृश्यं भूमिभृतोऽस्य देव किमिह स्कन्धस्थविद्याधर-
श्रेणीयस्य वहन्ति यस्य समतामन्येऽपि गोत्राचलाः।
द्रष्टव्यस्त्वमनन्यतुल्यमहिमा मध्ये धरित्रीभृतां
येनाधःकृतखेचरेन्द्रततिना बद्धास्य मूर्ध्नि स्थितिः॥

आकर्ण्य चैनमुद्भिन्नपुलकः सहर्षमब्रवीत्**समरकेतुः**—'कुमार, साध्वनेन मङ्गलपाठकेन पठता । किं दृश्यते किं च वर्ण्यते । सकलकुलधराधरसाधारणगुणग्रामगरिमा गिरिरेष दर्शनीयो वर्णनीयश्च । त्वमेको जगति येन निःसामान्यनिजचरितखर्वीकृतसर्वान्यभूभृता निजभुजादण्डमात्रसहायेन निर्गत्य शिबिरात्परिमितैरहोभिरावर्जितं **विद्याधर**चक्रवर्तित्वम्, अनुचरीकृताः खेचराधिपतयः, विधेयीकृतं विद्यादेवताचक्रम् । तदास्तां तावदस्य शिखरिणो दर्शनव्यावर्णनानि । तमेवावेदय यथावृत्तमादितः प्रभृति सर्वमात्मीयवृत्तान्तम् । दुष्टकरटी लौहित्यतटपर्वताटव्यां भवन्तमपहृत्य क गतः, क स्थितः । त्वयापि ततोऽवतीर्य किं कृतम्, किं दृष्टम्, किमनुभूतम् । कप्रदेशे कृतस्थितिना प्रेषितः स लेखः, केन वा स शीघ्रमेव प्रापितः शिबिरम् । कुत ईदृशीनामाकाशगमनादिकार्यजनितजगद्विस्मयानामखिलानामपि महाप्रभावाणां विद्यानामधिगतिः । कथमियमतर्कितैव **विद्याधरचक्रवर्ति**पदप्राप्तिः । केन वा प्रसङ्गेन तत्र चैत्ररथवनविडम्बिनि जिनायतनकानने कृतमागमनम् । का च सा त्रिलोकीतिलकभूता रूपगर्वमपहर्तुमिव पार्वती कमलयोरुत्पादिता कमलयोनिना देवेन लावण्यैकवसतिः सकलस्यापि भवच्चरणकमलानुवर्तिनो राजलोकस्य मान्या महाराजकन्या या तत्र कदलीगृहे गृहीतविरहिणीजनाकल्पा ज्ञापिता कुमारेण प्रश्नरूपम् ।' इति सकौतुकेन पृष्टः **समरकेतुना** विहस्य **हरिवाहनः** सहर्षमुवाच—'युवराज, कथयामि यदि ते कौतुकम् । अवहितो भव । प्रभूतमिदमाख्येयम् । अथवा वृथा ममाभ्यर्थने यमयमेव भूम्ना निरन्तराश्चर्यसरसो मदीयवृत्तान्तः करिष्यत्यवधानवन्तं तदा प्रत्यक्षमेव भवतस्तथा मदान्धः स गन्धवारणः स्कन्धदृढबद्धासनं

शासनानन्तरमेव साध्वसादाधोरणैरकृतसत्वरोपसर्पणैरनर्पितां कुसुमवश-मुद्वहन् मामद्रिगह्वराचतो निर्गत्य तेनैव गिरितटेन यथोत्तरप्रकटित-जवः पृष्ठतो वहद्भिरनवरततर्जितजात्यवाहैर्वाहिनीपतिभिरन्यैश्चाबद्ध-परिकरैः परिकारमेण्ठवण्ठप्रायैः प्रजविभिः सैन्ययोधैरनुबध्यमानः कियन्तमपि मार्गमगमत्। अन्तरितेषु च निरन्तरैर्वनतरुस्तम्बैर्विलम्बि-तेषु सर्वेष्वनुपदिषु लोकै····केन मार्गवर्तिना विषमपाषाणपटलस्थपुटि-तावतारेण वनतरङ्गिणीश्रोतसा भग्नगमनत्वरस्तरसान्तरिक्षमुदपतत्। उत्पत्य चातिदूरमूरीकृतकुबेरदिङ्मुखाभिमुखयात्रो गात्रनिर्वापणाय परितः प्रकीर्णेन विस्तारिणा कराग्रशीकरजलासारेण निर्भरान्धकारित-गगनगर्तः पुष्करावर्तजलद इव संवर्तकालमरुताहतो वेगमतिमहान्त-मतनोत्। तेन चास्य वेगातिशयेन संजातगुरुविस्मयोऽहं मुहुर्मुहुः कौतुकादधोमुखक्षिप्तदृष्टिरस्फुटोपलक्ष्यमाणग्रामनगरां कीटप्रायजनपदां दूर्वाप्रतानोपमानविततवेलावनखण्डां गण्डशैलतुल्यप्र....विन्ध्यसह्यप्र-मुखभूधरामुरगकन्यकानिर्मोकसदृशमन्दाकिनीपुरःसरमहासरित्प्रवाहां नड्वलाकारमानसप्रभृतिदिव्यसरोवरां सर्वतस्तव चक्षुषा परिच्छिद्यमा-नविस्तारामतिदवीयस्तया रसातल इव प्रविष्टामन्धकूप इव निपतितां जातानुतापेन मधुरिपोराच्छिद्य बलिनेवात्मसंनिधावानीतामब्धिपर्यन्ता-मवनिमीक्षमाणः, क्वचित्समासन्नतया तपनमण्डलस्यातिदुःसहेन तापोष्मणा दह्यमानकायः, क्वचिदयत्नातपत्रतां गतैरम्भोदपटलैरुपरि-विस्तार्यमाणमांसलच्छायः, क्वचिदभ्रवर्त्मनाभिमुखमापतद्भिः सिद्धाध्व-न्यमिथुनैः करिभयाद्दूरत एव विहितापसरणः, क्वचित्तरलितोत्तरीय-पटल्लवेन तुङ्गगिरिशिखरनिर्भरवायुना स्वयमुद्धूततालवृन्तेनेवापनीत-

श्रमस्वेदजलकणः क्षणेनैवास्य पर्वतपतेरेकशृङ्गाख्यस्य शिखराग्रवर्तिनमाकाशप्रदेशमासादयम् । दृष्ट्वा च निकटवर्तिनं पुरो वैताढ्यमीषद्गलितदार्ढ्य इति मनस्यकरवम्—'एष कुञ्जरः केनाप्यसुरेण राक्षसेन वा पूर्वजन्मनि मया कृतं स्मृत्वा कमप्यपकारमुत्पन्नकोपेनानुप्रविश्य नीयते वश्यम् । न हि पशूनां स्वरूपेणाकाशगमने कदाचिदस्ति शक्तिः । न चातिवेगादवगम्यते कियन्तमध्वानमहमनेनानीत इति । तदयमद्यापि यावदतिदूरं न याति क्षितिगोचरैरलङ्घ्यशिखरोच्छ्रायमचलं वा नैनमुल्लङ्घयति, पयोधिमध्ये द्वीपान्तरे वा न मां प्रापयति, तावदेनं व्यावर्तयामि' इति संप्रधार्य तिर्यगुन्नमितकूर्परः पाणिना दक्षिणेन जघनावनद्धां खड्गधेनुकामस्पृशम् ।

दृष्ट्वा च तां समुत्खन्यमानामखण्डितोल्लसदसितलोलांशुमालाकरालितदिगन्तामुत्पातविद्युतमिवाम्बरे विस्फुरन्तीं सचारणः सहसैव मुक्तार्तभीषणनिनादः सपक्षशैल इव कुलिशोत्त्रासितस्तथैव स्कन्धबद्धासनं समुद्वहन् मामुदधिगम्भीरे सरसि तस्मिन्नदृष्टपाराख्ये सत्वरोपसंहृतपुरोगमनमात्मानममुञ्चत् । पतनसमनन्तरमेव च तिरोभावमुपगते तत्र निरवलम्बनोऽहं पतनवेगान्निमज्जद्दूरमतिचिरादुन्मग्नोऽप्यजातसंक्षोभः पर्यायेण विहितायतोत्क्षेपविक्षेपाभ्यां भुजाभ्यामनवरतमभिमुखाकृष्टसलिलस्तूर्णमेव तीर्त्वा सर उरोदघ्ननीरं तीरदेशमस्यासादयम् ।

तत्र चारोहणसमयलग्नेन गात्रोद्धूलनरेणुना गगनागमनवेगश्रमविकीर्णेन च तस्य करिणः कराग्रशीकरजलेन कलुषीकृतं प्रक्षाल्य शुचिरमङ्गमुत्तीर्य मध्यादुद्धाप्य निःपीडिते निबिडमवगलितपर्युषिताङ्गरागविमले दुकूलवाससी कृताचमनजलपानादिकर्मा निविश्यैकस्य कूलासन्नवर्तिनो लतागुल्मस्य मूले मुहूर्तमतिवाहितश्रमः स्वस्थचेतास्तथा

शिलातलोपविष्टमेकाकिनमनिवारितापतत्पुरुषमध्यंदिनानिललुप्यमानवपुषमनवरतजायमानकण्ठास्यशोषमात्मानमवलोक्य संजातविस्मयश्चिन्तितवान्—'अहो विरसता संसारस्थितेः, अहोविचित्रता कर्मपरिणतीनाम्, अहो यदृच्छाकारितायामभिनिवेशो विधिः, अहो भङ्गुरस्वभावता विभवानाम् । अद्यैव तादृशीतृणीकृतत्रिदशपतिविमानसौन्दर्यसंपदि निजे सद्मनि सुहृत्समेतो वीणावादनादिविनोदजनितमानन्दमनुभवन्नवस्थितोऽहमद्यैव दुर्गगिरिकान्तारमध्यवर्ती परिवृतो वनश्वापदशतैरन्यवैदेशिकपथिकसामान्यमवस्थाविशेषम् । एवमस्वस्थमानसो मानयामि न तद्राज्यम् न ते राजानः, न स मदान्धगजघटासहस्रसंकुलः स्कन्धावारः, नते छत्रचामरादयो नरेन्द्रालंकाराः, न तानि श्रवणहारीणि चारणस्तुतिवचनानि । सर्वमेव स्वप्नविज्ञानोपमं संपन्नम् । आस्तां च तावदन्यदप्रत्यासन्नमारोप्य येन स्कन्धमात्मीयमहमेतां भूमिमानीतः । यश्च सार्धं मयैवास्मिन्नगाधसलिले सरसि मग्नः, सोऽपि नास्ति प्राणभूतो मे पट्टवारणः । न ज्ञायते वराकस्य किं तस्य वृत्तम् । किमतिवेगपतनाद्गुरुत्वाच्च कायस्य गत्वा दूरमस्य सरसो मूलपङ्के विलग्नो गाढम्, उतान्तराल एव गच्छन्हेलया समकालमेव प्रधावितैः शकलीकृत्य कवलितो महाकायैर्जलचरैः, उतापरमवस्थान्तरं किमपि संप्राप्तः । किं चैकमिह शोच्यते । सर्व एवायमेवंप्रकारः संसारः । इदं तु चित्रं यदीदृशमप्येनमवगच्छतामीदृशीमपि भावनामनित्यतां विभावयतामीदृशानपि दशाविशेषाननुभवतां न जातुचिज्जन्तूनां विरज्यते चित्तम्, न विशीर्यते विषयाभिलाषः, न भङ्गुरीभवति भोगवाञ्छा, नाभिधावति निःसङ्गतां बुद्धिः, नाङ्गीकरोति निर्व्याबाधनित्यसुखमपवर्गस्थानमात्मा । सर्वथातिगहनो बलीयानेष संसारमोह इति परिभाव्य

मनसा मुहूर्तमुत्थाय तस्मात्प्रदेशात्स्वदेशदर्शनं प्रति निराशो निकटवर्तिनं ग्रामं नगरमाश्रमं वान्वेषयितुकामो निमित्तीकृत्य दिशमेकां शनैः शनैरुदचलम् ।

प्रचलितश्च स्तोकमन्तरमेकत्रातिसूक्ष्मसुकुमारसिकते निरन्तरोद्भिन्नकुसुमगुच्छलतागुल्मोपगूढपर्यन्ते गलितहंसगलरोमस्तोमपक्ष्मलक्ष्मातले मुक्ताशुक्तिसंपुटश्रेणिशारितोदरे विरतशर्वरीविरहशोककोकमिथुनानुभूयमानसान्द्रनिद्रे द्राघीयसि सरस्तीरसैकते विभाव्यमानव्यक्ततरविन्यासा दूरविच्छिन्नान्तरतया क्षितितलाधिकनिमग्नचरणतलतया च प्रकटितगतिस्त्वरातिरेकाः सर्वदिङ्मुखाभिमुखीरनेका मानुषपदश्रेणीरपश्यम् ।

दृष्ट्वा च किंचिदुच्छ्वसितहृदयो निरीक्ष्य निपुणमल्पप्रमाणतया ललितसकलावयवतया च स्त्रीजनस्यैता न पुरुषाणामिति विकल्पतास्वेकामतिशयरम्यदर्शनामागमोक्तप्रमाणप्रतिपन्नसकलसुकुमारावयवामब्जचक्रचामरच्छत्रानुकाराभिरनल्पबहुभिरच्छिन्ननिम्नाभिः प्रशस्तलेखाभिर्लाञ्छितामनुसरन् पदानां पङ्क्तिमधिकाभिरामदर्शनमुत्पत्तिसदनमिव सौन्दर्यलक्ष्म्याः श्लक्ष्णसितसुकुमारसिकताकीर्णभूतलमन्योन्यलग्नाभिरविरलोद्भिन्नबालदशबलनीलच्छदकलापाच्छादिताभिर्दिवापि संबद्धसान्द्रसंध्यारागशेषं प्रदोषध्वान्तमिव तन्वतीभिरुत्तानकुसुमस्तबकतारकिततनुभिस्तरुणवनलताभिर्निरन्तरानन्दनिबिडनिःशेषभित्तिभागं रङ्गमिव जगत्रयारामव्रततिगणिकानां पानगोष्ठीगृहमिवाखिलमधुव्रतव्रातानामाकरमिव समस्तोदारपुष्पमकरन्दस्य स्वेच्छाविहारमन्दिरमिव मकरकेतोरेकमेलालतागृहमद्राक्षम् ।

आगत्य चास्य द्वारदेशे कृतावस्थितिरूर्ध्वस्थित एवाभ्यन्तरे झगिति पुञ्जीभूतमुद्योतमिव दावहुतभुजो जातदाहकशक्तिभङ्गं पिश-

ङ्गीभूतसर्वाङ्गैः स्फुरद्भिरन्तःस्फुलिङ्गैरिव लताभृङ्गनिकुरम्बैः करम्बिताभोगमशनिपाताहतिविलीनसुरशैलशिखरप्रवृत्तकाञ्चनरसप्रवाहबहलमालोकमीक्षितवान् । उत्पन्नवन्यौषधिप्रकाशाशङ्कश्च क्षणमिव ध्यात्वा दिक्षु निक्षिप्तदृष्टिर्वारंवारं रक्ताशोकमूले कृतोर्ध्वावस्थानाममलकान्तिजलतरङ्गिषु सर्वाङ्गभागेषु समकालसंक्रान्तैरासन्नवल्लीपुष्पफलपल्लवैर्लतेति संलक्ष्यमाणामल्पदिवसाधिरूढनवयौवनामतिनिगूढदृढपर्वाभिरधिकतनुतारताम्रनखपरम्परापरिगताग्राभिः कुसुमसायकशरशलाकाभिरिव विरहिजनहृदयशोणितार्द्रशल्याभिरिव विरहिजनसरलसुकुमाराभिरङ्गुलीभिरुपेतेन साधुलोकेनेव स्निग्धत्वचारुणा लोकसुभगेन चरणाब्जयुगेनाचिरकालपीतं लाक्षारागरसमिव सफेनोद्गमं धाराभिरुद्गिरन्तीमुद्भिन्नसुन्दरशोणबिन्दोर्वरकरिकलभशुण्डादण्डस्य खण्डयितुमिव गुणाधिक्यदर्पमुत्सर्पिणा नूपुरपद्मरागकरकलापेन स्पृश्यमानपीनपरिमण्डलोरुयुगलामेकतः कान्तिजलभृता नाभिमण्डलीकनकभाण्डेनान्यतोऽपि वृत्तानुपूर्वेण परिणाहिनोरुतूणीरद्वयेनाशून्यपार्श्वं निशानमणिशिलाफलकमिव कुसुमास्त्रपत्रिणमतिविशालमसृणमांसलाभोगं जघनभागमुद्वहन्तीमविरलविभाव्यमानमरकतेन्द्रनीलकुरविन्दशकलया लब्धुमन्तमिव समन्ततः पर्यन्तेषु भ्रान्तया वेलयेवातिदूरप्रवृद्धस्य शृङ्गारजलधिः समदसारसक्रौञ्चकलविलापया काञ्चिलतया वलयितविशालश्रोणिपुलिनामगाधनाभिविवरवारितप्रसराभिनवागतेनाक्षपटलमास्थाय कायस्थेन तरुणिम्ना तत्क्षणाधिगतराज्यस्य रतिपतेरसिताक्षरश्रेणिमिव दर्शितामतिशयश्लक्ष्णसुकुमाररेखारोमराजिमुदरेणोद्वहन्तीम्, ऊर्ध्वरेखाकाररोमावलीसमविभक्तोभयविभागस्य मध्येऽधिकतनोरतिविशालसारफलकस्योदरोद्देशस्य शिरसि जातान्योन्यघटनेन स्वर्णसारद्वयेनेव सुवृत्तकठिनपीनपृष्ठेन स्तनपीठोभ-

येन स्फुटावेदितमनोभवविजयाम्, उपरिपर्यस्तकर्णाभरणप्रभाकिरणसंभारेणतद्भरादिवाभितः स्रस्तांशभागेन भिन्नहरितालरोचिषा भुजलताद्वयेन द्विगुणितप्रलम्बवैकक्ष्यकाम्, अधिकबहलेन विस्तारिणामरकतोर्मिकारागपटलेन घटितविनीलवाह्यपत्रपरिपाटिना द्विधा विपाद्य लक्ष्मीनिवासाम्, अरसमिव निर्मितेन सरलकोमलारुणाङ्गुलीदलभृता पाणियुगलेन भ्राजमानाम्, तत्कालमूर्जितबलेन निर्जित्यार्पितं कन्दर्पेण हासमिव हारं हारमुरसा स्वधामधवलितस्तनकलशकैलाशभूधरं धारयन्तीम्, अदृष्टपूर्वपार्वणचन्द्रदर्शनकौतुकेन युगपदुपागताभ्यामुदयास्तसंध्यातपस्तबकाभ्यामिव विबद्धबन्धूकपुष्पपुटपाटलाभ्यामधरोष्ठबिम्बाभ्यामधिष्ठितमुखीम्, उद्भावितरतिप्रीतिदर्पणभ्रमेण स्वच्छकान्तिना कपोलयुगलेन स्निग्धनीलालकलता इव छायागताः कुरङ्गमदपत्राङ्गुलीरुद्वहन्तीम्, अतिरेकतरलतारमायतस्फारधवलोदरशोभिशफरदामिव भुवनत्रयजयाय विहितयात्रस्य मकरकेतोः शकुनसंपादनार्थमुत्पादितं दैवेन नयनोत्पलद्वन्द्वमभिमुखं दर्शयन्तीम्, अच्छमणिवालुकापुलिनशङ्कया निशि ललाटमध्यमधिशयितस्य हिमकरकुरङ्गस्य शृङ्गकोटिभ्यामिव तिर्यगुभयतः पर्यस्ताभ्यामसितकुटिलायताभ्यां भ्रूवल्लरीभ्यामुद्भासिताम्, अधिकतरचारुतारोपणाय संचारयितुमतनिष्ठमोष्ठरुचकरागमिव लोचनान्तयोरनवरतकृतगतागतेनात्यन्तसुरभिणा श्वासपवनेन निविष्टपुष्पापीडपरिमलहृतानि दूरादेव मधुकरकुलानि स्तम्भयन्तीम्, अधिगतसमस्ताम्भोजगुणसंपदापि नखमणिमयूखोद्भासितेन दक्षिणेतरपाणिना गृहीतचारुपुटकिनीपत्रपुटामासन्नवल्लिविटपेषु पुष्पावचयमाचरन्तीम्, एकाकिनीमेकां बालिकामपश्यम् ।

तस्या दिग्व्यापिना तेन दीप्तिपटलेन रूपलावण्ययौवनपुरोगैश्च मित्रभावमेकत्रागतैरङ्गलतागुणैर्नितान्तमानीतविस्मयो मनस्यकरवम्—

गृहकवलनाद्भ्रष्टा लक्ष्मीः किमृक्षपतेरियं
मथनचकितापक्रान्ताप्वे(?)रुतामृतदेवता।
गिरिशनयनोदर्चिर्दग्धान्मनोभवपादपा-
द्विदितमथवा जाता सुभ्रूरियं नवकन्दली॥
जानीथ श्रुतशालिनौ खलु युवामावां प्रकृत्यर्जुनी
त्रैलोक्ये वपुरीदृगन्ययुवतेः संभाव्यते किं क्वचित्।
एतत्प्रष्टुमपास्तनीलनलिनश्रेणीविकाशश्रिणी
शङ्केऽस्याः समुपागते मृगदृशः कर्णान्तिकं लोचने॥

निर्वर्ण्य चातिचिरकालमालपितुकामस्तदभिमुखोऽभवम्। सापि मां तथागत्य द्वारदेशे कृतावस्थानमेकाकिनमाबद्धनिश्चललक्ष्येण चक्षुषा प्रत्येकमवयवानवलोकयन्तमवलोक्य समुपजातसाध्वसा सहसैव प्रबलमारुताहता बालकदली कन्दलीव कम्पितुमारब्धा। दृष्ट्वा च तां तथाविधमुपजातकरुणोऽहं विधायाकारसंवरणमर्पितनिर्विकारस्तिमित-दृष्टिस्तन्मुखारविन्दे स्थानस्थित एव तां शनैरवदम्—'बालिके, का त्वम्। किमर्थमेकाकिनी प्रविष्टा शून्ये लताजालकेऽस्मिन्। अकस्मादेवमुद्भ्रान्तचित्ता भीतेव दिक्षु क्षिपसि विकसितेन्दीवरदलदाम-दीर्घान्दृष्टिपातान्। किं च मां दृष्ट्वानिष्टशङ्किनीवात्मनो वारंवारमपवारिततनुस्तनीयसा स्तनांशुकेन संकुचसि रक्ताशोकविटपकस्यास्य मूले। कृतं सुभ्रु, संभ्रमेण। मा स्म भैषीः स्वल्पमप्यस्मा····ना···· नन्निहावस्थितामुन्मथ्यमानो मन्मथेन न त्वां निमित्तीकृत्याहमायातः। न च त्वदपहारे कृतप्रयत्नः क्रूरात्मा कश्चिदसुरो वा गुह्यको वा

गन्धर्वो वा खेचरो वा भवामि भूमिगोचरः । अहमखिलदिङ्मुखख्यातकीर्तिरखण्डितप्रसरवाहिनीवाहखुरपुटक्षुण्णदक्षिणापरपूर्वजलधिवेलावनस्य सर्वावनिपालमौलिमुकुटघृष्टाङ्घ्रिनखमणेरिक्ष्वाकुवंशालंकारस्य राज्ञो **मेघवाहन**स्यात्मजन्मा **हरिवाहनो** नाम कुमारः कान्तारभूमौ कथंचिद्वीणया वशीकृत्य विधृतमात्मीयमेव सेनावारणं प्रधानमधिरूढो निरङ्कुशः केनाप्यविज्ञाततत्त्वेन व्योमचारिणा वैरिणेव तमनुप्रविश्य भूमिमेतामानीतः । समुत्खातशस्त्रिकादर्शनोपजातसंत्रासेन च सहैव दूरनिर्हारिणार्तनिनादेन मुक्त्वा निरालम्बममृतरला(?)दवाङ्मुखमात्मदेहमिह महासमुद्रगम्भीरोदरे सरसि निक्षिप्तः । समुत्तीर्य च ततो यथाकथंचित्प्रस्थितेन दृष्टा मया दृष्टिहारिणी हरिणाक्षी रमणीयवृक्षगुल्मेऽस्मिन्प्रदेशे सूक्ष्मसिकतायां पुलिनभूमावभिव्यक्तशुभलक्षणा चरणपदपङ्क्तिः । तां च कौतुकादनुसरन्सरस्तीरमण्डनमिमं लतामण्डपमनुप्राप्तः । दृष्टं च भवत्यनुभूतं चिरादनेकजन्मान्तरसहस्रसंचितस्य सुकृतराशेरेककालमवाप्तपरमपरिपाकं फलम् । अवधारितमवधिभावेनाङ्गनारूपनिर्माणकौशलं विधातुः । कवलितोऽगस्त्यचुलुकस्पर्धयेवैकहेलया दूरकृतविस्तारेण चक्षुषा समस्तदिङ्मुखोल्लङ्घ(?)लावण्यजलधेः । निष्फलापि सफलीभूतेयं विदेशयात्रा । सांप्रतं यातुमिच्छामि । पृच्छामि त्वाम् । कथय । कोऽयं जनपदः, किमाख्योऽयमचलः, केन पुण्यात्मना खानितमिदं सरः, कः प्रशास्ति भुवमेतां भूमिपतिः' इत्यादि पृष्टा मया सा कन्यका प्रसत्तिमगमत् ।

अवनतमुखी च स्थित्वा मुहूर्तमदत्तोत्तरैव तस्मादशोकतरुतलादचलत् । आभरणमणिरणितवाचालितलतामण्डपोदरा च किंचिद्वामतः कुर्वती मामभिमुखमगमत् । स्थित्वा च स्थिरद्वारनिकटे मुहूर्तमीषद्वलि-

त्तकंधरा त्रपातरलितमितरेतरतारकाममरनिम्नगातरङ्गतरलायितायामनिर्गच्छदप्रभावच्छादितदिगन्तरां सुधारसच्छटामिव सकालकूटामक्षिपन्मे चक्षुषि मुहुर्मुहुर्मोहाह्लादकारिणीं कटाक्षवृष्टिम्। ततो लक्षिताभिप्रायेण निर्गन्तुमाकाङ्क्षतीयमिति विचिन्त्य स्तोकमपसृतेन मया द्वारि दत्तावकाशा प्रयत्नकृतविवर्तनापि किंचिन्निजैरङ्गावयवैः स्पृशन्ती स्पर्शलोभेनैव समकालोल्लसितसान्द्रपुलकजालकं मदीयाङ्गवामतागमसदमुखवासामोदं च दलितेन स्वाभावसुरभिगोश्वासपरिमलेन पवनलुलितेन च दिव्याङ्गरागसौरभेण समन्ततो वासयन्ती तं वनोद्देशं निर्गता तस्माल्लतामण्डपाद्गता च स्खलितपदसंचारया गत्या प्रावृण्वन्ती वारंवारमुत्तरीयाञ्चलेन स्वेदनिबिडाशक्तसूक्ष्मसुकुमाराम्बरं नितम्बम्। अहमपि तरुस्तम्भान्तरेण तां व्रजन्तीं विरतपक्ष्मस्पन्देन चक्षुषा सरागमीक्षमाणस्तत्रैव देशे क्षणमभीष्टं शंसदुद्विग्नश्चेति चेतस्यकरवम्—'अहो लोकव्यवहारानभिज्ञत्वमस्याः कन्यकायाः, येन द्वारदेशकृतोपसर्पणस्य पुनः पुनः प्रयुक्तप्रियालापस्य दूरदेशागमनखिन्नवपुषः स्वयमाख्यातनिजवृत्तान्तस्य द्रव्यादावदर्शितार्थिभावस्य वचनमात्रेणापि मे न कृता प्रतिपत्तिः। तत्किमनया। अन्यतो गच्छामि' इति चिन्तयित्वा ततः स्थानात्स्वदेशदिङ्मुखाभिमुखस्तस्यैव सरसः सरसशिशिरच्छायतरुणा तीरदेशेन शनैः शनैरचलम्।

प्रस्थितस्य च मे चेतस्यभवत्—'अहो, यत्तत्तदानीमुपवनस्थेन मया तत्र वेत्रधारिनिवेदिते दिव्यचित्रपटे प्रकाशितमदृष्टपाराख्यं सरो दृष्टमासीत्, तदेवैतत्तर्कयामि। यतस्तत्र ये यथादर्शितास्ते तथैवात्र तिलकतालीतमालबकुलाशोकलकुचलवङ्गचन्दनादयः पादपा दृश्यन्ते। यानि च यदाकाराणि यद्वर्णानि यत्क्रमाणि तस्य पर्यन्तेषु विनि-

वेशितानि लतासदनानि सैकतानि देवतार्चनवेदिकावलयानि तान्यपि तथैवात्र परिस्फुटानि प्रतिभान्ति । तत्किं पुनः क्रीडानिमित्तमिह समायाता सापि कन्या । न सा मद्धृदयकुमुदाकरशशाङ्कलेखा तिलकमञ्जरी । दृश्यते हि तेन चित्रपुटपुत्रिकारूपेण सार्धमखिलस्याप्येतदीयाकारस्य संवादः । तथाहि—तादृशी विकचराजचम्पकच्छदावदाता देहच्छविः, तादृगुन्निद्रकनकारविन्दसुन्दरं वदनशतपत्रम्, तादृशस्तुलितकेतकोदरदलद्राघिमा नयनयोरायामः, तादृशां च सकलानामपि नितम्बनाभिमण्डलोदरस्तनाधरप्रभृतीनामवयवानामभिरामता, सर्वतः स्फुरदनर्घरत्नाभरणरमणीयाया वेषलक्ष्म्या अपि तथाभूतमेवौदार्यम् । किं बहुना । विहाय चलनस्पन्दनाढ्यभावमाङ्गिकं प्रमाणमङ्गनापरिवारसंपदं च सर्वमन्यत्संवदति । कथं पुनरनेकविद्याधरीवृन्दसहस्रपरिगतायास्तथा वनेऽवस्थानमेकाकित्वं च तस्याः संवृत्तम् । अथवा नैतदालोचनीयम् । अदृष्टपारे संसारे भङ्गुरस्वभावेषु विभवादिषु सर्वभावेषु कर्मपरतन्त्राणां प्राणिनां सर्वमपि संभवति । यथा मम स्वसैन्यमध्यविहितावस्थितेरकस्मादुत्प्लुत्य कृतवियद्वर्त्मगमनेन दन्तिना कृतापहरणस्य संवृत्तम् । एवं तस्या अपि कथंचिद्भविष्यति । यद्वा युवतिपरिवारोऽपि तस्याः प्रकटितोऽनुमानेन यस्मात्सरस्तीरसैकते तत्र परिसर्पता पूर्वमवलोकितास्तदीयपदपङ्क्तिपर्यन्तेष्वनेकशतसंख्याश्चरणविन्यासा मया स्त्रीजनस्य' इति विचिन्त्य कृतनिश्चयस्तद्दर्शनाशया पुनरपि प्रतीपमगमम् । अनिरूपितविषमसमभूमिभागश्च गत्वा सत्वरस्तं प्रदेशं सर्वतो दिक्षु निक्षिप्ततरलचक्षुस्तस्य सरसः समासन्नवर्तिषु लतामण्डपेषु तरुखण्डेषु नलवनेषु वालुकापुलिनेषु जलजम्बूनिकुञ्जेषु शिलालयनेषु शैलकन्दरेषु वननदीनिर्झरणेष्वन्येषु च मनोरमेषु स्थानेषु तामन्वेषितवान् । अनुपलब्ध-

तदुदन्तश्च किंचित्सावशेषेऽहनि हृतस्तदनुरागेण पुनरपि तमेव पूर्वदृष्टमिष्टज्ञातिगृहमिव निवासहेतोरेलालतामण्डपमुपागमम् ।

दृष्ट्वा च तं नष्टसकलपूर्वशोभं निशामुखमिवास्तमितशशिलेखम्, उदधिजलमिवोद्धृतसुधम्, सौधशिखरमिवापनीतपताकम्, कमलखण्डमिवोड्डीनहंसमालम्, इन्दुवदनया तया विरहितमुपारूढगुरुविषादः स्थितो द्वारदेशे तथैव तां पुरोऽवस्थितां प्रत्यक्षमिवेक्ष्यमाणश्चेतसा सुचिरम् । उत्थाय गत्वा सरसि चिरपरिभ्रमणखेदायासिततलं प्रक्षाल्य चरणयुगलं कृत्वा च किंचिद्देवतास्मरणमभिनवोद्धृतानास्वाद्य कतिचिदपनीतपङ्कोपलेपनिर्मलान्मृणालिनीकन्दानापीय च कराङ्गुलीविवरविगलदिन्दुदीधितिधवलधारं सुधारसस्वादु स्वेच्छया सलिलमात्तकोमलतमालकिसलयस्तस्य प्रियाङ्गलतापरिष्वङ्गसुभगस्य दिव्याङ्गरागपरिमलस्तोकवाहिनो रक्ताशोकविटपकस्य निकटे शयनमरचयम् ।

तत्र च प्रथमदर्शनेऽपि सेयं **चक्रसेन**तनयेति यन्न निर्णीता, व्रीडया साध्वसेन वा नेयमुत्तरं प्रयच्छतीति मन्यमानेन यन्न वारंवारमाभाषिता, विहाय रक्ताशोकविटपकं निकटदेशे कृतस्थिरावस्थाना यन्न करतलेनावलम्बिता, मुहुर्मुहुर्मुखावलोकनेन याचमाना निर्गमनवर्त्म यद्द्वारदेशादीषदपसृते नानुवर्तिता, स्पर्शशङ्काविवर्तिताङ्गलता विनिर्यती बहिर्यत्प्रसारितोभयभुजेन गाढं न परिरब्धा, लब्धसुरभिश्वासपरिमलेन सविधमागतेऽपि वदनस्य परिणतबिम्बपाटले च रमणौ यन्न परिचुम्बिता, गत्वा किंचिदन्तरं विवर्तितमुखी मुहुर्मुहुर्लताजालकान्तरेण स्थित्वा स्थित्वा तिर्यगवलोकयन्ती निर्भरानुरागापि भीतेति यत्संभाविता मुग्धता, निराकृतोचितक्रियाप्रवृत्तिश्च निरनुरोधेति जातावज्ञेन यद्व्रजन्ती पृष्ठतो नानुसृता, तेनानेकजन्मान्तरसहस्रनिर्वर्तितेन

महापातकसमूहेनेवात्यन्तमन्तरानुतप्यमानस्य, संतापवेदनाविनोदाय विहितैर्वारंवारमसमञ्जसैर्गात्रपरिवर्तनैर्व्यस्तशयनीयस्य, निदाघमध्यंदिनानिलस्पर्धिभिरनारतं वहद्भिरायतोष्णैः श्वासमारुतैर्मर्मरीकृतलतापल्लवस्य, लब्धतदीयगात्रसङ्गं वाममङ्गमनङ्गजनितस्वेदसलिलेन दोष्णा दक्षिणेनार्धमुकुलितेक्षणस्य शंभोरिवार्धनारीश्वरस्य, प्रतिक्षणं परिष्वज्यमानस्य घ्राणमुपसर्पता तर्पितप्राणेन रक्ताशोकसङ्गिनः, तदङ्गरागस्य परिमलशेषेण रक्षितोत्क्रामतजीवितस्याश्रुततदीयजल्पं श्रवणयुगमसत्कल्पं कलयतः; निमीलितेक्षणस्य तां सर्वतो दिक्षु पश्यतः, चक्रवाकस्येवैकाकिनः सरस्तीरे निषण्णस्य, कुमुदखण्डस्येव क्वणद्भिरलिकुलैराकुलीकृतस्य, इन्दुना शमितनिद्रस्य मम दर्शनादुदीर्णदुःसहोद्वेगेव दूरानतविपाण्डुशशिमण्डलानना क्षयमगाद्रजनी ।

अथारुणकरपरामृष्टेषु प्रकटयितुमिव मे विषादान्धस्य भुवनाभोगमुज्झत्सु दिग्द्वाराणि शर्वरीतिमिरेषु जलतुषारसारवाहिषु विहन्तुमिव मद्विरहदाहहव्यवाहव्यथां वहत्सु मन्थरप्रभातपवनेषु श्वासशेषावशेषजीवितजीवितमाश्वासयितुमिव मामितस्ततः प्रचलयन्तीषु पल्लवतालवृन्तानि प्रान्तवनलतासु संध्यातपानुरञ्जितपत्रेषु सर्वरात्रजागरणजिह्मारुणाक्षमनुकर्तुमिव मामीषन्निमिषत्सु नीलोत्पलवनेषु अवनितलनिषण्णनिःसहावस्थितेरुत्थापनाय हस्तावलम्बमिव मे दातुमन्तर्लताभवनमन्तरालैरवतरत्सु भास्करकरेषु निराकृतमदीयधैर्योत्कर्षितेन मकरकेतुना समुत्तम्भितासु जयपताकास्विव वियति विततायमानासु सरःशायिसारसक्रौञ्चकलहंसमालासु जाते स्पष्टभासि प्रभातसमये भूयोऽपि तामप्रगल्भमृगशावलोचनामन्वेष्टुमनुसृततदीयपदपङ्क्तिरुदचलम् ।

तां गत्वाथ गुणमध्वनैकेन पुनरपि प्रतिनिवृत्तामुपरि पतितेन पादपप्रसवरेणुना परामृष्टपूर्वदृष्टसकलावयवशोभां क्वचित्सत्वरां क्वचित्सविलम्बां क्वाप्यपथगां क्वचिन्मार्गलग्नां सरलां सैकतषु कुञ्चितां कुशस्तम्बेषु खण्डितां खण्डशैलेषु वलितां वृक्षमूलेषु कुटिलां पङ्कपटलेषु विरलां बालवननदीवेणिकोत्तरेषु स्पष्टामूखरेषु नष्टां शिलाफलकेषु निश्चलया दृशा निपुणमीक्षमाणः पदश्रेणिमेलालतासदनस्य प्रान्तवर्तिषु वननिकुञ्जेष्वतिविरञ्चयवरमुपलब्धपर्यन्तश्च पर्यायेण तस्याः क्षणेनैव शिथिलीभूतसर्वाङ्गसंधिः सविधवर्तिनस्तरोरेकस्य मूले निरवलम्बमात्मानममुञ्चम्। क्रमातिवाहितविततमूर्च्छान्धकारश्च 'किं करोमि, कां दिशमनुसरामि, केनोपायेन तां पुनरपि द्रक्ष्यामि शून्येऽस्मिन्नरण्ये' इति विचिन्त्य वारंवारमुत्थाय च ततो वृथाशया तरलिताशयस्तुङ्गमारुह्य तटमेकमुन्मुखः सकलान्यपि समन्ततो दिङ्मुखान्यवलोकयम्। अपश्यं च तस्य सरस उत्तरे तीरे दूरतः श्रूयमाणमुखरपक्षारवमेकहेलयोत्पतितमन्तरिक्षे दिङ्मुखान्याश्रयन्तं जलपतत्रिणां समूहम्। उपजातकुतूहलश्च तेन तस्याकस्मिकक्षोभेण गत्वा दृष्ट्वा च सर्वतो दत्तनिपुणदृष्टिस्तं प्रदेशमकरवं मनसि—'हन्त, यथेदमतिदूरसीमन्तितसान्द्रशैवलप्रतानमभिनवोपलक्ष्यमाणकोमलमृणालिकाभङ्गमसकलप्रशान्तपङ्ककलङ्कधूसरसरस्तीरसलिलम्, यथा सरसकर्णिकावलयैरविवर्णकेशरकलापैर्विकाशदूरोत्तानपत्रपङ्क्तिभिस्त्रुटितनालैरपि सरोरुहैरलंकृतेयं पुलिनभूमिः, यथा तोयार्द्रपदपङ्क्तिमुद्रितरेणुषु मार्गो दृश्यते तथा तर्कयामि सांप्रतमेव कृतप्रातःस्नानो दत्तदिनकरार्घाञ्जलिः पुरुषेषु नारीषु वा गतः स्थानादितः कोऽपि निजमावास इति संप्रधार्योदङ्मुखस्तेनैव दृष्टेनाध्वना स्तोकमव्रजम्। अपश्यं च तं दिगन्त-

रव्यापिना दीप्तिनिवहेन दूरत एव सिन्दूरितनभोभागं पद्मरागशिलामयं प्रासादम्, यदीयपर्यन्तोपवनमध्यवर्ती गन्धर्वकोपदिष्टवर्त्मना मम ........दृष्टस्त्वयाहम् । प्रविश्य च तत्र कृतदेवतानमस्कारो नातिनेदीयसि शिलामण्डपद्वारस्य मणिशिलादारुमत्तवारणे समुपाविशम् । अपश्यं च तत्राष्टादशवर्षदेशीयामचिरस्नापितस्य विकसितोत्तानपत्रप्रान्तविगलदमलोदबिन्दुभिस्तत्क्षणप्रतिबुद्धानामुद्यानदीर्घिकाजलदेवतानामीक्षणप्रवृत्तजृम्भिकाश्रुकणिकैर्मुखप्रतिबिम्बैरिव सद्यो जलादुद्धृतैः कनकारविन्दैरुपरचितपूजस्य तत्क्षणोत्क्षिप्तधूपवर्तेर्युगादिजिनबिम्बस्य पुरतो नातिनिकटे समुपविष्टामभिमुखीमबद्धपद्मासनामतिस्थिरतया कायस्य लिखितामिवोत्कीर्णामिव निखातामिव स्तम्भितामिव विभाव्यमानामायतनभित्तिसंरोधसंभृतस्य निजदेहप्रभाप्रवाहस्य मध्ये मुग्धशशिकलामिदुग्धाब्धिपयसः कृच्छ्रेणोपलभ्यमानावयवामच्छललाटलावण्यलीनमतिव महाभोगमपि भगवतो युगादिजिनस्य बिम्बमल्पाश्रयावस्थापनेन तन्निमानमानीय भक्त्यतिशयादिवोत्तमाङ्गेनोद्वहन्तीं पृष्ठपीठावलम्बिना विरलविरलस्नानजलबिन्दुदन्तुरेण शापदानाशङ्किनेव मन्दमन्दमायामिना केशभारेण स्पृश्यमानपृथुनितम्बभारामनवरतमन्त्रोच्चारविघटितोष्ठपुटनिष्ठ्यूतैरमलकान्तिभिर्दन्तकिरणैर्ध्यानमुकुलितापाङ्गेषु संगलितमुत्सारयन्तीमग्रतो गर्भगृहगोचरं ध्वान्तजालमामलकीफलस्थूलमुक्ताफलग्रथितमधोमुखमयूखेन चक्षुषा लक्षीकृतमक्षसूत्रमङ्गुष्ठलतया मन्त्रपाठपरिसमाप्तौ दक्षिणाग्रकरपरिगृहीतमावर्तयन्तीं दिव्यतरुवल्कलदुकूलनिवसनामेकामखिललोकत्रयातिशायिरूपां तापसकन्यकां व्यलोकयम् ।

तस्याश्च चक्षुराह्लादकारिणा दर्शनेन दूरोल्लसितचेताः पुनरचिन्तयम्—

दत्तं पत्रं कुवलयततेरायतं चक्षुरस्याः

कुम्भावैभौ कुचपरिकरः पूर्वपक्षीकरोति ।

दन्तच्छेदच्छविमनुवदत्यच्छता गण्डभित्ते-
श्चान्द्रं बिम्बं द्युतिविलसितैर्दूषयत्यास्यलक्ष्मीः ॥
अस्या नेत्रयुगेन नीरजदलस्रग्दामदैर्घ्यद्रुहा
चञ्चत्पार्वणचन्द्रमण्डलरुचा वक्त्रारविन्देन च ।
स्वामालोक्य दृशं रुचं च विजितां तुल्यं त्रपाबाधितै-
र्बद्धा निर्जनसंचरेषु कमलैर्मन्ये वनेषु स्थितिः ॥

अथासौ मुनिकन्यका समाप्तमन्त्रजपविधिरुत्थाय कृतदेवताप्रणामा गृहीतपुष्पपटलिकया पृष्ठतः परिचारिकयानुगम्यमाना हसितमदमत्तहंसगतिभिर्निर्गत्य मन्थरैः पदन्यासैरायतनपर्यन्तवर्तिषु प्रासादकेषु प्रतिष्ठिताजिनप्रतिमाः क्रमेणापूपुजत् । कृतप्रदक्षिणा मूलायतनस्य समुपेत्य पुरतो मे बभूव । दृष्ट्वा च सुचिरमुपरतनिमेषावेशमाकृतिविशेषं च रचितकरसंपुटास्वागतशब्दपूर्वमभ्यधित—'महाभाग, भाग्यैर्मादृशामिहानीतोऽसि । उत्तिष्ठ । सर्वदा सुखोचितामपि देहि कतिचित्पदानि गमनखेदस्य तनुम् । अनुगृहाण दर्शनेन वनवासिनोऽस्य जनस्य वसतिम्' । इत्यभिहितोऽहं तया ससंभ्रममवतीर्य मत्तवारणात्प्रणम्य बद्धाञ्जलिः 'यथादिशसि' इत्युदीर्य तन्मार्गमनुसरन्यत्रागतेन त्वया गन्धर्वको दृष्टस्तमेव त्रिभूमिकं मठमागच्छम् । प्रथममारूढे च मयि सा तापसकन्यका समारुह्य नागदन्तावलम्बितनिबिडवल्कलास्तरणायां भित्तिमूलघटितोत्तानगण्डोपधानपट्टायामचिरप्रमृष्टकुट्टिमशुचौ शयनशालायामवस्थापिताक्षमाला निर्गत्य धौतकरचरणयुगलां कमण्डलुजलेन सकलामपि ममार्घादिकामतिथिपूजामकरोत् । स्वहस्तोपनीतरुचिरपट्टासनया च तया पुरः सविनयमुपविष्टया विलम्ब्य क्षणं पृष्टः सकलमपि संक्षिप्य निजवृत्तान्तमावेदयम् । द्विगुणमुपजातपक्षपाता च सा तदाकर्णनेन तत्काल-

मागत्य द्वारदेशे दत्तदर्शनामध्वरेणुधूसरचरणयुगलां कन्दफलमूलपूर्णमभिनवं पलाशपत्रपुटकमुद्वहन्तीं वनान्तरादागतां परिचारकामवलोक्य मामवोचत्—'राजपुत्र, निरन्तरलतागुल्मगहनान्तरितदर्शनस्य वननिवासिनस्तपस्विलोकस्य कृताकृतमिव ज्ञातुमम्बरशिखरमारूढोऽयमखिलजगतः कर्मसाक्षी भगवानुष्णरश्मिः। गन्तव्यमधुना मया मध्याह्नकालक्रियाकरणाय वनमध्यम्। त्वमप्युत्तिष्ठ सहितो मयैव। अनुतिष्ठ मध्यंदिनकृत्यम्। आसन्नवर्ती भोजनसमयः' इत्यभिधाय चलिता। आगता च क्रमेण रमणीयपरिसरामेकामरण्यसरसीम्। तस्याश्च पृथुलमणिशिलासोपाननद्धे तीर्थरोधसि कृतावस्थानो स्थापयित्वा कमण्डलुमादाय कुसुमान्यासन्नजाताभ्यो वनलताभ्यो निक्षिप्य सलिलक्षालितेऽन्यतमसोपाने कृतस्नाना दत्तदिनकरार्घाञ्जलिर्जपन्ती पवित्राणि गायत्रीपदानि तावदास्त, यावन्मे देवतार्चनकर्मनिर्माणमगमत्। अवसिते च तस्मिन्नुत्थाय सा प्रथममेव प्रक्षाल्य पुलिनभूमावुद्धापितं परिधाय हंसधवलं दिव्यतरुवल्कलांशुकमन्तिकं मे समागच्छत्। उपनीतपत्रपात्रा च पुरतो निविश्य सादरं स्वहस्तेनापवर्जितैः सुधारसस्वादुभिः सुरलोकपादपफलैर्विधाय मामपगताहारवाञ्छमच्छशिशिरेण सरसाम्भसा कारितोपस्पर्शना मदुपनीतशेषं कन्दमूलफलमास्वादितवती भुक्तावसाने च विहितेतिकर्तव्या समागत्य नातिनिकटे ममोपाविशत्।

स्थित्वा च कंचित्कालमवचना पूर्वदृष्टमिव सहसंवृद्धमिव दृढमारूढप्रणयमिव चिरसमागतमभीष्टबन्धुमिव सस्नेहमवलोकयन्ती पुनः पुनर्मां तमेव पूर्वमावेदितं विस्तरेण द्विपापवारवृत्तान्तमपृच्छत्।

दृष्ट्वा च तां तथाविधामतिरेकमन्तःप्रकटितप्रीतिमुत्पन्नदृढतरसौहृदोऽहं सोद्वेगमवदम्—'महाभागे, नैसर्गिकान्तःस्वच्छतापिशुनेन

प्रणयिहृदयाह्लादकारिणा सर्वत्रैवोपलक्षितपक्षपातेन तवामुना शीलेन तरलतां नीतो न शक्नोमि निभृतः स्थातुम्। येनात्मनो महिमानमिच्छता पुरुषेण पूर्वं वयस्यपूर्वा सर्वापि परयोषित्प्रायशो न बहु भाषणीया। विशेषतः प्रथमयौवना व्रतस्था यतात्मनामपि मोहविकारहेतुरेकाकिनी रूपलावण्यादिगुणगणावासस्त्वादृशी' इति विद्वानपि भवत्याः प्रवृत्तोऽहं प्रश्नकर्मणि। कथय का त्वम्। कस्मिन्नखिलदोषमुक्ते मुक्तेव देवारण्यवंशे वंशे समुत्पन्नासि। कानि ते हृदयदाहज्वरहराणि दिव्यमन्त्रपटानीव नामाक्षराणि क्षरन्ति कर्णयोरमृतम्। केनात्र तव वपुषि देवाङ्गवसनार्हे गर्हणानपेक्षेण विनिक्षिप्तान्यमूनि वृक्षाणां वल्कलानि। किं फलमतिशयस्वादुरसमभिलष्य विरसान्यनुदिवसमश्नासि वन्यद्रुमफलानि। केन हेतुना विहाय विख्यातानि वैखानसाश्रमपदानि निर्जनारण्यवासिनी शून्यमेतज्जिनायतनमधिवससि। किं चैष विषमसायकैकाधिवासे नवे वयसि विषयोपभोगविद्वेषः। किं चानुवेलस्पन्दिताधरपुटा प्रष्टुकामेव वार्तामिष्टजनस्य कस्यचित्प्रीतिविशदैर्दृष्टिविक्षेपैः सरभसमवेक्षसे दक्षिणां ककुभम्। कांचिदास्ते कश्चिदिह गोत्रजः सुहृद्वा हृदयभूतः' इति वदत्येव मयि सहसैव तस्याः प्रकम्पितपयोधरो विधुतगलसरणिरतिपरिस्फुटस्फुरितनासापुटः प्रयत्नरुद्धोऽपि विषवेगवद्व्यापदङ्गमतिक्रान्तवैभवस्मरणयोनिमन्युरब्जवनमिव प्रदोषहिमजलेन मुकुलीभूतमीक्षणयुगमपूर्यत विसारिणा बाष्पनीरेण। तत्क्षणनिबद्धरागायाश्च लोचनापाङ्गसरितः पूर्वहरित इव तरुणारुणज्योतिराहतायास्तारकासमूहः पपाताजस्रमश्रुकणविस्तरः। तां च दृष्ट्वा तथाविधामन्तरुपजातगुरुविषादो मनस्यकरवम्—'अहो पूर्वजन्मान्तरसंचितैरशुभकर्मभिरायोजिताः सुनिपुणमपि निरूपितोपा-

यैर्मनीषिभिरनीषत्कराः परिहर्तुमुपतापाः, येनेयमपहाय परमसंक्लेशहेतुं सकलसङ्गमेकाकिनी विगतमर्त्यसंचारे गुरुणि गिरिकान्तारे कृतस्थितिरनेकयोजनशतव्यवहितमेकदेशेनैव संयोज्य मामीदृशस्य मानसदुःखभारस्य भाजनं कृता महानुभावा दैवेन' इति सोद्वेगविस्मयः समाश्वास्य तां सुचिरमुत्थाय च कराञ्जलिपुटावर्जितं दीर्घिकाजलमुपानयम् । सापि किंचिद्विरलशोका बाष्पजलपरिप्लुतारापक्ष्मा भालं प्रक्षाल्य तेन प्रमृद्य चोत्तरीयपल्लवप्रान्तेन वदनमुत्सृष्टदीर्घनिःश्वासा विलम्ब्य कंचित्कालमुपचक्रमे वक्तुम्—'कुमार, निर्जनारण्यवासिनो जीर्णवल्कलनिवसनस्य वन्यफलभुजः स्थण्डिलातिवाहितनिशासमयनिद्रस्य दुष्कृतकारिणो मद्विधजनस्य प्रागवस्थोपवर्णनमतिशयेन व्रीडाकरम् । पृष्टा च त्वयाहम् । अतो न तूष्णीमासितव्यम् । किं नु सर्वदा सुखोचितस्य तेन किंचिदनेकदुःखपरम्पराविरसेन श्रुतेनानेन फलम् । अथ कुतूहलं ततः शृणु । निवेदयामि । यात्वनेनैव तावद्विनोदेन सर्वदैव दुःखोपतप्तायाः दिनमिदं मे । त्वमपि भुवनत्रयप्रथितमहिमा महामेदिनीपालसूनुः समानदेशावाप्तजन्मा कथंचिद्गृहमुपागतः प्राप्नुहि जनान्निः किंचनादपूर्वं तावदिदमेवातिथ्यम्' इत्यभिधाय भूयः कृताश्रुपाता शनैः शनैरारभत कथयितुम्—

अस्ति निजशोभाजितसमस्तभुवनान्तःपुरा महादेवीव सकलभूचक्रवर्तिनो मर्त्यलोकस्य लङ्केव लवणसागरेण त्रिदशनगरीवान्तरिक्षेण कृतपरिकरा, मकरकुलीरमीनराशिसंकुलेन परिखामण्डलेन कुण्डलितसागरप्रत्ययस्य सर्वतः प्रेङ्खतः परिखाजलप्राग्भारस्य तरङ्गविक्षिप्तेन फेनविसरेणेव दिवसैः स्फातिमुपगतेन स्फाटिकधवलभित्तिना प्राकारेण परिवृता, विधृततटसाधर्म्यहर्म्यावली धृतोभयविभागैरजिरपुञ्जितप्राज्यर-

त्नप्रभाजालजलनिर्भरैरनवरतवहत्समुद्रयायिजननिवहकलकलाक्रान्तदिक्चक्रैः क्षितिरिव प्रलयमहापगास्रोतोभिः समन्ततः सीमन्तिता, विशालायतैर्विपणिपथैरावासितशरज्जलदशिबिरेव सुरमन्दिरैर्बन्दीकृतसमस्तभोगभूमिरिव परिसरारामैरेकीकृताशेषविषयान्तरेव सर्वदेशभाषाश्रुतिभिरुद्घाटितसमग्रासुरविवरेव विलासिनीवासभवनैरनतिदूरवर्तिनी दक्षिणोदधेरपरधनकनकसंचया नाम नगरी। यत्र नागवल्लीलालसा धनिन उद्यानपालाश्च, परमतज्ञाः पौराः प्रामाणिकाश्च, सफलजातयः श्रोत्रिया गृहारामाश्च, हरिद्रासान्द्ररुचकयो रागिणः सुवर्णचम्पकस्तबकनिचयाश्च, प्रगुणविशिखा गृहनिवेशाः सुभटबाणधयश्च, आबहुमालिकाः प्रासादाः प्रकृतयश्च, संकुचितालकाः प्रधानापणाः प्रमदाललाटलेखाश्च, सुराभिरामाभिरुचितकारिण्यः पण्यवनिताः पौरयुवतयश्च। यत्र नारङ्गपनसकदलकप्रायमशनम्, नालिकेरीफलरसप्रायं पानम्, मुक्ताफलप्रायमाभरणम्, कृपाप्रायं धर्मानुष्ठानम्, दानप्रायं कर्म, सत्यशौचप्रायमाचरणम्, शास्त्रविचारणप्रायो विनोदो निवासिलोकस्य। यत्र मुग्धता रूपेषु न सुरतेषु, हरिद्रारागो देहेषु न स्नेहेषु, बहुवचनप्रयोगः पूज्य नामसु न परप्रयोजनाङ्गीकरणेषु, विभ्रमो रतेषु न चित्तेषु। यत्र मन्दिरोपवनान्यावासनगराणि, तमालतरुनिकुञ्जाः सदनानि लवङ्गपल्लवस्रस्तराः पर्यङ्काः, प्रणयकलहाः कलयः, नखदशनविन्यासाः शरीराभरणमणयः, प्रियावदनशतपत्राणि पानपात्राणि, कामसूत्रमध्यात्मशास्त्रम्, वाजीकरणयोगोपयोगो व्याधिभेषजम्, अनङ्गपूजा देवतार्चनम्, सुरतदूतिकागुरवो भुजङ्गवर्गस्य, यत्र हृन्मर्मभेदिनः कटाक्षाः कुसुमेषवः, लवङ्गकक्कोलपरिमलवाही मुखानिलो मलयसमीरः, स्फुटितकुमुदोज्ज्वलः सितालोकश्चन्द्रोदयः, सच्छायतनुलताभिगमो नवयौव-

नावतारो मधुसमयः, चित्तोन्मादकारिणी वचनचाटुपद्धतिर्मदिरा, कोकिलध्वनिकला कृतककोपहुंकृतिः पञ्चमोद्गारः, इति केवलासु प्रमदासु परिसमाप्यते समस्तापि जैत्रा तन्त्रसामग्री कुसुमकार्मुकस्य। यत्र मधुकरध्वनिपटुहुंकाराणि समुल्लसत्सरससहकारमञ्जरीतर्जनिकानि कृततर्जनानीव प्रियकरोत्क्षिप्तासु मुक्ताशुक्तिषु विलोकयन्ति तालफलरसमधूनि ध्वस्तमानावलेपा विलासिन्यः। यत्र सुलभनागवल्लीदलार्द्रपूगीफलानि क्वणत्कुररकुलकलध्वनिवर्धितानङ्गोत्साहानि संनिहितचन्दनशिशिरदीर्घिकातरङ्गपवनानि वनानि निधुवनानि च निषेवन्ते समं वनितासखाः सुखिनः। यत्र सायंतनस्नानार्द्रवपुषां द्रविडयोषितामसान्द्रलग्नस्य हरिद्राद्रवरसस्य छायया पिञ्जरिततनुकिरणकन्दलो दलितचम्पककर्णपूरमनुकागतिकपोलदर्पणावलम्बी पार्वणो रजनिजानिः। यत्र तीरामन्नजातानां कतकविटपिनामनारतं गलद्भिः फलैः प्रशमितपङ्कोदयानि निर्दयास्वपि कामिमिथुनमज्जनकेलिषु कालुष्यं नानुभवन्ति भवनदीर्घिकाजलानि यत्रैलालतासदनासूत्रितविचित्रमोहनाभिर्द्रविडयुवतिभिः प्रियेषु प्रयुज्यमानं बहुप्रकारमुपगूहनोपचारमुपशिक्षितुमिव क्रमुकवृक्षकानावेष्टयन्ति कृतविचित्रवलना नागरखण्डपत्रवल्लयः। यत्र च युवजनेन दयिताकपोलदशनच्छेद्यविद्यामभ्यसितुमनुदिवसमाच्छिद्यमानानि परिकरमितान्यपि न यान्ति परमपरिपाकमजिरसहकारशाखिनां फलानि।

तस्यां च निजविभूतिजितसुरेन्द्रसदनसौन्दर्यायां नगर्यामपवार्यविस्फूर्जथुपृथुप्रतापवज्राग्निजनितसकलारातिकुलपर्वतप्रमाथः स्वर्णाथ इव पार्थिवश्रीपरिभोगवाञ्छया प्रच्छादितसहजरूपो रूपलावण्यलघूकृतकुसुमायुधो धृतायुधैकदक्षिणबाहुसाहायकप्रसाधितानन्तप्रान्तदेशो देशोत्तरभ्रान्तशशिकरावदातकीर्तिर्नीतिशास्त्रशाणानिशितनिर्मलप्रज्ञा

षरामर्शपरशुशातिताशेषविजिगीषुविजयोद्यमद्रुमः कल्पद्रुमः क्रमागतलोकानां वज्रपञ्जरो भीतानामुत्तम्भनस्तम्भो निजवंशवेश्मनः समीरो वैरिसुन्दरीसीमन्तसिन्दूरस्य क्रूरग्रहदृष्टिपातो दुष्टनिग्रहक्रियायामुदात्तनिजचरितचारणीकृतखेचरगणो गुणगरिमातिरेकतृणीकृतभरतसगराद्यादिराजो राजा **कुसुमशेखरो** नाम । यस्य मलयाचलस्येव पूर्वापरदिगन्तलब्धायतेर्दक्षिणोदधिवेलावनं व्यापदखिलमपि कटकविस्तारः । येन चाप्रयत्नभग्नसंततवर्धिषु भूभृत्तदुन्नतिना भुवनत्रयाभिनन्दितोदयेन कुम्भयोनिनेव स्वसाधिता पवित्रिता च दक्षिणा दिक् ।

तस्य तेजस्विवर्गाग्रेश्वरस्य सकलगुणनिधिरीदृशी विगतलक्षणाहमधमाशुशुक्षणेरिव धूमवर्तिरासन्नवर्तिनां जनानामश्रुपातकारणमेकैवात्मजा जाता माता तु मे सर्वान्तःपुरपुरंध्रिमुख्या महादेवी महिम्नां धाम **गन्धर्वदत्ता** नाम । किं च ।

भित्त्वा संपुटमोष्ठयोर्न हसितं निःशङ्कगोष्ठीष्वपि
  भ्रान्तं न त्वरितैः पदैर्गृहनदीहंसानुसारेष्वपि ।
साधं पञ्जरसारिकाभिरपि नो भूयस्तया जल्पितं
  न········तिलकद्रुमेष्वपि चिरं व्यापारिता दृष्टयः ॥

पर्यङ्काग्रात्क्षणविनिहितः काञ्चने पादपीठे
  रक्ताशोकप्रहतिविहितोग्रापराधः क्रुधेव ।
वामो यस्याः प्रणतिचटुलैः क्षोणिपालाङ्गनानां
  कर्णोत्तंसद्रुमकिसलयैस्ताडितः पादपद्मः ॥

यस्या ललाटे सदृशद्युतित्वादस्पष्टचामीकरपट्टबन्धे ।
अनर्ति सूक्ष्मालकवल्लरीणां मालारिबन्दी व्यजनानिलेन ॥

या च त्रिभुवनख्यातविद्याधरवंशसंभवा भवानीव शंभोर्द्वितीयापि भर्तुरेकं शरीरमभवत् । जातमात्रायामेव मयि समस्तदैवज्ञाग्रतःसरेण सकलनिमित्तशास्त्रतत्त्ववेदिना सहस्रशःसंवादितादेशतया परं संमतेन वसुरातनाम्ना सांवत्सरेण स्फुटीकृत्य तात्कालिकग्रहाणां दशाफलमानन्दाश्रुजलपरिप्लुतेक्षणेन क्षोणीपतेः पुरः स्पष्टाक्षरमिदमादिष्टम्—'एषा कन्यका निकामं पुण्यभागिनी भाजनं भविष्यति भूयसामुपभोगसौख्यानाम् । ईदृशे च लग्ने लब्धमनया जन्म । योऽस्याः करं ग्रहीष्यति स हेमकूटादिकुलशैलकटकनिविष्टविद्याधराङ्गनोपवर्णितपुण्यचरितप्रशस्तिना पराक्रमाक्रान्तसकलदिक्चक्रेण महानरेन्द्रचक्रवर्तिना संक्रमितनिखिलनिजराज्यभारश्चतुरुदधिरसनागुणायाः क्षितेराधिपत्यं करिष्यति' इत्येतच्चाकर्ण्य कर्णपरम्परया सर्वेऽपि नगरीनिवासिनः प्रधानपौराः परां मुदमवापुः । अमन्द्रसंभ्रमाकुलाश्च तत्कालमेव प्रत्यापणं प्रतिगृहं प्रतिचत्वरं प्रत्यायतनमनिलनर्तितविचित्रचीनांशुकव्रजान्ध्वजानाबबन्धुः । बन्धुतेव प्रतिगृहं गृहीतविकटप्रसाधना धिन्वन्ती मङ्गलगीतिभिर्जगज्जगौ जनता । निष्पर्यायमाहताभिरानन्दतूर्यसंहतिभिरुच्चैस्तरोऽपि चारणानामारवः श्रवसि निविशमानश्चस्खाल मदविशृङ्खलपदक्षेपक्षोभितकाञ्चयश्च सह भुजङ्गजनेन ननृतुर्नृपाङ्गणेषु गणिकाः । तातोऽपि तोरणबद्धहरितचन्दनमालमुद्दामगन्धोदकच्छटाविच्छर्दविरजीकृताजिरमुपरचितमौक्तिकचतुष्कं पातितविचित्रपुष्पप्रकरमागत्य मातुर्मे भवनमनेकराजलोकपरिवृतः पुत्रजन्मसदृशमतिमहान्तमुत्सवमकारयत् । अतिक्रान्ते च दशमेऽहनि समागतसमस्तज्ञातिलोकः प्रवर्तितमङ्गलोपचारः स्वगोत्राचारकर्मण्यतिसादरो मलयसुन्दरीति मे नाम कृतवान् ।

अथाहमनुदिनोपचीयमानसुकुमारावयवा चन्द्रमूर्तिरिव दूरस्थितापि दर्शनेनाप्याययन्ती पुरजनं पदे पदेऽनुगम्यमाना पृष्ठतो हसिते

चुम्ब्यमाना कपोलयोः, रुदिते विनोद्यमाना विचित्रक्रीडनकैः, स्खलितेऽनुभाव्यमानावतारणकमङ्गलानि, गदिते सहासमारोप्यमाणा वक्षसि क्षितिपाललोकेन, रक्ष्यमाणा च राज्यलक्ष्मीरिव सततमप्रमत्तैः शस्त्रपाणिभिर्वीरपुरुषैः, शैशवमतिवाहितवती। उचितसमये च यथाशक्त्याधीतराजकन्यकोचितविद्या सोपनिषदि नाट्यवेदे गीतवाद्यादिषु च कलासु कृतपरिचया विनयपरतया पितुरेकापत्यया मातुर्वत्सलतया ज्ञातिपक्षस्य दाक्षिण्यनिघ्नतया परिजनस्य प्रियंवदतया पौरलोकस्य परां चक्षुःप्रीतिमादधाना क्रमेण निर्वापकमविप्रयुक्तरागिमिथुनानां संतापकं दरिद्रकामिहृदयानां प्रसाधकं कुरूपाणामध्यापकमशेषविभ्रमकलानां सन्नद्धोन्नतपयोधरं वर्षासमयमिन्द्रियस्रोतसां विस्तारितकुमुदविशदस्मितं प्रदोषागमं लावण्यचन्द्रोदयस्य वलितरङ्गितमध्यसरणिं क्रीडारामं विषमबाणस्य पुलकजाड्योत्कम्पादिविकारबहुलं शिशिरावतारं तरुणजनहृदयतामरसानां प्रपञ्चितचतुरोक्तिमग्रदूतं प्रगल्भतायाः उदीरितोत्कलिकासहस्रं प्रलयकालं रागजलधेरङ्गीकृतवती नवयौवनावतारमङ्गैः। सर्वदा च विस्तारितकलाशास्त्रविनोदेन सदृशवयसा सदृशरूपलावण्येन सदृशवस्त्रभूषणादिवेषपरिच्छदेन प्रियवादिना विदग्धेन स्निग्धेन सध्रीचीजनेनामुक्तसंनिधिरविदितप्रणयिसार्थप्रार्थनाभङ्गदुःखान्यनुभूतभोगचिन्ताज्वरजागराणि धृतिमयानीव निर्वृतिमयानीव कतिचिद्दिनान्यनैषम्।

एकदा च प्रदोषसमये निजप्रासादस्य शिखरशालायां प्रसुप्ताहमाहतानेकपटहझल्लरीमृदङ्गझात्कारमुखरेण श्रवणहारिणा दिव्यतूर्यनिनादेन निद्रामसुञ्चम्। उन्मीलितलोचना च सहसैव सुरविमानसंनिभस्य नभस्तलोल्लेखिशिखरोन्नतेरतिविपुलावकाशोदरस्य साक्षादिव दिवसकरमण्डलस्य तत्कालसंनिहितपन्नगेश्वरश्वासपवनै रसातलान्मर्त्यलोकमानीतस्य

किमपि विस्मयनीयाकृतेर्मणिशिलामयस्य जिनवेश्मनः कोणैकदेशे निषण्णमासन्नवर्तिनीभिरूर्ध्वस्थिताभिश्च वातायननिविष्टाभिश्च गृहीतचिन्तामौनाभिश्च शनैः कृतमिथःसंलापाभिश्च साध्वसनिरुद्धशरीरचेष्टाभिश्च जनशब्दश्रवणसावधानाभिश्च वामहस्तपर्यस्तवदनव्यञ्जनव्यञ्जितविषादाभिश्च तत इतः प्रहितविकाशोत्तानयनसूचितान्तःकौतुकाभिश्च महार्हवेषधारणीभिरसाधारणरूपशोभाभिर्निर्भर्त्सितसुराङ्गनाकाराभिराकारसंभाव्यमानमहाभिजनप्रसूतिभिर्नरेन्द्रकन्याभिः परिवृतमात्मानमपश्यम् ।

दृष्ट्वा च समुपजातचित्तसंक्षोभा 'किमेतत्' इति चिन्तयन्ती सत्वरमुत्थाय संयतशिथिलकुसुमापीडा निबिडितपरिधाननीविरवच्छाद्य सत्वरं सव्येतरकरावर्जितेनोत्तरीयवाससाङ्गमङ्गीकृता युगपदुत्थितैः साध्वसप्रमोदविस्मयादिभिर्भावैः स्तम्भितेव लिखितेव संयतेवोत्कीर्णेव मुहूर्तमतिष्ठम् । अनवलोकयन्ती चात्मनो भवनं चित्रशालिकां शयनीयमालीजनं परिजनं च जातविस्मया 'कच्चिन्मया स्वप्नोऽयमनुभूयते, विभ्रमो वायमिन्द्रियाणाम्, इन्द्रजालं वा केनाप्युपदर्शितमेतत्' इति पुनः पुनश्चिन्तयन्ती चकितचकिता द्वारदेशमागमम् । एकपार्श्वावलम्बिनी च विलम्ब्य तत्र क्षणमात्रमुत्सृज्य पर्यायेण स्त्रैणसहजं साध्वसमाधाय मनसि धैर्यमग्रतः प्रत्यग्रविरचितस्य लम्बितविचित्ररत्नदाम्नो देवाङ्गपटवितानकावगुण्ठितसकलक्षणस्य तत्क्षणानीतसमुद्रविद्रुमद्रुमदारुनिर्मितोदारमकरतोरणस्य द्वारदोलायमाननन्दनोद्यानतरुतरुणमणिप्रवालचन्दनमालस्य गगनमन्दाकिनीकनकारविन्दकृतनिरन्तरोपहारस्य हसत इवावचूलहारैर्नृत्यत इव ध्वजांशुकैर्गायत इव भृङ्गाङ्गनारावैर्विलोकयत इव मणिप्रदीपैश्चुम्बित इव मुखप्रतिबिम्बग्राहिभिः स्फटिकदर्पणैराश्लिष्यत इव दूरप्रसारितकरैश्चामीकरस्तम्भैर्जनसमाजं सीम्नः समस्तरमणी-

यानां धाम्नस्त्रिभुवनाद्भुतानामतिमहावकाशकुक्षेर्माणिक्यमण्डपस्यैकदेशमनेकदिव्यनरनारीनिकुरम्बसंबाधमध्यासितवती। सर्वतः प्रहिततरुणलोचना च तत्कालमङ्कुरितेन कौतुकेनैकदेशस्थितामार्यरूपधारिणीमेकामतिक्रान्तबहुवयसमङ्गनामुपगम्य सविनयमपृच्छम्—'आर्ये, क एष कमनीयताकदर्थितसकलपृथ्वीदेशप्रत्यादेश इव गीर्वाणभूमेरतिसेव्यसंनिवेशः प्रदेशः। क एते चित्ररत्नाभरणरमणीयाः कल्पधारिणः कल्पतरव इव जङ्गमाः सौम्याकारवपुषः पुरुषाः। कश्च किंनामधेयोऽयमेषां सव्यवर्ती मर्त्यलोक इव जगतां मेरुरिव मेदिनीभृतां महात्मा भूमिपतिः।' इति पृष्टा च सा निश्चलनिहितदृष्टिरतिचिरमवलोक्य मन्मुखं सकरुणमवादीत्—'वत्से, किमन्यदेशागता त्वम्। अत्रत्या न भवसि येनैवमभिदधासि शृणु। निवेदयामि। एष भूषणं सर्वद्वीपानां **पञ्चशैलो** नाम दक्षिणस्य सलिलराशेरन्तरद्वीपः इमेऽपि सत्त्वसाहसैकधनाः प्रसाधनाराधनविधिविधेयीकृतविविधविद्यासंपादिताद्भुतसिद्धयो वैताढ्यगिरिनगराश्रया गगनचारिणः। विद्याधरोऽसावप्यमीषामधिपतिः प्रतापितानामग्रणीर्धर्म इव मूर्तिमानार्तजनशरण्यः शासिता दुर्वृत्तानां निर्वृतिपुरं भीतानामद्भुतपराक्रमश्चक्रवर्ती**विचित्रवीर्यो** नाम।

अथ सहसैव कनकवेत्रलतापाणिरेकः पुमानुदारगम्भीराकृतिरुपसृत्य तं **विद्याधरपतिं** व्यजिज्ञपत्—'देव, दीयतामितः क्षणं दृष्टिः। येयमभिनवप्रियङ्गुमञ्जरी पिशङ्गावदातदेहा कनककमलचापयष्टिरिव हरहुताशनप्लुष्टसकलमलकलङ्का कुसुमकार्मुकस्य निजत्विषा तिरस्करोतीव मणिप्रदीपान्, इयमखिलावनिपालतिलकस्य यौवनोपचयपीनपार्श्वाललनाकुचोत्साहलालितपृथूरस्थलस्य **कुशस्थलपतेः** **प्रतापशीलस्य** **कुसुमावली** नाम। इयं च मार्जितमणिप्रदीपदीप्तदेहा स्वदेहच्छायया

विच्छाययन्ती विद्याधरीगणमग्रतो निषण्णास्ते, एषापि **यदुनरेन्द्रवंश-विशेषस्य** महेन्द्रमलयाद्रिमध्यवर्तिमेदिनीपालमौलिसंघट्टमसृणमाणिक्य-पादपीठस्य हठगृहीतसकलदुष्टारातिकोशकाञ्चनस्य **काञ्चीपतेः कुसुम-शेखरस्य मलयसुन्दरी** नाम। या च निजसौन्दर्यनिर्जिताप्सरोरूप-विभ्रमा लक्ष्मीरिव क्षीरसिन्धुफेनपटलस्य पट्टांशुकवितानकस्य तलभागे तरलतारकमवलोकयन्ती वामतोऽवलोक्यते, एषाप्यशेषविद्वज्जनस्वयंग्रा-हविलुप्तसकलगृहस्वापतेयस्य कुसुमपुरसततवाससफलीभूतजन्मनो मन-स्विनां धौरेयस्य **मगधेश्वरस्य सूरकेतोः शकुन्तला**। यापि विरतनि-द्रनीलोत्पलश्यामाभिरामवर्णा दानलेखेव सर्वतः परिमला स्वैरापतद्भिर-लिकदम्बकैराकुलीकृता मत्तवारणमलंकरोति, असावपि सैन्यभरदलि-तपाश्चात्यसिन्धुरोधसः क्रीडदवरोधसुन्दरीस्वच्छन्दोपभुक्तरैवतकपरिस-रोद्यानस्य **सौराष्ट्रमण्डलपतेर्महाबलस्य बन्धुमती**। याश्चैता विचित्र-वेषधारिण्यः स्फाटिकवितर्दिकोपविष्टाः क्षोभविरतविभ्रमैः ससंभ्रम-मितस्ततो वलद्भिरीक्षणैर्मण्डपक्षणेषु विकचेन्दीवरदलोपहारमिव पात-यन्ति, एता अपि **कलिङ्ग-वङ्ग-अङ्ग-कोशल-कुलूतादिदेशस्वामिना-**मवनिपालाना-**मिन्दुलेखा-लीलावती-मालतिका-मदनलेखा**प्राया-भिराख्याभिरधिगतप्रख्यातयो देशान्तरेषु दुहितरः'। इत्यभिधाय तूष्णीमास्थिते तस्मिन्स राजा **स्मेरतारकः** सविस्मयमालोक्य ताः समस्ता अपि प्रत्येकं कन्यका मां च किंचिद्वलितकन्धरो नातिनिकटे समु-पविष्टामुत्कृष्टवसनालंकारभूषितविग्रहामग्राम्येण मण्डनप्रकारेणाकारेण च परं प्रसाधितामितस्ततोऽभिव्यज्यमानजरसि प्रौढे वयसि वर्तमानामेकां विलासिनीं सपरिहासमवोचत्—**चित्रलेखे**, त्वं हि वत्सायाः **पत्र-लेखायाः** परं प्रसादभूमिः प्रधानसैरन्ध्री स्वकर्मकौशलेन कृत्स्नेऽपि

जयगतिलब्धजयपताका जानासि विविधाभिर्भङ्गिभिरलंकर्तुमित्यने-कशः श्रुतमस्माभिः । अमूलमन्त्रं कार्मणं तव प्रतिकर्म किमपि सुभगं-करणमङ्गनानाम् । तथाहि—प्रसादपरया त्वया रचितचतुरप्रसाधनाः परिणतवयसोऽपि सद्यस्तरुणतां प्रतिपद्यन्ते । प्राजापत्या अपि पराजय-न्तेऽन्तःपुरिकाजनस्य रूपम् । कुरूपा अप्यप्सरायन्ते स्त्रियः । वचन-चातुर्यं तु ते जन्मान्तराभ्यस्तमिव शरीरेणैव सार्धमाविर्भूतम् । अर्भकत्वेऽपि भुजङ्गजनगोष्ठीषु परां प्रतिष्ठामागतासि । प्रागल्भ्येन स्वभावमधुराः सर्वजनहृदयहारिणः क्षणमात्रपरिचितेऽपि जने जनित-विश्रम्भाः कस्य नाम न विस्मयमावहन्ति, कं वा विधेयं न कुर्वन्त्य-पूर्वाभिर्भङ्गिभिरुद्भासिताः पदे पदे तव विनोदकथालापाः । कथयामि वाग्मिनि, विवक्षितम् । या इमाः **पवनगतिना** संप्रत्युपदर्शिताः, का इमाः कन्यकाः खलु निखिला अपि भारतक्षेत्रदक्षिणार्धमध्यम-खण्डवासिनां मण्डलपतीनामात्मजाः । कथंचिदवगतस्वरूपैरेवं रूपवत्य एवं कलाकुशला इति पूर्वमेव निवेदिता **विद्याधरै**रानीताश्च संप्रति कुतूहलतरलितैरलंकर्तुमियं यात्रोत्सवम् । अत्र चास्य भगवतश्चराचर-गुरोरभिषेकमङ्गलानन्तरमेव प्रवर्तयिष्यन्ति संगीतकम् । अतस्तथा प्रसाधय, यथैताः शिथिलयन्ति स्त्रीस्वभावसुलभं साध्वसम्, विस्मर-न्त्याकस्मिकबन्धुजनवियोगजनितमुद्वेगम्, आसादयन्ति परतन्त्रता-दर्शनेन दूरीकृतं प्रमोदम्, गृह्णन्ति महाजनसमा जलजास्तम्भितं लास्यलीलाभ्युपगमम्, अवतरन्त्यनाकुलाभिरङ्गयष्टिभिरङ्गीकृतशृङ्गार-चेष्टारङ्गभूमिम्, अभिनयन्ति सम्यगभिनेयमर्थजातम्, आरोपयन्ति प्रेक्षकजनस्य प्रमोदमग्रभूमिम्, आवहन्ति च सहृदयहृदयवर्तिनो रसस्य परिपोषमेव ते प्रकाशयितुमतिचिरकालं शिक्षितुं प्रसाधनकर्म-

वैचक्षण्यं च क्षणः' । इति स्मिताननेनाभिहिता नभश्चरभूमिपालेन सा विलासिनी सहासविकसितेक्षणा तत्क्षणमेवोदतिष्ठत्, अन्वतिष्ठच्च सर्वं यथादिष्टम् ।

अत्रान्तरे समारभ्यत त्रिभुवनैकभर्तुरभिषेकमङ्गलविधिः। व्यधीयन्त वैणिकैरितस्ततः प्रहततन्त्रीपरीक्षितकलध्वनिभिर्निश्चलाः कला वल्लकीषु वितीर्णविविधमार्जनानि सद्मानि । अक्रियन्त नानावादित्राणि भरतपुत्रैर्निचुलकाकृष्टप्रकृष्टवेणवोऽग्रे गायनीगणमुपाविशन्वांशिकाः प्रक्षालनपवित्रपाणिभिः । उपानीयन्त पानीयेन सकलतीर्थाहृतेन पूरिताः शातकुम्भकुम्भाः पुंभिरुत्तम्भिताभिषेककाञ्चनकुम्भा इवाभोगशालिभिः पयोधरैरुपलक्ष्यमाणाः । बभूवुरासन्नावभ्रमुश्च ससंभ्रममितस्ततः काश्चित्कुसुमपटलकहस्ताः, काश्चिदनुलेपनपात्रधारिण्यः, काश्चिद्गृहीतगन्धोदकभृङ्गारा वारयुवतयः। क्षणेन च प्रथमतरकलशवारिप्रवाहपतनशंसी समकालचलितोभयपक्षताडितनितम्बावलम्बितगर्जन्मेघमुरजैर्भक्तितो दत्तसमहस्तैरिव निशम्यमानः साध्वसादूर्ध्वमुत्पतद्भिरुदधिगोचरैर्गिरिविहङ्गैस्त्रासतरलिततीरशायिमहानक्रचक्रवालहेलापतनदूरोच्छलितभूरिजलनिवहेन सहसोत्थाय निपुणं निरूप्यमाण इव पुनरप्यमृतमथनोत्प्रेक्षिणा मकराकरेण मुखरीचकार दिक्क्रमक्रमाहतानां दिव्यतूर्याणामदृष्टमर्यादो नादः । क्रमेण च समाप्ते परमदेवस्य मज्जनविधौ, निर्मापिते सविस्तरं पूजाकर्मणि, प्रवर्तिते गाथकगणेन मधुरमृदङ्गध्वनिमिश्रे विश्राणितश्रावकश्रोत्रमुदि मङ्गलगीतध्वनौ, प्रनृत्तासु पर्यायेण तासु क्षितिपालकन्यकासु, क्षीणभूयिष्ठायां क्षपायामहं चित्रलेखया विरचितविचित्रवेषप्रभाबद्धपरिवेषैः प्रलघुभिर्मणिभूषणैः समन्तादलंकृतमनुल्बणधृताङ्गरागमङ्गं दधाना रङ्गमध्यमध्यासितवती प्रवृत्ता च सखीभिरिव

साकं प्रेक्षकमनोवृत्तिभिः प्रवर्तितुम्। असिते च नृत्यकर्मणि कृतरङ्गप्रणामामधिगताधिकोल्लासैः श्रमश्वासोद्गमैः किंचित्सायासकुचमण्डलामुल्लसितविरलस्वेदाम्बुकणकर्बुरीकृतकपोलपत्रभङ्गां चित्रलेखायाः समीपे निविशमानामाहूय दर्शितावकाशः शबरराजराजो निजासनस्यैकदेशे मामुपवेशयन्। निविष्टायाश्च मे शङ्कासंकोचिततनोरवनितलनिहितनिस्तरङ्गदृष्टेर्नर्तनायासविघटितसंनिवेशं संयम्य हस्ताभ्यां केशहस्तमारोप्य विस्रस्तमीषद्विलासावतंसपल्लवं श्रवसि किंचिदावलितकन्धरो दक्षिणकराङ्गुलियुगेनोन्नमय्य चिबुकदेशे त्रपाभरावनतमाननं सबहुमानमभ्यधित—'वत्से मलयसुन्दरि, दूरमावर्जितानि त्वया सामाजिकमनांसि। कथय कुतस्तवेदृशस्यास्य विद्याधरलोकेऽप्यतिविरलप्रचारस्य सकलखेचरचमत्कारकारिणो नाट्यवेदस्याधिगतिः। कथं शिक्षिता स्वल्पेन कालेन ललितानेतावतः करणप्रयोगान्। केन संक्रमिता कृतिना वरणसमस्तरङ्गरागहेतुरियमङ्गहाराणां गतिः। अतिमहत्कुतूहलं मे। न हि कदाचित्क्षितिचारिणीष्वबलासु दृष्टा श्रुता वास्माभिरेवंविधा वैदग्धी नाट्यकर्मणि' इति स्तुताहं खेचराधिपेनाधिकमधोमुखीभूय लज्जया पाणिनखशिखाभिः क्षोणिमलिखम्। 'पुत्रि, जनकनिर्विशेषे मयि किमियमपत्रपा। स्वकीयं तव स्थानमिदमशङ्किता व्याहर' इति च पुनः पुनरुच्यमाना तथैवाधोमुखी शनैरवदत्—'तात, नैकः कश्चिदुपदेष्टा नाट्यविद्यायां ममाभूद्यं विज्ञापयामि। अपि तूपदेशकाले कुतूहलाविष्टमानसेन मत्पित्रा पृथिव्यामपि ये केचिदुपलब्धाः प्रकृष्टा नाट्यतन्त्रे भरतपुत्रास्ते समस्ता अप्युपसंगृहीताः। तत्र च कोऽपि कुतश्चिदवगतः प्रयोगः। ये पुनरिहातिरमणीयतया विशेषतः प्रतिपन्नास्तातेन ते स्वयं मया नृत्यन्तीमम्बामवलोकयन्त्यापृच्छन्त्या च

तामनवरतमवगताः'। 'वत्से, तथापि ते कुतो विज्ञाताः'। 'तात, **विद्याधरलोके** क्वचित्'। 'वत्से, किमभिधाना तव जनयित्री'। 'तात, **गन्धर्वदत्ता** नाम'। श्रुत्वा मद्वचनमिदमीषदुल्लसितचेताः समीपवर्ती भर्तुरतिपरिणतवया **वीर्यमित्रो** नाम मन्त्री शनैर्व्याजहार—'देव, कच्चिन्न सा देवस्यैव दुहिता राजपुत्री **गन्धर्वदत्ता**। जन्यते हि नाम्ना नाट्यक्रमेण च सुतासंक्रान्तेन महती मतिभ्रान्तिः'। 'आर्य, न केवलं नाट्यक्रमो रूपविभ्रमोऽपि भ्रमयति मनः। तथा हि—तादृशमेव शरद्विबुद्धशतपत्रानुवादि वदनम्, तादृशा एव चन्द्रोदयक्षुभितदुग्धोदधितरङ्गायताश्चक्षुषो विक्षेपाः, तादृगेव ग्रस्तसहकारकोकिलाकूजितकलं जल्पितममुष्याः'। 'देव, यद्येवं ततः पुनरनुयुज्यतां विशेषावगमार्थमत्रभवती'। 'वत्से, अपि ध्रियते तव सवित्री' 'तात, सर्वान्तःपुरपरीता शुद्धान्तसौधशिखरात्पुरजनप्रवर्तितं कौमुदीमहोत्सवमवलोकयन्ती निरामयशरीरा संप्रत्येव मुक्ता मया'। 'वत्से, कियत्प्रमाणम्, कीदृशो वर्णविशेषः, कियती वयोऽवस्था, किमनुकारिणी च शरीराकृतिरस्याः'। 'तात, प्रमाणतो नातिह्रस्वा न चात्यायता, वर्णेन विकचचम्पकावदाता, वयसापि यादृग्मयि प्रथमगर्भसंभवायां संभवति तादृशेनोपेता, रूपेण तु न किंचित्तादृशमपरमिव सदसि मानुषमङ्गनासु पुरुषेषु वा पश्यामि। यदि परं देवस्यैव किंचिदनुकरोति'। 'देव, संवादकानि सर्वाण्यपि चिह्नानि यदि यथा वेदितानि तथैव, ततो निःसंशयं सैव राजपुत्री **गन्धर्वदत्ता**'। 'वत्से, कस्तस्याः पिता'। 'तात, तापसः कश्चित्'। 'आर्य, दुर्वारतनया दुःखदावाग्निदग्धे मनसि वन इव चिराल्लब्धजन्मा पश्य कथमन्तराले संयोज्य तापसमपास्तकरुणेन विधिना समूलमुद्धृतस्तरुस्कन्द इव मे मन्दभाग्यस्यानन्दः'। 'देव, मा विषीद। न

जानाति तत्त्वतो राजपुत्री तस्याः पितरम्, अन्यथा न कश्चिदिति कथयेत्'। 'वत्से, दृष्टस्त्वया स तापसः'। 'तात, न कचिद्दृष्टः। जनप्रवादादवगतः' । वत्से, त्वज्जननी किमाचष्टे' । 'तात, न किंचिदाचष्टे । प्राक्तनं निजवृत्तान्तं केवलं पृष्टा कथाप्रसङ्गेषु सखीभिरधोमुखी मुक्तदीर्घनिःश्वासा निःशब्दमविरताश्रुबिन्दुदर्शितदुर्दिना रोदिति' । 'आर्य, किमप्रतिपादने रोदने च तस्याः कारणम्' । 'देव, सर्वलोकोत्तरनिजवंशव्यसनप्रकाशनलज्जा बन्धुजनानुस्मरणदुःखं च' । 'वत्से, यदि न किंचित्कथयति, ततः विद्याधरलोके नाट्यप्रयोगास्तयाधिगता इति त्वया विज्ञातम्' । 'तात, विज्ञापयामि । अतः समयादतिक्रान्तसंवत्सरे त्रिकालदर्शी मुनिर्महायशो नाम महातपोभिरनेकैः परिवृतो महर्षिभिः काञ्च्यामुपाययौ । बाह्योद्यानविनिविष्टं च द्रष्टुमामिष्ट इव कौतुकेन सर्वोऽपि नगरनिवासी निर्गतो जनः । जनन्यपि मे प्रयुक्तान्तर्वेशिकविज्ञापितेन कृताभ्यनुज्ञा तातेन परिमितपरिच्छदा मामादाय गता तद्दर्शनाय । दृष्टश्च स महात्मा। पृष्टश्च विधिप्रयुक्तपूजया प्रस्तावमुपलभ्य 'भगवन्, अखिलभुवनख्यातविद्याधरवंशसंभवाहमपुण्यभागिनी शिशुरेव नगरविप्लवे विप्रयुक्ता बन्धुभिः। भूयांश्च कालो वर्तते ममात्र तिष्ठन्त्या । न केनापि निष्करुणेनान्विष्टाहमदृष्टदोषा । मम गुरुस्नेहोपि गुरुजनो जनः संजातः। तत्किमेव सर्वदा शोकहुतभुजा दह्यमानदेहायाः प्रयास्यन्ति दिवसाः, उत समागमो भविष्यति समं तैः' इत्यभिदधाना श्रुता मया'। 'वत्से, ततः किमुक्तं तेन भगवता, किं च तवाम्बया पुनः' । 'तात, तेनेदभिहिताम्बा—'वत्से, मा विषीद । भविष्यत्यचिरेण ते सर्वैर्ज्ञातिभिः सह समागमः' । अम्बयापि तच्छ्रुत्वा समुपजातपरमपरितोषया पुनर्विज्ञापितोऽसौ प्रणम्य सादरम्—'भगवन्, उद्धृताहमनेन तव वचना-

नुग्रहेण महादुःखपङ्कमग्ना । तत्प्रसीद । पुनरादिश कदा भविष्यति मे समागमो बन्धुभिः' । अथ संजातपक्षपातः क्षणं ध्यात्वा मयि सविघवर्तिन्यां मुहूर्तमारोपितदृष्टिः 'महाभागे, यदा तवेयमायुष्मती दुहिता—'इत्यादि किमप्यवादीत्' । 'वत्से, कथय किमुदीरितम्' । 'तात, न मया सम्यगवधारितम्' । 'वत्से, कथमन्तिकस्थयापि नावधारितम्' । 'तात, तस्मिन्क्षणे मनाग्व्यग्रमानसेवाहमतिष्ठम्' । 'देव, किं क्रियत इतीदृश एव व्यग्रताहेतुरस्याः स क्षणः संपन्नः' । 'आर्य, ज्ञायते किं तेन ज्ञानिना गदितम्' । 'देव, किमत्र ज्ञेयम् । यदा तवेयमात्मजा जामातुरासादयिष्यति करग्रहणोत्सवं तदा ते ज्ञातिभिः सह समागमः' इति । 'वत्से, किमेवम्' । 'देव, दूरावनतविलक्षवदनया करनखशुक्तिर्निभृतमुल्लिखन्त्या मणिकुट्टिमं किमयमर्थोऽनया न प्रकाशितो येन वारंवारमेनां प्रश्नेन खेदयसि । शतशोऽपि प्रेरिता नैनमर्थमियं वचनवृत्त्या व्यक्तीकरिष्यति' । 'आर्य, तथापि पृच्छामि' । 'वत्से, किं न कथयसि परमार्थम्' । 'तात, कथितमेवार्येण सर्वं यथावस्थितम्' । 'वत्से, प्रस्तुते विवाहोत्सवे केनाप्यनावेदितवृत्तान्तानां कथमिह ज्ञातीनामागमनमिति कस्मान्न पृष्टोऽसौ दिव्यदृष्टिस्त्वन्मात्रा' । 'तात, सर्वमपि पृष्टः । नापीदमादिष्टं भगवता—'महाभागे, मा त्वरस्व । स्वत एव ज्ञातवृत्तान्तस्त्वत्पिता स्वगृहमानेष्यति, त्वया सहैनामनुष्ठास्यति च । सर्वं स्वयमेव करणीयमस्याः' इत्युदीरितवान्' । 'देव, किमुत्पन्ननिश्चयैरपि प्रश्नानुबन्धेन खेद्यते राजपुत्री' । 'आर्य, किमुत्पन्नो भवतां निश्चयः' । 'देव, अहमपुण्यभागिनी शिशुरेव नगरविप्लवे विप्रयुक्ता बन्धुभिरित्यपि यावदाकर्णितं तावदपि संदेहः' । 'आर्य, किं करोमि । एतदपि श्रुत्वा न मे निसर्गदुर्विदग्धं श्रद्दधाति दग्धहृदयम्' ।

'देव, यदि संदेहस्तदादिश्यतां पवनगतिः । इहैवानयतु ताम्' । 'आर्य, गर्हितमस्मद्विधानामकाले परकलत्रदर्शनम् । अलं च पवनगतिना क्लेशितेन । इयमेव चित्रलेखा बालभावात्प्रभृति तस्याः प्रियसखी निजप्रेम्णैव विज्ञाय कथयिष्यति यथावस्थितं सर्वमपि तद्वृत्तान्तम् । अपरं च यदि सा सत्यमेव वत्सा गन्धर्वदत्ता ततस्तया सह दर्शनमस्माकमचिरकालभावित एव भगवता तेन त्रिलोकविख्यातयशसा कालत्रयज्ञेन ज्ञानचक्षुषा प्रत्यक्षीकृतोऽस्या एव मलयसुन्दर्या विवाहसमयो मयैव प्रस्तुतः साधयिता । कृतमौत्सुक्येन' इति चिरं मया मन्त्रिणा च सार्धमारब्धसंलापस्य खेचरपतेः प्रशंसन्निव वचनमुपतोरणं रराण प्रभातशङ्खः ।

श्रुत्वा च तं स विद्याधरेश्वरो विरतसंगीतकरसावेशो निवेशितमतिः स्नानदेवार्चनप्रभृतिनि प्राभाविके कर्मणि समासन्नोपविष्टानवलोक्य दृष्ट्या प्रसादस्निग्धया सर्वानेव देवयात्रादर्शनागतान्विद्याधरपतीन्क्रमेण विससर्ज । निक्षिप्तदृष्टिश्च मयि नरेन्द्रकन्यकासु च तासु किमपि स्वचेतसा संप्रधार्य युगपन्न्यञ्चितोभयभ्रु संज्ञया मनोज्ञवपुषं पुरुषमाप्ततममाजुहाव ।

सजवमुपसृत्य स्थितं च तं पुरस्तादास्यविन्यस्तवस्त्रपल्लवन्यञ्चितप्रश्रयम्[1], 'अरे तपनवेग' त्वरितमस्याः काञ्चीनृपदुहितुः किंचिदसत्कृतं दर्शयित्वा बहुमानमद्भुतवस्तुदर्शनेन कुरु सफलमिहत्यमागमनम् । एताभिश्च सह समस्ताभिरवनिपालतनयाभिः प्रापयैनां प्रच्छन्नरूपामेव निजसदनम्' इति शिक्षयित्वा कृत्वा च देवताप्रणाममासनादुत्तस्थौ । अनूत्थितासन्नखेचरपरिवृतश्च गत्वायतनमण्डपद्वारमध्यासितमहार्हमणिमयविमानो विलोकयन्त एव मे झगिति नवनिशाकितस्त्रिंशनिर्मलमाकाशमुदपतत्[2] ।

---

१. विनयम्. २. 'नवनिशातनिस्त्रिंश' इति स्यात्.

प्रस्थिते च तत्र त्रिकूटाचलाभिमुखमौत्सुक्यतरलेक्षणस्तत्क्षणमेव पुरुषः स तासां क्षितिपकन्यानामाधिपत्ये सगौरवं मामतिष्ठिपत्, प्रवर्तयामास च पुनः पुनः समासन्नरम्योद्देशदर्शनाय। ततोऽहमुत्साहिता तस्य वचनैरुत्थाय ताभिर्गृहीतवेत्रच्छत्रचामराभिरनुगम्यमाना सहचरीभिः प्रथममेव प्रविश्य परितः प्रेषिता निमेषदृष्टिर्दृष्टमिव पुरा, सेवितमिव भवान्तरे, कारितमिवात्मना, परिमलितमिव सर्वकालमवलोक्य प्रीतहृदया प्रासादमग्रतो गर्भगृहगर्भे प्रतिष्ठितम्, अदभ्रदेहप्रभाप्रसरदूरापसारितज्वलदुदग्रदीपिकालोकम्, इभमृगेन्द्रचक्राध्यासिते सुराचल इव मरीचिमालिनम्, अमलरोचिषि हिरण्मये महति सिंहासने समासीनम्, अचिराभिषेकनिष्पङ्कपरिकर्माचरणम्, आमोदिना हरिचन्दनेनाङ्गरागेणानुलिप्तम्, प्रतिकुसुमोपविष्टनिष्पन्दषट्पदनिपीयमानमकरन्दाभिराजानुलम्बिनीभिरभिनवसुरद्रुमस्रग्भिरुपरचितसर्वावयवपूजम्, उत्क्षिप्तसान्द्रकालागुरुक्षोदधूपम्, अतिमहाप्रमाणवज्रमणिशिलामयम्, अतिशयप्रशान्तदर्शनम्, अपश्चिमस्य भगवतो महावीरजिनवरस्य जन्ममरणार्णवावर्तवर्तिजन्तुनिकुरम्बैकावलम्बनं बिम्बमद्राक्षम्।

दृष्ट्वा च तत्पितरमिव चिरात्प्रवासागतं स्वामिनमिव सर्वदा कृतोपकारमारूढगाढोत्कण्ठा स्मरन्तीव पूर्वसंसृष्टस्य कस्यचिदभीष्टजनस्य निर्निमित्तोदीर्णमन्युवेगकम्पितकुचयुगा कथमपि निरुन्धती कण्ठदेशागतमाक्रन्दशब्दमुपश्रृ (सृ) त्य सप्रश्रयमग्रतः परमया भक्त्या प्रसारितसकलगात्रयष्टिस्ताडयन्ती कुट्टिमे मुहुर्मुहुर्ललाटमाबद्धकरसंपुटा प्रणंशि(सि)षम्। उत्थाय च पुरो निविष्टाविष्टपत्रपगुरोरास्यचन्द्रमसि निहितनिस्तरङ्गदृष्टिरनवरतनिर्यद्बाष्पमनिवार्योत्कण्ठमशक्यमावेदयितुं स्वसंवे-

१. अनल्प. २. दैन्यम्. ३ प्रणामं कृतवती. ४. 'निविष्टापत्रप' इति स्यात्.

ह्यमानन्दशोकमिश्रं किमप्यवस्थान्तरमनुभवन्ती निश्चलाङ्गयष्टिश्चिरमतिष्ठम् । प्रवर्तिता च सहचरीभिरर्णवं द्रष्टुमभ्यर्णवर्तिनैकेन सोपानवर्त्मना दक्षिणां देवतागृहप्राकारभित्तिमध्यरोहम् ।

तस्याश्च संघट्टविघटमानमुखरवीचिशिखरशङ्खश्रेणिना वारिधिजलेन प्रतिवेलमास्फालितस्फाटिकशिलातलायास्तलविभागे निविष्टदृष्टिरुत्कृष्टनौयानाधिरूढमध्यासितमकरमिव [1]यादसां नाथमी[2]शाननयनानलादुपद्रुतम[3]युग्मेषुमिवागत्य संश्रितजलदुर्गमुदधिसौहृदाकृष्टहृदयमवतीर्णमन्तरिक्षादिव नक्षत्रनाथमितस्ततो विनिहितैरसिगदाचक्रचापैः प्रकाशितपौरुषप्रकर्षमर्णवनिवासिदानवशासनाय शेषशयनमुत्सृज्य चलितमिव जलशायिनं देवमुभयतः स्थापितमृदुस्थूलहंसतूलोपधाने धौतने[4]त्रप्रच्छदाच्छादिते कुमुदगर्भच्छदावदातद्युतिनि दत्तपट्टशयने निविष्टमनुपृष्ठमुपहितस्य महतो हेमपीठस्य शिरसि विनिवेशितद्विगुणदक्षिणेतरभुजस्तम्भमभ्यर्णोपविष्टैः कैश्चिदुद्धूतधवलचामरैः कैश्चिदुत्सङ्गितचरणयुगलैः कैश्चिदुत्क्षिप्तताम्बूलवीटकैः कैश्चित्प्रवर्तितरजनीवार्तालापैस्त्रिचतुरैरेव चतुरैस्तरुणपरिचारकैः परिगतमनासन्ननिःसहनिष्पन्दनिद्राक्रान्तकतिपयकर्णधारमुदारतेजसातुलबलेन दीर्घबाहुना सुवर्णकटकोद्भासितेन प्रशस्तायतिना प्रकामकान्तालोकेन सुकुमारेण सम्राजेव वपुषा जिताशेषभुवनं भवनमिव सौभाग्यस्य स्वरूपमिव रूपस्य लयनमिव लावण्यस्य किंचिदधिकाष्टादशवर्षवयसमुर्वीपतिकुमारमद्राक्षम् ।

दृष्ट्वा चोपजातविस्मया चेतस्यकरवम्—'अहो, निरवधिरत्नसंभारा भगवती भूतधात्रीति सत्यः प्रवादोऽयम्, येन पृथुपार्थिवोपदेशात्सुमे-

---

१. वरुणः मकरस्थाना नौः, वरुणसदृशः कुमारः. २. हरः. ३. कामः. ४. वस्त्रम्.

रमुख्यैः शिखरिभिः प्रयत्नदुग्धनिःशेषरत्नाया अप्यमुष्या दृश्यन्त ईदृशान्यद्यापि पुरुषरत्नान्युत्पद्यमानानि, येषां रूपलावण्यादिगुणगणः कुसुममार्गणस्यापि रूपगर्वमपहरति'। इति चिन्तयन्त्या एव मे साभ्यसूयः स्वरूपमाविष्कर्तुमिव हृदयमविशद्गृहीतशृङ्गारो मकरकेतुः।

तदनुमार्गप्रविष्टरचितरणलाक्षारसलाञ्छितेष्विव प्रससार सर्वाङ्गेषु रागः। वीतरागदेवतागारसंनिधौ विरुद्धं रागिणामवस्थानमिति क्षालयितुमिव तमक्षारीत्स्वेदविसरः। स्वेदजलजनितजाड्योद्रेकेव बद्धप्रबलकम्पा किमपि रोमाञ्चजालकमुच्चममुचत्कुचस्थली।

ततोऽहं लज्जयानुरागेण च युगपदास्कन्दिता 'शीतलो जलधिवेलानिलः' इति विमुक्तसीत्कारा मुहुः सहचरीजनमन्तरे कृत्वा, 'कर्कशो बालातपस्पर्शः' इति मुहुरुत्तरियांशुकेनाननं स्थगयित्वा, 'श्रान्तातिदीर्घसोपानपथलङ्घनेन, इत्यङ्गभारं शालशृङ्गोत्सङ्गसङ्गिनं कृत्वा, कृतोपसर्पणं कृतसंलापं कृताकारनिरीक्षणं कृतपरिहासं न केवलमात्मनस्तस्यापि तं निजसखीजनं प्रियमपि सरोषमीक्षमाणा 'काहम्, कागता, क स्थिता, को मे देशः, के ज्ञातयः, किं मया प्रस्तुतम्, किमारब्धम्' इत्यजातस्मृतिरशृण्वती शब्दमचेतयन्ती स्पर्शमनुपजिघ्रन्ती गन्धम्, केवलं तस्यैव रूपलेखावलोकने तस्यैवावयवपूर्णतानिर्वर्णने तस्यैव यौवनोद्भेदभव्यताभावने तस्यैव विभ्रमक्रमनिभालने निलीनचित्ता, दूरस्थिताप्यसाधारणप्रेमदर्शनोत्पन्नकारुण्येन केनाप्युत्क्षिप्ततत्समीपं गमितेव तद्भुजाश्लेषस्य भाजनीकृतेव तत्संभोगसौख्यमनुभावितेव निष्पन्दसकलावयवा स्पन्दमानानन्दजलविप्रुषा किमारब्धमकुलया किं विकाशोत्तानया किं स्तिमितया किं तरलतारकया किं मुग्धया किमङ्गीकृतमा-

१. 'उत्क्षिप्य' इति ल्यबन्तम्, 'उत्क्षिप्ता' इति वा स्यात्.

गल्भ्यया किमालम्बितकुटिलभावया किं प्राञ्जलया, तत्कालमहमपि न जानामि कीदृश्या दृशा तमद्राक्षम्।

सोऽपि नृपकुमारः सविभ्रमं परिभ्रमन्तीनामाकर्ण्य तासां राजकन्यानामाभरणमणिरणितमनणुतरमुपरि तस्य प्राकारस्य संक्रमितदृष्टिराविष्कृततथाविधानेकविभ्रमां मामपश्यत्। दर्शनादेव चासौ जन्मसहभुवं पुमानिव सांख्यपरिकल्पितः प्रकृतिममुञ्चन्निसर्गधीरोऽपि सागर इव तरङ्गानितस्ततस्तरलकुटिलानक्षिपत्कटाक्षान्। अस्पृष्टोऽपि जलनिधिमारुतेन प्रत्यङ्गमुद्गतपुलकपद्धतिरकम्पत। चिरोत्सृष्टमुक्तनिद्रोऽपि तत्क्षणप्रतिबुद्ध इव साङ्गभङ्गमजृम्भत्। प्रगल्भवागपि सगद्गदस्वरः स्वकर्मसु कर्णधारानतत्वरत्। दर्शयितुमिव मे भुजाश्लेषलीलामुदीरितचतुरवचनां चामरग्राहिणीं सहासमाश्लिक्षत्। प्रकाशयितुमिव वदनचुम्बनप्रपञ्चमीषदामीलितदले लीलांशुजन्मनि[1] प्रवालपाटलमधरपल्लवपुटमजीघटत्। निवेदयितुमिव दन्तच्छदच्छेदमनिमित्तमेवादाय नागवल्लिदलशकलमग्रदशनसंदंशेन शनकैरखण्डयत्। कथयितुमिव नखच्छेदवैदग्ध्यमायताङ्गुष्ठकररुहाग्रेण तरुणकेतकगर्भपत्रमनतिदीर्घलेखालाञ्छितोदरमकार्षीत्। प्रपञ्चयितुमिव ताडनक्रममकाण्डदर्शिताश्लीलचेष्टां समासन्नसंवाहिकां सहासः करतलाग्रेण स्कन्धदेशे पुनः पुनरवधीत्।

निह्नोतुकामश्च लज्जयात्मनो मन्मथविकाराननेकानि चित्तहारीणि चेष्टितान्यकरोत्। तथा हि—मदवलोकनाबद्धस्यन्दमानन्दाश्रुबिन्दुविसरमतिभास्वरेण रत्नादर्शतेजसा जनितमिति मुहुर्मुहुरपप्रथत्। मदीयलीलालापप्रदत्तावधानः शून्येन मनसा वन्दिनं सुभाषितान्यपाठयत्। मत्समागमध्यानमीलिताक्षः पुरःस्थापिते वृथैव तूलिकया चित्रफलके

1. 'लीलाम्बुजन्मनि' इति स्यात्.

रूपमलिखत् । मदीयविभ्रमोत्पादितरिरंसश्चेतसा नीचसेन मुकुलितेक्षणो वीणारवानभावयत् । प्रयत्नातीतधैर्योऽपि मुहुर्मम सखीभिः सार्धमारब्धमुग्धसंलापायाः पर्यस्तसान्द्रदशनदीधितावधरदन्तवाससि मुहुरवस्रस्तकेशहस्तोन्नमनाय साविसंचारितवामकरतलायाः प्रकटपरिणाहे बाहुमूले मुहुर्मुक्तसविकारसीत्कारायाः शिशिरनीरधिमरुन्निरोधाय झगिति विन्यस्तबाहुस्वस्तिके स्तनयुगोत्सङ्गे मुहुश्चटुलनेत्रकञ्चुकाग्रपल्लवप्रकाशितनाभिदेशाया नगरसीम्नीव सरोमालिनि मध्ये मुहुस्तन्मुखार्पितदृशः कृत्वान्तरे सहचरीं सयत्नमाबद्धपरिधानकक्षायाः सहासविधृतस्रंसमानोच्चये काञ्चिधामनि मुहुः सत्वरमितस्ततः प्रचलितायाः प्रतिवेलविघटमानवेलाञ्चलदरदर्शिद्युतावूरुदेशे दृष्टिमापतन्तीं न वारयितुमशकत् ।

क्षणाच्च तेन प्रचलितसविभ्रमैकभ्रुवा व्यापारितः स्वभावमधुरस्वरः स्वैरमुत्थाय पार्श्वादतिशयमनोज्ञाकृतिर्युवा कैवर्त एकः प्रणम्य सप्रश्रयं मामवोचत्—'देवि, सकलपृथ्वीपालमौलिमालाप्रणामलालिताङ्घ्रेः सिंहलद्वीपाधिपस्य राज्ञश्चन्द्रकेतोरात्मजः समरकेतुनामा कुमार एष सागरान्तरद्वीपविजयप्रसङ्गेन कथमपि प्रदेशमिममायातः । दृष्टं चास्मिन्नदृष्टपूर्वमन्तःकरणमिव तावकीनमकृतपुण्यजनदुष्प्रवेशमिदं देवतायतनम् । अत्र च प्रवेष्टुमयमिच्छति । तदादिश्यतां कोऽपि निजपरिजने योऽस्यावतारमार्गमुपदिशति' । इत्युदीर्य वचनमुपरतवाचि तस्मिन्नभ्यर्णवर्तिनीमवन्तिविषयाधिपस्य राज्ञः परमसंमतामतिप्रगल्भवचसं वसंतसेनाभिधानां विलासिनीमवदम्—'सखि, निवेदय यथावृत्तमद्यतनमसद्वृत्तान्तमस्य महाभागस्य' इति ।

---

१. 'नीरसेन' स्यात्. २. प्रशंसावाची. ३. विद्युल्लता. ४. सरःशोभिनि, रोमपङ्क्तियुते च.

अभाषत च सा—'भद्र, किं कथयामि । अभाजनमयं जनो भवत्समीहितावेदनसुखस्य । न हि सा भाग्यसंपन्मम, ययास्य भवत्स्वामिनो मनोभिमतमर्थं साधयामि । अद्यैव रात्रावियमिहानीता नायिका नः केनापि । असावपि दिगन्तविख्यातयशसां महामण्डलपतीनामात्मजः । सर्वोऽपि वैदेशिकः कन्याजनस्त्रिभुवनातिशायिसौन्दर्यसंपदे । तदप्यदृष्टपूर्वं रूपमिव नृपकुमारस्यास्य दिव्यं देवतायतनमस्याः । कथमेतदीयान्विशेषानवगच्छति । कथं चास्य तव नायकस्य प्रवेशे नितान्तमपि सस्पृहामार्गमुपदिशति । किं च संप्रति गता तावदन्यचिन्ता । आत्मापि चिन्त्यो वर्ततेऽस्याः । किमत्रैव जलधौ कालमतिवाहयिष्यामि । किमतोऽपि दूरं यास्यामि । किमन्यदीयावासविहितस्थितिरनभिप्रेतमात्मनो दशान्तरमनुभविष्यामि । किं वा भूय एव स्वभवनं नेतव्या । को हि जानाति सम्यग्दैवगतिम्' इत्युदीर्य तूष्णीमास्थितायां तत्र कृतविलक्षस्मितो नाविकः स तमवादीत्—'कुमार, स्थितं तावद्देवतादर्शनम् । असौ तु दूराकृष्टधन्वना कुसुमकार्मुकेण मद्दर्शनैकशरणः कृतः । तेन विच्छिन्नवाञ्छितार्थविरसेनापि वचसा श्रुतेन मनागपि न खेदमवहत्, प्रत्युत तदेव बहुमन्यत' । स्थित्वा च क्षणं स नाविकः पुनरवोचत्—'युवराज, दृष्टेयमदृष्टपूर्वा मानुषैरमरसद्मनिवासिनामपि विस्मयकारिणी भूमिः, अवलोकितानि कल्पलतावनद्धविद्रुमपादपानि वनानि, वीक्षिता दर्शनेनैव सर्वहृदयं संज्वरद्रुहश्चन्द्रोदयक्षरितचन्द्रकान्तकन्दरानिर्झरसहस्रकल्पिताकालदुर्दिना महागिरेरस्य सानवो निवृत्तकौतुकैरपि । किमद्यापि विलम्ब्यते । प्रसादयामः प्रतीपम् । पृष्ठत-

1. 'सर्वहृदयसंज्वरद्रुहः' इति पाठे 'सर्वेषां हृदये यो ज्वरस्तं द्रुह्यन्ति जिघांसन्ति नाशयन्ति' इत्यर्थो भवेत्.

स्त्वामनवलोकयन्नाकुलो भविष्यत्यशेषः परिजनः । विक्लवत्वमुपयास्यन्ति सेवकाः । तदद्यापि यावत्प्रयाणखेदनिःसहो राजकुलममात्यलोको न याति, यावच्च वृत्तान्तमुपलभ्य भवतः सर्वतो जातसंक्षोभा न प्रधावन्ति भूमिपतयः, तावदतर्किता एव गत्वा समाश्रयामः शिबिरम्' इत्यभिहितः स तेन मत्संनिधिपरित्यागकातरो न किंचिदस्य प्रत्युत्तरमदात् । पुनः पुनरनुबध्यमानश्च मधुरमधुरे भ्रुवोः कपोलयोरलकेषु च कृतासङ्गमाकृष्य कृच्छ्रादिव मुखाच्चक्षुस्तदभिमुखोऽभवत् ।

अभाषत च मन्दम्—'सखे तारक, प्रतीक्षस्व तावत्क्षणमेकम् । अत्र क्षणे बलवदस्वस्थं मे शरीरम्, प्रवृत्ता शिरसि वेदना, दृढारम्भा जृम्भा, विजृम्भते निकामं रणरणकदायी केनापि कारणेन दारुणावेगो दाहज्वरः, यतोऽस्य विनोदनायास्मिन्नेव प्रचुरकर्पूरचन्दनप्रायपादपच्छायशीतले प्रदेशे मुहूर्तमेकमवस्थातुमभिलषति मे हृदयम्, तथापि त्वं प्रमाणम्, इत्यभिदधाने तस्मिन्महाभागे स भूयोऽप्यभाषत—'कुमार, यद्यहं प्रमाणं तन्न युज्यते निमेषमात्रमपीह स्थातुम् । अतिबहुदोषमत्र प्रदेशे चिरावस्थानम् । एष च व्याधिरनावेदितोऽपि विदितो मया । निदानं चास्य विज्ञातम् । अत एव प्रतीकारहेतोः स्थानान्तरमितस्त्वां नेतुमिच्छामि । योऽपि कर्पूरचन्दनच्छायशिशिरः प्रशमहेतुस्त्वया परिकल्पितः प्रदेशः, सोऽप्यस्य तव शरीरसंतापस्य सन्निपातज्वरस्येव सुतरां संतर्पकः प्रकारान्तरेण शमयितव्यः । तदलमावेगेन । यथा सामर्थ्यमवसरेऽस्य यत्नसहमेव चिन्तयिष्यामि' इत्यभिधाय तन्नपानतवदनमप्रकटितस्मितः स्थानादचालयत् ।

प्रस्थिते च तस्मिन्नरतिपरिगृहीताहमनवरतपरिवर्तितकन्धरस्य विसृजतः सदैन्यमिव सदुःखमिव सप्रार्थनमिव सात्मसमर्पणमिव मदी-

क्षणयुगे वारंवारमनिमेषतारकं चक्षुरवनिभृत्कुमारस्य तस्य त्वरावता चित्तेन चिन्तयन्ती स्थित्युपायान्बलवदनुरागप्रेरिताप्युदासीनेव तां वसन्तसेनां पुनरवोचम्—'सखि निषिद्धोऽपि जाल्मः प्रस्थितोऽयं जालिकः । कृत्वा च पुरतः प्रार्थनामकृतार्थ एष व्रजति राजपुत्रः । तन्निवर्तयाभिधाय यत्किंचिंदतौ(?) स्थिरीकुरु तावद्यावदेति प्रवेशमार्गोपदेष्टा कोऽप्यमुष्माद्देवतायतनात् । अन्यथा महन्मालिन्यमायातमस्माकम्' इत्युक्त्वा च सा पुनस्तमारभत वक्तुम्—'अहो कर्णधार, विगतकर्ण इव गाढमस्वस्थमनसः कथयतोऽपि स व्यथां निजावस्थामस्य पृथ्वीपालसूनोरनाकर्ण्य वाचं प्रचलितस्तूर्णमेव केनापि हेतुना त्वम् । एष च पयोराशिरत्र क्षणे विजृम्भमाणसमधिकाम्भःक्षोभ इव दृश्यते । यतो विततदुर्वातताडिताभिस्तरङ्गततिभिरुत्सङ्गिता गन्तुमनिच्छतीव दोलायते तवेयं यानपात्री । तद्यदि करोषि मे वचनम्, आलोचयसि नीतिमार्गम्, इच्छसि कुशलमस्यात्मनायकस्य, तन्निवर्तय तावदेनम् । प्रसादय च विस्तरेण स्तावकैर्वचोभिः । आचक्ष्व च समस्तमास्ते मनसि यद्विवक्षितम् । इयं हि तव गोत्रदेवता सर्वकालमेवोपासनीया, विशेषेणाद्य विषमजलदुर्गपतितस्य । किं च प्रतीक्षस्व तावत्प्रसीदन्तमुदधिम् । अतिवाहय वहन्तमेतमशुभं मुहूर्तम् । आसादयोपजायमानं मनोज्ञं शकुनम्' । अथ निशमिताखिलत्वन्मनोदुःखसंजातकरुणया कृतानुग्रहोऽनया 'गच्छ निर्विघ्नम्' इत्यभिहितस्तया शीघ्रमेव तां नावं न्यवर्तयत् ।

अभाषत च सप्रश्रयो वचनम्—'आर्ये, कालोचितं कृत्यमुपादिशन्त्या त्वया किमप्यनुगृहीतोऽहम् । को हि भवन्तीं विहायेदृशं

१. 'द्रुतौ' स्यात्.

वक्ति । करोमि सर्वं यत्त्वयादिष्टम्' इत्युदीर्य घटितकरसंपुटः परस्परमुखप्रहितकौतुकस्मेरतारकाभिर्मुग्धो वराक इति शनैर्ब्रुवाणाभिर्दृश्यमानस्ताभिरस्मत्सहचरीभिरुच्चोच्चारिताक्षरेण वचसा वक्तुमारभत—'तामात्मना वन्दे विदुष्टदुस्तरास्मद्व्यसनविषण्णमनसा निसर्गकरुणार्द्रमन्तःसौहार्दमनुरुध्यमानया परोपकारविधिनि[1]र्विद्धावधानया निवर्तितो गमनादेतया मान्यया प्रवर्तितश्च निःसामान्यया स्वामिभक्त्या वक्तुमिच्छति किमप्ययं भृत्यपरमाणुः 'मा कृथाः पृथुश्रोणितरल इति जाड्योपहत इति जालिक इति ग्राम्य इत्यवज्ञाम् । नाहमीदृशः प्रियदर्शने यादृशं पश्यसि माम् । अग्रेसरोऽहं सर्वधी[2]वराणाम्, प्रा[3]ग्रहरो दू[4]रदर्शिनाम् । जानाम्यहमनेकप्रकारा भु[5]जङ्गानां गतीः, अवैमि दृष्टिगोचरगतानां मत्स्यादिरूपधारिणां सत्त्वानां चेष्टाः, स्रष्टा स्वयं नागरकवृत्तस्य, प्रकृष्टः किमपि विश्लिष्टानां संधिघटनासु, विद्यते विशिष्टा वंशसंपत्तिः, अस्ति च परोपकारकरणेषु तत्परता, त्वमपि गुणवती गम्भीरा सकर्णा बहुक्षमा स्थिरा महार्था महापुरुषोद्वहनयोग्या पात्रमिति सम्यग्वि[6]जाता मया । यत एवं विज्ञापयामि—एष एतावत्स्वामितनयः स्वामिनि भवत्यैव हेलोत्तालचलनरणन्मुखरमञ्जीरया सलीलवल्गत्तुङ्गतरप[7]योधरकलशया म[8]दवशाद्दर्शितासमञ्जसचेष्टया मुहुश्चलन्त्या मुहुर्विलम्बमानया मुहुर्मुह्यन्त्या मुहुर्विभ्रमानातन्वानया ग्रासमात्र एवात्र परामस्वस्थतामानीतः, विसंष्ठुलावयवं च यावत्किल प्रतीकारहेतोः स्थानान्तरं प्रापयामि, तावदयमकाण्ड एव क्षुभितेन

---

१. 'निबिडा' स्यात्. २. प्रज्ञावतां मात्सिकानां च. ३. प्रधानः. ४. दीर्घदर्शिनाम्. ५. विटाः सर्पाश्च. ६. 'विज्ञाता' स्यात्. ७. पयसो धारकः स्तनौ च. ८. मम वशाभावात्, हर्षवशाच्च.

बिभ्रतातिभीषणं रूपमुच्चापेनामुना[1] मीनध्वजेन[2] ध्वज इवोत्पातपवनेन सुतरां कृतः पर्याकुलः, विक्लवीकृतं चैनमुत्कलिकाभिराभिस्त्वमाश्वासयितुमेका[3] क्षमा, किमर्थमौदासीन्यमवलम्बसे। रक्ष सर्वथा दुर्निवारान्मारोपद्रवान्नृपकुमारम्[4], आर्तोऽहमतिमात्रमत्रावसरे। वरगात्रि, त्वमस्य शरणम्, त्वं परित्राणम्, त्वमाश्रयः, त्वं विश्रामभूमिः, त्वमवलम्बनम्, त्वयायं गतिमान्, त्वया चेष्टावान्, त्वया कर्णधारिण्यास्य[5] वचने प्रवृत्तिः, त्वया व्यापारितस्निग्धतारकया[6] जीवितव्यम्, त्वयानुकूलं वर्तमानयानुकूलं दैवम्, त्वयि प्रसादवत्यां प्रसन्ना देवता, त्वयि कृतानुग्रहायामनुग्राहिका ग्रहदृष्टयः, प्रसीद मानिनि[7], परिहर भ्रमम्[8], आलोचय स्वकार्यमल्पमपि। मा दोलायस्व कृत्वा स्थिरमवस्थानम्। अत्रैवास्स्व तावत्। मा प्रकृतिपारिप्लवाभिराभिर्नीता तरलतां परमान्तरङ्गालीभिः[9], उत्पत नभसि, मा निपत सागराम्भसि, मा प्रविश रसातले, मा समाश्रय दिगन्तानहृदये स्थानादितः प्रस्थिता न किंचित्प्रसाधयिष्यसि स्वार्थम्। केवलं महात्मानमेनमुद्वेगावर्ते[10] महति पातयिष्यसि। स्वयं च कन्दर्पपीडिता[11] पतिष्यसि। परित्यजन्ती च दूरारूढं मध्यस्थमधिष्ठातारं त्रातारमीदृशं पुरुषमात्मपरिजनस्यापि शोच्यतामुपयास्यसि। लोके च लघुतां वक्रतां कठोरतामूर्ध्वमुखतामकुलीनतामचेतनतां प्रकाशयिष्यसि। प्रवर्तिता च गुरुभिर्वृद्धैर्वातैरनिच्छन्त्यपि पतिष्यसि जराजर्जरदन्तपङ्क्तेः[12] कस्यापि प्रान्तभूभृतः[13]

१. उच्चा आपो यत्र, उत् चापो यस्य वा. २. जलधिना कामेन च. ३. तरङ्गैः उत्कण्ठाभिश्च. ४. कामो मरणं च. ५. कर्णधारयुतया सकर्णया वा. ६. नाविका कनीनिका च. ७. मानोऽहंकारः मानं प्रमाणम्. ८. भ्रमणं मोहश्च. ९. तरङ्गपङ्क्तिभिः परमां तरलतां नीता, परमा अन्तरङ्गा आलयश्च. १०. उद्वेग एवावर्तः प्रबलावर्तश्च. ११. कं जलं तस्य दर्पः, कामश्च. १२. दशनाः पर्वताद्बहिस्तिर्यनिर्गतप्रदेशाश्च. १३. राज्ञः पर्वतस्य वा.

शिरसि । करिष्यसि वि[1]फलकङ्केनापि निपुणेन विधिना विनिर्मितं महागुणरत्नानां पात्रमुदधिपारेषु विदि(हि)तविलासमतिचारुतया लब्धप[3]ताकमात्मनः शरीरलाभम् । आसादयिष्यसि च सानुशया [4]मदनायत्ततादोषेण सततमनिन्धेन नाम्रिना पच्यमाना [6]महाहिमकरोपद्रवपीडिताल्पदिवसैरेवोपजातजराविनाशम् । तदेवं स्थिते यद्यभिमत[7]मङ्गनेपथ्यमनुरुध्यसे, मम प्रार्थनामनुकम्पसे, महाभागमेनं सोपयोगात्करोषि निजगुणान्, आलोचयस्यात्मनो निर्वाहम्, बिभेषि भाविनो व्यसनात्, अपेक्षसे जनतः साधुवादम्, इच्छसि कनकपट्टबन्धम्, तद्विलासिनि, मा विधेहि द्विधा रुव(?)म्, आश्रय स्वयंवरपथम्, मानयैनमक्षुण्णमार्गेण, भव यात्रोन्मुखी, प्रवर्तस्व सहिता समस्तेनात्मपरिच्छदेन, गच्छ निर्विघ्नमस्यैव रक्षिता [8]महीक्षितः प्रभवेण, लङ्घय निराकुला देशकालज्ञेन सूक्ष्मदर्शिना छिद्रावरणचतुरेण चारित्रवता प्रतिक्षणं विनोद्यमाना मया नदीनामीशम्, प्रविश निरन्तरच्छत्रखण्डच्छादिताम्बरैर्नृपतिभिः परिवृता सर्वतो दर्शितपताकाडम्बरं शिबिरम्, कुरु [9]करग्रहणोत्सवानन्दिताभिः प्रधानदासीभिः पर्यन्तेषु संचारितचामरा [10]चन्द्रलेखालंकृतेन मुखेन स[11]कङ्कणा कौतुकानि, भव महानरेन्द्रपोत[12]प्रणयिनी, प्रतीच्छ पूर्णोपयाचिताभिः प्रकृतिभिः सादरमुपनीताः पदे पदे स[13]मधुकरकाः कुसुमस्रजः, भज निराकुलम-

१. निष्फलं विगतफलकं वा. २. विविधं लसनं विभ्रमश्च. ३. केतुः सौभाग्यं च. ४. ममानधीनता कामवशता च. ५. वडवानलेन विरहेण च. ६. महतामहीनां मकराणां चोपद्रवेण महता चन्द्रस्योपद्रवेण च. ७. कल्याणाङ्गि शरीरनेपथ्यं च. ८. राज्ञः. ९. राजग्राह्यभागः पाणिश्च. १०. मालोपभागमण्डनार्थं चन्द्राकारा लेखा क्रियते. ११. 'कङ्कणं करभूषणे मण्डने हस्तसूत्रे च,' पानीयकणसहिता च. १२. प्रवहणं कुमारश्च. १३. मधुकराः भ्रमराः, करका वर्षोपलाः.

नारतोत्सवान्, प्रवर्तय तरङ्गताड्यमानपृथुनितम्बफलकां तीरतरुकुसुमसंवलितश्रो(स्रो)तोजलासु वेलानदीषु जलक्रीडाम्, उपरि विततविशालसित[1]पटा च संचर स्वयमनेनोपदिश्यमानमार्गा निसर्गशिशिरेषु वारिराशेरस्य सुवेलमलयोपान्तवर्तिषु वेलावनेषु। किं वानेन बहुना। प्रभुरप्येष भृत्यतामुपनीय सहितः समस्तेनात्मवित्तेन तव समर्पितो मया। कुरु स्वमहिमोचितम्' इत्युदीर्य कन्धरानिहितपाणिस्तं मे नृपकुमारं चरणयोरपातयत्।

असौ तु कृत्वा प्रणतिमुन्नमितवदनो विलक्षया दृष्ट्या विलोक्य मे मुखमुद्भिन्नहासः सविलासमुल्लासितेन लीलारविन्देन ताडयित्वा शिरसि तमवोचत्—'मूर्ख, कस्यास्त्वया कारितः प्रणाममेवमत्यादरेण। का चेयमन्यतो मुखनिबद्धकरसंपुटेन प्रसादिता भवता, यां प्रसादयितुमिदमेतावदनिबद्धमभिहितं त्वया। जानासि तां क्व सा तिष्ठति' इति ब्रुवाणं तमन्तर्मुखनिरुद्धहासोद्गमः स नाविकयुवा पुनरवादीत्—'कुमार, दोषग्राही शून्यहृदयश्च त्वमिति निश्चितं मयाद्य, येन सर्वदा प्राकृतलोकसहवासिनः प्रकृतिमुग्धस्य ममाप्युचितकारितां विचारयसि। एतामपि पुरस्थितां प्रत्यक्षदेवीं प्रसादितां का त्वयेयमिति पृच्छसि। अहो, सालस्याग्रतो देहि दृष्टिम्। प्रकटमेवावेदयामि। येयमभ्यर्ण आस्ते नौ[2]रतिरूपधारिण्यवनिपालनन्दनी, सा त्वदर्थे मयेत्थमभ्यर्थिता। त्वमप्यस्या एव पातयित्वा चरणयोः सह समस्तेनात्वा(त्म)विभवेन भृत्यतां नीतः, न कस्याश्चिदन्यस्याः' इति गदन्तं च तं सहासमाकृष्य भावितदीयवक्रालापर्स-

१. सितः पटो यस्याः, सिद्धश्च. २. अतिरूपधारिणी नौः, नौ आवयोः रतिरूपधारिणी वा.

जातहर्षः सतर्षं पुनः पुनराश्लिक्षत्। अहं तु प्रकृतिमुग्धापि वे(ते)नानिमित्तदर्शितादरेण तस्य क्षितिपसूनोस्तथाविधेन सहसालिङ्गनेन भिन्नहृदया विहस्य चिन्तितवती—'अहो समस्तोऽपि कर्णधारस्यास्य मत्प्रयोजनोऽयमारम्भः। तथा हि—पूर्वमेवास्य मेदिनीपालसूनोः प्रकर्षमागतमुपलभ्यानुरागमप्रयुक्तेनाप्यनेन प्रकृतिदुःप्रवेशे त्वदीयमनसीव देवतागृहेऽत्र प्रवेष्टुमयमिच्छतीति मे कृतं दौत्यम्। ततः 'प्रतिपालय क्षणमात्रम्, अत्र क्षणे बलवदस्वस्थं मे शरीरम्' इति निषिद्धगमनेनापि विदितो मयायं तव व्याधिः। अहमेवैनमपनेष्यामीत्यभिधाय भर्तुर्बलात्प्रचलितेन कृतनिवारणाहमेतदर्थिनीयमिति निश्चिता पश्चाद्वसन्तसेनावचनमवलम्ब्य तूर्णमेव विनिवृत्तेन प्रस्तावमुपलभ्य नौप्रसादननिभेन प्रवर्तिता बहुलप्रकारम्। तथा हि—नानीतमात्मनः प्रार्थनालाघवम्, प्रकाशिता निजनायकस्य गुणाः, दूषितमन्यपक्षाश्रयणम्, कृतं ममोपलोभनम्, व्यामोहितः पार्श्ववर्ती जनः, न जनितं कस्यापि वैलक्ष्यम्, अभिहितमनाकुलेन सर्वं सविस्तरमात्मप्रयोजनम्, समर्पितो निरपवादः स्वामी। सर्वथा कृतार्थ एव पार्थिवसुतः, यस्यात्यन्तदूरवर्ती प्राकृतजनोऽप्येवंभूतः' इति विचिन्त्य भूयश्चिन्तितवती—'अनेन तावन्महात्मना कृतं स्वामिभक्तेरात्मबुद्धेश्च समुचितम्। मया तु किमिदानीं कर्तव्यम्। यदि तावदस्य वचनमनुवर्तमाना नरपतिकुमारमेनं समाश्रयामि, ततः स्वापत्यदुर्विनयजनितोद्वेगस्य गुरुजनस्य कोपोत्पादनादधर्मः। अथ बिभ्यती तस्मादवधीरयामि, ततोऽस्य जातिमात्रव्यवहितस्य प्रज्ञानिधि(धे)र्महापुरुषस्य प्रथमप्रणयभङ्गोऽस्य चात्यन्तमरक्तस्य राजसूनोर्विमानना। यदि पुनरयं मत्प्रणामविफलताजनितवैलक्ष्यः सविधवर्तिनोऽस्यापि नाविकजनस्य

लज्जया जलनिधौ पतति, तन्न पातकमनेकेष्वपि जन्मान्तरेषु याति प्रशमम्। तदलमतिभूयसा विचारेण। स्वीकरोम्येनम्। अविरुद्धो हि राजकन्याजनस्य स्वयंवरविधिः। कथं पुनरेतावतो जनस्य मध्ये वर्तमानया हासकरमेतत्साहसं कर्तव्यम्। कथं च दुर्गस्थयायमनुगन्तव्यः। किं वानुगमनेन। दूरस्थिताप्यनुपलक्षितानेन सहचरीलोकेन। केनापि विधिना नयाम्यात्मानमस्य कलत्रभावम्। अप्राप्तसंगमयापि वरमस्य भुवनश्लाघ्यसंबन्धस्य सर्वगुणनिधेर्गेहिनीशब्द ऊढः। न मूढमनसान्येन सहितयोपभुक्तमाजन्म भोगसुखम्' इति चिन्तयन्त्यामेव मयि तस्माज्जिनालयादनुल्बणोदारवेषधारी दर्शनीयाकारेण रुधिरवाससा वामभुजनिवेशनिश्चलमनुलेपनपूर्णपर्णपुटसनाथमभिनवं पुष्पपटलकं दधानेन देवलकदारकेणानुगम्यमानः **तपनवेग**नामा राजपुरुषः समेत्य सादरमवादीत्—'**मलयसुन्दरि**, गृहाणेदमानीतं मया जिनप्रतिमासमालभनावशिष्टमुत्कृष्टपरिमलमखिलजनदृष्टिहारि हरिचन्दनम्। चन्दस्व तिलकविधिना। बधान चैतानि भगवतः पूजार्थमाहृतानि दिव्यतरुकुसुमदामानि शिरसि' इति गदिते तेन सत्वरः स देवलकदारकः समुत्सारितार्द्रकर्पटाच्छादनं पुरो मे पुष्पपटलकमकार्षीत्। अभाषत च हर्षोत्सेकैर्वचोभिः—'आर्ये, संप्रत्येव नृत्यन्त्यास्तवातिरभसेन सारसन[1]मध्यसद्मा समुच्छलित एष पद्मरागः। तद्गृहाणैनम्' इति पुनः पुनर्भाषमाणं तथैवाभिमुखमर्पितेक्षणा तस्य नाविकपतेर्विहस्य सावज्ञेव तमवादिषम्—'भद्र, किमहं न शृणोमि, येन भूयो भूयस्तमेवार्थमावर्तयसि। सर्वमवधारितं ते वचनम्। अङ्गीकृतश्चायं नायकः[2]। किंतु तिष्ठतु तावद्यावदहमिहस्था। स्वस्थानमुपगता तु काञ्चीमध्य[3]मागतं ग्रहीष्याम्येनम्' इत्यभिहितो मया स तूष्णीमभवत्।

---

१. काञ्ची. २. तरलो भर्ता च. ३. रसना पुरी च.

ततोऽहमादाय तस्मात्पुष्पपटलकादेकमतिमनोहरं कराभ्यां कुसुमदाम किंचिदवनमितपूर्वकाया समुद्रपूजाव्यपदेशेन तस्य प्राकारतलवर्तिनो नृपकुमारस्य कण्ठदेशे न्यवेशयम्। उपरि कीर्णहरिचन्दनद्रवायां च मयि स राजपुरुषस्तेनानुलेपनेन तासामस्मदासन्नवर्तिनीनां राजकन्यानामलिकलेखासु तिलकानकार्षीत्। अहमपि स्वहस्तविरचितविशेषकैकस्याः सविधवर्तिन्याः कन्यकायाः करतलादाय वदनावलोकनव्याजेन मणिदर्पणमन्तरितपार्श्वपरिजनदृष्टिपाता तिर्यक्प्रवर्तितेन चक्षुषा तस्य तत्क्षणोपजातद्विगुणसौभाग्यमङ्गलेखालावण्यमखिलमप्यपास्तशङ्का पुनः पुनरापिबम्।

अथ प्रीतिपुलकिततनुः स पृथ्वीपालतनयः स्तनकण्ठावलम्बितत्क[1]रार्पितेन पुष्पदाम्ना तत्र क्षणे साक्षादवाप्तपाणिग्रहणमात्मानं मन्यमानो विहस्य किंचिद्विहितनतिमात्मनः प्रणयिनं कर्णधारमब्रवीत्—'तारक, किमीक्ष्यसे वारंवारम्। अस्याः स्रजः खण्डमपि मया न विभजनीयम्। यदि पुनस्तवाभिलाषोऽत्र, तदिमामेव भङ्गया कयापि भूयः प्रार्थयस्वेदृशीमपरां पुष्पमलाम्' इत्यभिहितोऽसौ सदुःखमवदत्—'कुमार, कमहमिह याचे। विफलतां गतः स तावन्मम प्रयासः। सहैव परिजनेन सा तव प्रणयिनी स्वशक्त्या तिरोधाय पश्यत एव मे नीता कैश्चिदपि मायाविभिः। इहैव स्थितस्य ते हस्तगोचरगतां करिष्यामि तामिति न पूर्णा मे मनोरथाः क्षीणपुण्यस्य' इति अहं तु तच्छ्रुत्वा 'हन्त, किमनेन नर्मणा भाषितमिदम्, उत कथंचिदुत्पन्नविभ्रमः। सत्यमेवैष मां न विभावयति, तेनैतदभिधत्ते' इति चिन्तयन्ती दृढानुरागनिश्चलमाकृष्य तस्य क्षितिपसूनोराननाच्चक्षुः समन्तादवेक्षितवती।

१ 'लम्बिनातत्क' स्यात्.

दृष्ट्वा च तत्क्षणमेव तत्प्राकारशृङ्गमुत्सङ्गमिव हिमगिरेरक्रमोच्छिन्नकल्पलतावितानं ताभिरवनीपालकन्याभिः शून्यमुत्पन्नसाध्वसा झगिति मोहमगमम् । उपलब्धचेतना च चिन्तयन्त्यनन्तरमेवोपजायमानमात्मनोपहरणसदृशं नरेन्द्रसूनुना सह वियोगमुद्वेगाग्निनिमग्नदेहा यावदतिवाहयामि क्षणमात्रम्, तावत्सोऽपि नृपकुमारः प्राकारशिखरमवलोक्य निर्जनमतर्कितोदीर्णशोकः शीर्णतरुरिवातितूर्णवातापनीतजीर्णपर्णनिवहः सहसैव विच्छायतामगच्छत् ।

दृष्ट्वा च तन्मया स्वहस्तारोपितमुरस्थलावलम्बि स्वयंवरदाम युगपदास्कन्दितो हर्षविषादलज्जादिभिर्भावैः कृताकारसंवृतिः स्थित्वा क्षणमकाण्डविफलीभूतनिजसमीहितविषण्णं तमात्मनः प्रणयिनं नातिक्युवानमवदत्—'तारक, किमर्थं विषीदसि वृथा । कस्तवात्र दोषः । किं करोति सततमवहितोऽपि पुरुषश्छन्नवपुषां प्रकृत्यैव मायिनाम् । कृतं त्वया यत्कर्तव्यम् । आविष्कृतः स्नेहस्य भक्तेरभियुक्ततायाश्चैषा क्रमः । प्रापितो मतिविशेषः प्रकर्षम् । आनीतमवधिमप्रयत्नेन कार्यमारब्धम् । आहितो हेलयैवातिदुष्करो मे कन्यारत्नलाभः । यत्तु घटितोऽप्यसौ झटिति विघटितस्तद्विधातुरसद्भाग्यदोषपोषितपुरुषकारस्य दौरात्म्यम्, न ते बुद्धिगुणस्य । तदलमनुतापेन । गच्छ त्वमेभिर्निजसहायैः सह स्कन्धावारम् । कारय किरातयोधायोधनेषु दृष्टनिर्व्याजभुजपराक्रमाणामनुजीविनां जीवनमुदारम् । दापय निर्देशेन मे स्वदेशमुद्दिश्याधुनैव प्रयाणमखिलसेनापरिवृढं दृढवर्माणम् । कुरु चमूपुरःसरानमात्यसामन्तदण्डनायकान् । उत्साहय सहायविकलं कुलीनसेवकव्यूहम् । संवाहय छन्नमन्नदानेनाखण्डदण्डयात्राकर्शितशम्बलमनीकदुर्बललोकम् । आलोकय त्वरितमेव गत्वा तातम् । अर्पय

द्वीपान्तरजयार्जितं तदधिकारिभ्यः कृच्छ्रमप्यनश्वरं कृत्वा कथनं स्वरम्। उपनयाविलम्बमम्बाजनस्य यथास्वमङ्कितं नामभिरिहत्यमकलङ्कमाणिक्यमुक्ताफलविभूषणं भूषणकलापम्। प्रवितर यथायोग्यमुद्धतारातिनगरलुण्टासुलुण्टायकैराहृतानि प्रशस्तताडीपत्रविन्यस्तलोचनलेह्यलिपिविशेषाणि पिण्डीकृत्य पण्डितेभ्यः समस्तानि पुस्तकरत्नानि। अपरमपि मत्कृत्यमवधार्य निजयैव प्रज्ञया कुरुष्व निःशेषम्। मया तु न प्रदेशादितः पदमपि प्रतीपं[1] गन्तव्यम्। यन्त्रितोऽहमत्रैवानया। तत्करद्वयीनिबिडसंदानितया करेणुरिव कण्ठरज्ज्वा स्वयंवरणमालया न शक्नोमि व्यध्यश्रजमिवोद्वहन्निमां[2] कन्धरबद्धां बन्धुलोकं तं द्रष्टुम्। तदेष बद्धो मया ते पश्चिमः प्रार्थनाञ्जलिः। न कार्यः कार्यवेदिना मम स्कन्धावारगमनायानुबन्धः। किं चाङ्कदेशापहृतकलत्रेण[3][4] निष्फलशस्त्रधारिणा[5] विपक्षपक्षप्रतीकाराक्षमेण नीते[6] मापि साध्यं मया, यस्माद्गतेनापि तत्राकृत्रिमप्रियतमानुरागस्मरणदारुणक्रकचदारितहृदयमर्मणा द्वित्रैरेव दिवसैः प्रवासनीयाः प्राणाः। तद्वरमिहैव दिव्यदेवतायतनसंपर्कपूते निरुपहतपाथसि समन्मथव्रीडमवलोकयन्त्यास्तानि तानि मदनुरागललितानि मुहुर्मुहुः प्रतिफलितया भिन्नफलिनीस्या-[7] (श्या)मावदातया तस्याः शरीरलतया कृतावगाहे वाहिनीपतिश्रो(स्रो)तसि प्रियाबाहुपाशमिव शमितवेदनं दधानेन वक्षसा कुसुमदामवैकक्षककल्मष एव मषीमलीमसानामीमषां कुतो मोक्षः' इत्युदीर्य विहितार्णवप्रणामः 'हा हा कुमार, किमिदं त्वयारब्धम्। अलमलं साह-

१. पश्चात्. २. 'वध्यस्रज' इति स्यात्. ३. क्रोडे अन्तिके च. ४ भार्या दुर्गस्थानं च. ५. व्यर्थं फलकरहितं च. ६. 'नीतेनापि किं साध्यम्' इति स्यात्. ७. प्रियङ्गुः.

सेन। विरम मुहूर्तम्। आकर्णय वचनमस्माकम्' इति निवार्यमाणोऽपि तेन प्रणयिना कर्णधारेण जलनिधावात्मानमक्षिपत्।

निपतिते च तत्राहमप्याबद्धमरणाध्यवसाया 'समुद्रजलनिमग्नमप्येनमालिङ्ग्य सफलीभूतजीविता निखिलदुःखायासगेहं देहमिह उत्सृजामि' इति स्वभावकातरतया स्त्रीहृदयस्य दृढनिमीलिताक्षियुगला ततः सालशिखरादुत्प्लुत्य जलनिधावात्मानममुचम्।

उन्मीलितेक्षणा च क्षणान्तरे न तमुदग्रमणिसानुदीधितिध्वस्तगगनान्तरालतिमिरजालं रत्नकूटशैलम्, न तन्मूलभागसंनिविष्टमखिलविष्टपाद्भुतैकसदनं तदायतनम्, न तत्प्राकारपर्यन्तेषु सर्वतः प्रेङ्खदुच्छृङ्खलवीचिमालं तमर्णवम्, न तमभ्यर्णभाजमात्मनो गृहीतछत्रचामरमाद्यदर्शनेऽपि प्ररूढगाढसख्यमनवगीतनाट्यगीतादिकलाकौशलमवनिपालबालिकाजनम्, न तमब्धिपतितस्य क्षितिपसूनोः समुत्तारणाय समकालकृतजलनिधिप्रपातं नाविकव्रातम्, केवलं तस्यामेव प्रदोषसमयाध्यासितायां निजस्य कन्यान्तःपुरप्रासादस्य शिखरशालायां शयनतलमधिशयानमात्मानमद्राक्षम्। उत्पन्नसाध्वसा चकितमेतदिति[1] चिन्तयन्ती स्थित्वा मुहूर्तमनेकसंकल्पपर्याकुलमानसा 'तत्कालमुपकल्पितो मया यस्तिलकः, स किं तथ्य उत मिथ्या' इति विज्ञातुमग्रपाणिना ललाटदेशमस्पृशम्। अपश्यं च मांसलामोदतर्पितघ्राणमङ्गुलीलग्नमार्द्रमेव चन्दनपङ्कम्। अपसृतस्वप्नदर्शनशङ्का च तदवलोकनेन सकलमपि रात्रिवृत्तान्तमवितथं मन्यमाना तमपनीतसर्वाङ्गीणपट्टांशुकप्रावरणा रणितमणिना भूषणचक्रवालेन वाचालयन्ती चित्रशालिकां शय्यामसुञ्चम्। समासीना च शयनासन्नवर्तिनि हेमपीठे सोत्कण्ठेन मनसा

१. 'च किमेतदिति' इति स्यात्.

तस्य जलनिधिमध्यदृष्टस्य नरपतिकुमारस्य चिन्तयन्ती तुलितकुसुमायुधां रूपसंपदमनुरागचेष्टितानि च निरुद्धसकलचेष्टा स्तम्भितेव लिखितेव वामहस्तविन्यस्तवदना यावत्तिष्ठामि, तावदागता तत्र शैशवात्प्रभृति रूढगाढप्रणया द्वितीयमिव हृदयमेकभूमिर्विश्रम्भस्य परं प्रगल्भा परेङ्गिताavबोधे, बन्धुसुन्दरी नाम समवयाः सखी मे । प्रविश्य विहितप्रणामा मत्पार्श्वभूमौ संभ्रान्तपरिचारिकानिहितमनतिसंनिहितमासनमभजत् ।

आसीना च तूष्णीमेव क्षणं निरीक्ष्य प्रत्यङ्गमाहितेन निश्चलपक्ष्मणा विस्मयस्तिमिततारकेण चक्षुषा चिरं मामुत्सारितसमीपचारिपरिचारिकाजना शनैरवोचत्—'भर्तृदारिके, महदाश्चर्यम् । अन्यः कोऽपि दृश्यत एष ते वेषपरिग्रहः । कानचिदपूर्वाणि दिव्यलोकसंभवानीवामूनि सुमनोदामानि । न ताः सन्ति सायंतन्यो मालतीस्रजस्तमिश्र (स्र) नीकाशे केशपाशे [१]कीनाशानुजाजलश्रो (स्रो) तसीव [२]त्रिश्रो- (स्रो) तोवीचयः, याश्चित्रया विन्यासगत्या विरचिताः स्वयं मया । कथय केन परिवर्तिते शरत्कालबालातपशुचिभ्यामग्निशौचसिचयाभ्यां दिनावसाननिवसिते शुकाङ्गरुचिनीते चीनवाससी । कुतश्चायमासादितः सार्द्रमृगनाभिकर्पूरानुविद्धः सर्वतः प्रधावितैराकुलाकुलैरलिकदम्बकैर्विलुप्यमाना विरलपरिमलो विलेपनविशेषः । सशेषनिद्रामन्थरोन्मेषेणालोहितापाङ्गवीचिना लोचनयुगेन सूचितं किं निदानमिदमतिशयेनायामिनीजागरणम् । उल्लासितश्वासा विजृम्भिका प्रकाशितस्वेदकणिकोद्गमा च पाण्डुक्षामयोर्गण्डतलयोरकाण्ड एवेयमङ्गैः किमङ्गीकृता ग्लानि (?) : । अन्यच्च शयनीयमिदमधिशयाना प्रविश्य प्रथममवलो-

---

१. यमुना. २. गङ्गा.

कितापि निपुणं मया त्वं न दृष्टा दृष्टया च सांप्रतम्। तत्किमेतत्। कथय तथ्यम्। अत्यर्थमाकुलं मे हृदयम्। अन्यदेवोत्प्रेक्षेते किंचित्' इत्युत्पन्नरात्रिवृत्तदिव्यसुरतसंभोगविभ्रमभ्रमया ससंभ्रममनुयुज्यमाना तया वारंवारमीषदुपजातहासा सधीरमवदम्—'सखि, किमेवं सखेदासि। कृतमनिष्टशङ्कया। निराशङ्कास्व। मा स्वप्नेऽपि मां प्रतिकृथाः संकल्पमल्पसत्त्वसदृशमीदृशम्' इत्युदीर्य तस्याः सर्वमेव स(श) वैरीवृत्तमात्मवृत्तान्तमादितः प्रभृत्यकथयम्।

अथ सा तदाकर्णनेन परमोपजातनिवृत्तिस्तृप्तेवामृतेन कृतकृत्यमात्मानं मन्यमाना पुनः पुनरावर्त्यावर्त्य पृच्छती तमेव मद्वृत्तान्तमतिचिरं स्थित्वा स्वभवनमगच्छत्।

अहं तु संजातविस्मया मुहुर्मुहुर्विमृशती 'यदद्य पर्यङ्कमधिशयाना कृतानुबन्धयाप्यनया **बन्धुसुन्दर्या** न पूर्वमवलोकिता, तदा च कैवर्तपतिना क्षितिपतिकुमारेण च तेन पुरतोऽपि स्थिता परिवारसहितैव सा कैश्चिदपहृत्य नीतेति यत्संभाविता, स तस्य हरिचन्दनतिलकबिन्दोर्ललाटलब्धास्पदस्य स्पष्टमनुभावः। यतः प्रमृष्टे तत्र पुनरागतायाः समागता दृष्टिगोचरमहममुष्याः' इति विचार्य भूयोऽप्यचिन्तयम्—'यद्वा किमेतेन। **मलयसुन्दरि**, वन्दस्व सकलजनदृष्टिहारि हरिचन्दनमेतत्' इति वादिना तेन विद्याधरेण व्यक्तमेवोदिता तस्य शक्तिः' इत्यादि तत्तद्बहुविकल्पयन्त्यनल्पेनास्पदीकृता विषादेन परिहृताभरणमण्डनाभ्यवहारा तद्दिनमनैषम्।

अन्येद्युश्च समुपागता **बन्धुसुन्दरी** सुदूरमारूढशोकामायतोष्णनिःश्वासविधुरीकृताधरामनारताश्रुधाराधौतगण्डस्थलस्थापितोभयाग्रकरतला-

१. 'दृष्टा' इति स्यात्. २. 'उत्प्रेक्ष्यते,' इति स्यात्.

मखिलयामिनीजागरणविद्राणवदनश्रियमाहारपरितारादधिकतरतनूदरी-मवलोक्य मामेकाकिनीमनुस्मृतपूर्वदिननिवेदिताशेषमद्वृत्तान्ता 'हन्त यः स कोऽपि कण्ठे कुसुममालामारोप्य कल्पितो वरत्वेनानया नृपकुमारः, तस्मान्न शक्यते वाक्यशतैरपि निवर्तयितुमतिनिश्चलनिश्चयैषा । विषादोऽप्येष तत्सागरपतनजनितो नियतमस्याः' इति चिन्तयित्वा मुहूर्तमार्तहृदया मामवादीत्—'भर्तृदारिके, विदितं मया ते शोककारणम् । अनाकुलास्व । भविष्यत्यवश्यं तव तेन नरपतिसूनुना सह समागमप्राप्तिः । अवितथादेशो हि तत्रभवानार्यवसुरातः । न तद्भाषितोऽर्थः कदाचिद्विसंवदति । निगदितं चानेन तव जन्मनि—'योऽस्याः कन्यकायाः पाणिं ग्रहीष्यति स निःशेषभुवनेश्वरस्य भूभुजो राज्यभारमखिलमपि चिन्तयिष्यति । चिन्तितश्च स त्वयात्मनः पाणिग्राहः । तस्मादल्पमपि कार्यो न निर्वेदः । न च सुकृतकर्मणा केवलेनैव संजातसंभवानां भवादृशीनामनुबन्धमप्राप्येषु वस्तुषु विधत्ते बुद्धिः । अचिरेणैव भोग्यं त्वया सकलभुवनैश्वर्यम्' इत्यादिदर्शितबहुविकल्पैरुपपत्तिमद्भिस्तदीयजल्पैः किंचिदल्पीभूतशोका तत्कालमासन्नवर्तितयातस्योत्तारणसमर्थस्य कर्णधारसार्थस्य समुद्रपतितेनाप्यनासादितविपत्तेः पुनः स्वस्थानमुपगतस्य दृश्यमानतयात्मदेहस्य दुस्त्यजतया जीवितस्य दुर्निषेधतया प्रियजनसमागमाशाबन्धस्यावश्यमनुभाव्यतया च दुःखानामीदृशानां प्रत्यक्षवीक्षितमरणमपि तं जनं जीवन्तमुत्प्रेक्षमाणा तत्र क्षणे मोक्तुमुचितं शरीरमाहारं च न परित्यक्तवती ।

१. 'परित्यागा' स्यात्. २. 'यत्' स्यात्. ३. 'ष्यति इति' इति स्यात्. ४. आदरम् अभिलाषं च.

एकदा च विविक्तदेशस्थितां बन्धुसुन्दरी मामपृच्छत्—'भर्तृदारिके, तदा समुद्रोदरे तस्य कर्णधारधौरेयस्य नौस्तव च्छद्मना विधाय तां तथाविधप्रार्थनामुपनीतनिजपतेरपि दत्तं त्वया प्रतिवचनम्' इति पृच्छतीं विहस्य तामहं प्रत्यवोचम्—'सखि, किमेतेन तव चिन्तितेन। अद्यापि बहु चिन्तनीयमास्ते। यदि तावदवहितं[1] स्तस्य मद्वचनस्यार्थमवधारयिष्यति। निमग्नश्च सागरादुत्तरिष्यति। नितान्तमनुरक्तो वा मयि भविष्यति। स्थानं चैतदागमिष्यति। ततः स एव तन्नायकस्तवावेदयिष्यति। न चेत्किं मिथ्याप्रलापेन' इत्युक्ता मयैषा मौनमभजत्।

अहमपि ततः प्रभृति निभृतेन्द्रियवर्गवृत्तिर्गुरुजनानुवृत्त्या कृतप्रणयापि कुसुमताम्बूलभूषणाङ्गरागेषु वैराग्यमन्तः परमुद्वहन्ती, मुहुर्मुहुः प्रमृष्टपर्यश्रुनयना यथादृष्टमाकारं तस्य नृपकुमारस्य संचार्य चित्रफलके सततमवलोकयन्ती, प्रयत्नपरिपालिताभिः स्वसंवर्धितानां प्रधानवीरुधां सुमनोभिर्मनसिजं त्रिकालमर्चयन्ती, प्रोषितभर्तृकोपदिष्टनीत्या कष्टरूपाणि प्रियसमागमव्रतानि शश्वत्पालयन्ती, प्रियदर्शनं पुरुषवर्गमग्रतः प्रकटितोदारवेषं स्त्रीनिर्विशेषमवगच्छन्ती, स्मरातुरैर्नृपतिसूनुभिः स्वानुरागसंदर्शनाय प्रयुक्ताभिः पुरपरिव्राजकाभिः सख्यमव्रजन्ती, विहितापरवरनामोद्धट्टनां 'न दातव्यास्मि कस्मैचित्' इति सखीमुखेन जननीं निवारयन्ती, 'दुःसहः प्रियवियोगः' इत्युपजातकरुणा च दोहदानुभावाद्दिवापि विकसितानां विलासदीर्घिकानीलनलिनाकराणां प्रभान्धकारेषु रजनीशङ्कया विघटितानि मुग्धचक्रवाकमिथुनानि मिथः संयोजयन्ती, जडचेतसा परिजनेन भिन्नभिन्नाश्रयावस्थापितानि शुकचको-

१. 'हिता तस्य' इति स्यात्.

रकोकिलप्रभृतिपक्षिमिथुनान्येकत्र पञ्जरे निक्षिपन्ती, स्वनिर्वर्तितोद्वाहमङ्गलयोर्बालवृक्षलतयोराकृष्य पल्लवौ परस्परेण संश्लेषयन्ती, देवताद्वन्द्वानि च पृथग्निष्पाद्यमानानि सूत्रधारैरेकप्रतिमागतानि कारयन्ती, शोकविकला कंचित्कालमनयम्।

एकदा च मुकुलभरनम्रनूतनाम्रस्तम्बे स्तबकनिकुरुम्बसंबाधमाधवीवीरुधि मधुस्पन्दिसिन्दुवारे मन्दारामोदिनि मदकलितकामिनीकटाक्षच्छटाच्छोटनकुड्मलिततिलकितहरिति हरितालवर्णकुसुमाकीर्णकिंकिराते किरातकामिनीकर्णपूरोपयुक्तकर्णिकारे कोरकितकुरवके विकचविचकिले कलिकाचितकाञ्चनारावनीरुहि नीहारधवलाङ्कोल्लधूलिपटलसंपादितदिगङ्गनांशुके शुकचञ्चुकुटिलकुड्मलाकुलितकिंशुकपलाशिनि विलासिनीवदनसरकसेकविकासितबकुले मुकुलकलापकपिलितबालचम्पके पिककुलकलकोलाहलाकुलितसहकारकानने कोरकाननचुम्बिचञ्चरीकचक्रमेचकितमुचुकुन्दे मन्दारूढरविकरप्रौढिमनि हीयमानयामिनीमहिमनि हिमानीविरहमनोहरनीहारचन्द्रकिरणे निष्करुणमकरध्वजे अध्वजातलताकुसुमरजःपरिमलप्रथितपान्थमनोरुजि राजीविनीवनविराजितपल्वले पल्लविताशोकविटपिनि विपिनपाटलापरिमलपानपीनालिमाले मालतीकुसुमसमृद्धिमथिनि मन्थरितप्रथमपुरुषार्थसामर्थ्ये मिथुनमन्मथमुखसख्यदानदक्षे दक्षिणाशासमीरणोत्सारितमनस्विनीमानपरागे रागान्धबन्धकीजनरजनीयमानवासरे विसारिशृङ्गाररसागरप्लावितजगति जर्जरिताध्वगवधूजनजीविताशे निरङ्कुशीकृताभिनवयौव-

---

१. अत्र प्रतिलेखं निकुरम्बशब्दे रेफस्याप्युकारविशिष्टस्यैव दर्शनादुकारद्वयवानपि निकुरुम्बशब्दो भवेत्. २. मार्गोत्पन्न. ३. धर्मः. ४. धूलौ. ५. 'शृङ्गारो गजमण्डने। सुरते रसभेदे च'.

नविकारे निष्कारणोत्कण्ठितकठिनहृदयप्राणिकरणवृत्तावृतुचक्रवर्तिनि प्रवृत्ते सकलत्रैलोक्यरामणीयकैकवसतौ वसन्तसमये समधिकोदीर्णविरहव्यथामुदारसरसाभिराकस्मिकोपजातदुर्घटप्रियसमागमानां मनस्विनीनां चिरंतनाभिराश्चर्यकथाभिः शयनपर्यङ्कोपविष्टया **बन्धुसुन्दर्या** समाश्वास्यमानामुत्सुकोत्सुका समागत्य **कात्यायनिका** नाम शुद्धान्तचेटी प्रातर्मामवोचत्—'भर्तृदारिके, देवी समादिशति—'अद्यमदनत्रयोदशीप्रवृत्ता मन्मथायतने यात्रा । प्रस्थितो विचित्रनेपथ्यधारी समग्रोऽपि नगरनारीजनः कुसुमाकराह्वयं मन्दिरारामम् । त्वमपि सज्जीकृताशेषपूजोपकारणा प्रवर्तस्व परिवृता सखीजनेन । निर्वर्तय विशेषपूजामशेषविघ्नोपशमाय परमया भक्त्या । विहितभक्तिप्रह्वजनवाञ्छितार्थसिद्धेर्भगवतो मन्मथस्य दत्तासि पित्रा मन्त्रिवर्गोत्साहितेन विग्रहोपशमाय । संप्रति त्वत्प्रदानमात्रेणैव प्रतिपन्नसंधिररयोध्याधिपतिसेनापतेर्वज्रायुधस्य समागतास्तदीयप्रधानपुरुषाः । भविष्यति श्वो भवत्याः संप्रदानविधिः' इत्युदीर्य विरराम ।

अहं तु तच्छ्रुत्वा झटिति नष्टनिःशेषसत्त्वा वज्रदण्डेनेव ताडिता शिरसि, शूलेनेव निर्दारिता वक्षसि, उपरिपर्यस्तेन गिरिणेव गुरुणा समास्कन्दिता सर्वावयवेषु, मूर्च्छापरवशात्तत्रैव शयने तिर्यगपगता । प्रत्यागतचेतना च कथंचिदतिचिरेणोत्थाय दुःखभरपीडिता 'किमपुण्यकारिणमिदानीमेवात्मानमुपसंहरामि, किमप्रियनिवेदिकामिमामेव **कात्यायनिकां** सनिकारमात्मभवनान्निर्घाटयामि, किमित एव गत्वा समारब्धकोपकलहा शिथिलितानुवृत्ती रूक्षैरक्षरैः पितरमधिक्षिपामि, किमास्थानस्थमेव मन्त्रिवर्गमग्रतो राजलोकस्य लङ्घितौचित्या जवादुपसृत्य

१. निष्कारणोत्कण्ठितातिकठोरप्राणिनामिन्द्रियवृत्तिर्यत्र.

भृत्यजनमिव निर्दयं निन्दामि, किं 'मामशरणामितो मरणतुल्यादुपद्रवात्परित्रायध्वम्' इति दर्शितदीनभावबान्धवानभिधावामि, किम् 'एवंविधा बहुदुःखभागिनी निर्भाग्यां भवता कृताहम्' इत्यूर्ध्वबाहुर्विधिमुपालभ्योपालभ्य विलपामि, किमाकस्मिकोपनतासह्दुःखविद्राणवदनां बन्धुसुन्दरीमवलम्ब्य कण्ठे मुक्तकण्ठमाक्रन्दामि' इति महामोहावर्तपतिता मुहूर्तमेकं किमपि कर्तव्यमात्मनो नाज्ञाशिषम् ।

क्षणेन चोपशान्तकलुषचेतोविवर्तावर्तवलया जलदकालसरिदिव शरदि भूयः स्वच्छतामवगच्छम् ।

अकरवं च चेतसि—'अविज्ञाय मच्चित्तवृत्तिम्, अनाकर्ण्य वचनमम्बायाः, अनवलम्ब्य मत्पक्षज्ञातिवर्गमतम्, तथात्यन्तवत्सलेनापि किंनिमित्तमिदमनुष्ठितं झटित्येव कार्यं तातेन । यदि वा न कोऽपि परमार्थतः प्रेयाननुवर्तनीयः पूजनीयो वा प्रजारक्षणमात्रकर्तव्यानां नरपतीनाम् । को वा मदीयाभिप्रायवेदनेऽवसरस्तातस्य । न हि कोऽपि कन्यकायाः प्रियः, तवायमप्रियो वेति प्रदानसमये समाजमित्रबन्धूनामबुधोऽपि पृच्छति । तदकारणे ममैष पितरि रोषः । कोऽत्र दोषस्तातस्य । मन्त्रिणामपि स्वतन्त्रमृद्धिमन्तमत्यन्तोदात्तचरितमनेकराजन्यजन्यविजयोपार्जितख्यातिमध्यासितमहाधिकारं क्षत्रियकुमारमुद्दिशतां न लेशोऽप्यस्ति निर्वादस्य । ममैव प्रभूतजन्मान्तरोपार्जितप्राज्यपापसंभारायाः सर्वोऽयमपराधः, यया न लब्धव्यमलीकयापि प्रियसमागमाशया जनितं जीवलोकसुखम्' इति चिन्तयन्ती निश्चितमरणा तां चेटीमवोचम्—'भद्रे, गच्छ । विज्ञापयाम्बाम् । 'अस्ति मे विलम्बः । स्तोकमुन्निद्रकेणाद्य विद्राणोद्यमा न यास्यामि कंचित्कालम् । विकालवेलायां गमिष्याम्युद्यानम्' इत्युदीर्य कात्यायनिकां व्यसर्जयम् ।

१. सूर्यास्तसमये.

गतायां च तस्यां **बन्धुसुन्दरी** मामवदत् । 'भर्तृदारिके, किं विषण्णा तिष्ठसि । उत्तिष्ठ । कुरु यथाक्रियमाणमात्मव्यापारम् । अति हि महानुत्सवोऽयम् । आराधनीयः सर्वादरेणात्र सर्वस्यापि स्त्रीजनस्य भगवानयुग्मेषुः, विशेषतः समुपस्थितासन्नपाणिग्रहणमङ्गलानां कुमारीणाम् । न युज्यते मुहूर्तमप्यस्मिन्ननिर्वृतमनोभिः स्थातुम् । अस्थाने च भर्तृदारिकायाः खेदोऽयम् । यदेव गुरवः किंचिदादिशन्ति, यदेव कारयन्ति कृत्यमकृत्यं वा, तदेव निर्विचारैः कर्तव्यम् । विचारो हि तद्वचनेष्वनाचारो महान्' इत्यभिहिता तया विहस्य किंचिदुत्सृष्टदीर्घनिःश्वासा शनैः शयनीयममुचम् । अव्रजं च पुरःप्रचलितप्रतीहारीजनोपदिश्यमानसरणिः स्नानमण्डपिकां च ।

तत्र च समन्ततः स्रंसितविततकाण्डपटकायामध्यासितमणिवितर्दिकानिहितहेमपीठा सलीलमुभयहस्तोदस्ताशातकुम्भकुम्भाभिर्मज्जनपालीभिः परिमलाकृष्टषट्पदकदम्बकेन गन्धोदकेन यथाविधि कृताभिषेका रक्ताशोकपुष्पपाटलं परिधाय पट्टवासोयुगलमग्रभागविगलदविरलवारिबिन्दुना दरसंदानितेन बालवल्लरीस्तम्बविस्तारेण स्तबकितोभयांशपीठोपकण्ठाजरठविद्रुमच्छेदपाटलपताकापटपल्लवितशिखरस्य स्कन्धशाखानिबद्धविविधरत्नदाम्नो निरन्तरन्यस्तदीपोद्द्योतदलितनीरन्ध्रविटपसंरोधसंभृतान्धकारस्य सरसकुङ्कुमस्थासकाङ्कितस्थूलसुकुमारसरलप्रकाण्डस्य प्रलघुना प्राकारमण्डलेन कुण्डलितपर्यन्तभूमेरुच्चमणिशिलापीठप्रकीर्णनानावर्णपुष्पप्रकरस्य साक्षात्सुरभिमासेन मर्त्यलोकमदनोत्सवं दर्शयितुममरकाननादिवावतारितस्य कल्पवृक्षस्य शुद्धान्तमध्यभूरुहो रक्ताशोकपादपस्य प्रत्यग्रहरिचन्दनोपलेपसुभगे मूलभागे विरचितप्रतिष्ठमचिरनिवर्तितस्नानाभिरत्युदाभरणभूषिताङ्गयष्टिभिरनेकविच्छित्तिविरचितमण्डना-

मिः सविभ्रमप्रावृतैरिन्द्रगोपकारुणद्युतिभिरुत्तरीयांशुकै रागजलराशिमध्यमग्नमिव जीवलोकमुपदर्शयन्तीभिर्गृहीतविविधाङ्गरागभाजनेन सीधुभृङ्गारधारिणा विधृतकुसुमधूपपटवासपलिपटलकेन परिजनेनानुगम्यमानाभिरन्तःपुरिकाभिरागत्यागत्य निर्वर्त्यमानार्चमभ्यर्च्य परमया भक्त्या भगवन्तं प्रद्युम्नमुपपाद्य च द्युम्नमाम्नायागतेभ्यो यथा विद्यमानं विद्वद्द्विजेभ्यो भवनमागत्य मानयित्वा च महार्हनिवसनालंकारकुसुमताम्बूलविलेपनप्रदानेन सर्वमात्मपरिग्रहमनुगम्यमाना ग्राहितसदृशनेपथ्येन प्रेयसीवयस्याजनेन जनकं द्रष्टुमव्रजम्।

स्थित्वा च तत्पादमूले मुहूर्तमुत्थिता पुनरलभ्यदर्शनमस्य वदनं पुनः पुनरवलोकयन्ती प्रयत्नस्तम्भिताश्रुरम्बाभवनमगमम्।

तत्र चानुभूततत्कालसमुचितसकलमाङ्गलिक्या वारंवारमाकारिता जनन्या भुक्त्वा तया सार्धमेकभाजने भावितद्विरहदुःखदह्यमानमानसा विषमयानिव कतिचिदन्नकवलान्कृतोपस्पर्शना च स्वसंवर्धितानेकबालवृक्षकाकुलं गृहोद्यानमगच्छम्।

तत्र चासंपादितपादप्रहतिदोहदेष्वशोकशाखिषु खेदायतं निःश्वसन्ती, अदृष्टकोरकोद्गतिषु सहकारेषु विषादमुद्वहन्ती, अनाहितसरकगण्डूषसेकेषु बकुलखण्डेषु विफलतां कलयन्ती, अनिर्वर्तितोद्वाहविधिषु तरुणातिमुक्तकलतासु बाष्पजललवानुत्सृजन्ती, शुल्कसुकुमारवालुकेषु क्रीडाद्रिनदिकासैकतेषु प्रतिक्षणं कृतगतिविलम्बा नूपुरारावकृष्टैः पृष्ठतः प्रधावद्भिर्विलासदीर्घिकाहंसमिथुनैरनुपदमुन्मथ्यमानहृदया 'तात रक्ताशोक, लोकान्तरगतापि स्मर्तव्यास्मि। कमलदीर्घिके, दीर्घकालं क्लेशमनुभावितासि निर्घृणया निदाघमज्जनेषु। सखे शिखण्डिन्, अस्तं गता ते हस्ततालताण्डवक्रीडा। वत्स कलहंस, निरुत्सवस्ते गमिष्यति मान-

सागमनदिवसः । मा कृथाः कोकमिथुनक, मद्वियोगे शोकम् । जात शुकपोत, मा तानि विस्मरिष्यसि मत्सुभाषितानि' इति भाषमाणा परिभ्रम्येतस्ततोऽस्तगिरिशिरःस्रस्ततेजसि तिग्मभानौ स्वनिवासमागमम् ।

तत्र प्रवर्तितविचित्रचैत्रोत्सवेन पिनद्धविविधालंकारवाससा जननीजनेन सादरस्नेहमाकारिता प्रवृत्तासु निर्भरं गीतनृत्तगोष्ठीषु स्थित्वा मुहूर्तमस्वस्थहृदया सौधशिखरमध्यरोहम् ।

द्वारदेशादेव च विसर्जितवयस्यजना प्रविश्य बन्धुसुन्दरीद्वितीया शयनचित्रशालामकृतसंलापैव सार्धं तया स्थित्वाल्पकालमलसवलितेक्षणा तामवोचम्—'सखि' त्वमपि गच्छ गृहम्। इच्छामि क्षणमात्रमहमितस्ततः परिभ्रमणखेदितशरीरा निद्रातुम्' ।

सा[1] तु तेनाकालप्रेषणेनात्मनो मम च तेन प्रकृतिविपर्यासदर्शनेन जातशङ्का तूष्णीमेव कंचित्कालं विलम्ब्य ध्यात्वा च किंचिन्निश्चललोचना चित्तेन मत्समीपादुदचलत् ।

निरगाच्च निगडितेव स्तिमितविन्यस्यचरणा वारंवारमवलोकयन्ती पृष्ठतः कथंचिच्चित्रवलभिकायाः ।

नातिचिरनिर्गतायामेव चास्यामुत्थाय शयनान्निबिडनियमितीपीड[2]कुसुमा दृढनिबद्धनिवसनग्रन्थितराप्रपदीनपरिणाहेनाप्रतनुना चीनांशुकपटेन प्रच्छाद्य सर्वतः प्रसृतकिरणैराभरणमणिभिर्द्योतमानं तदानीमिदं हतशरीरमतियत्नचारितचरणमणिनूपुराराविणी निक्षिपन्ती मन्दं मन्दं पदानि, द्वारदेशसमागममवतीर्य च प्रासादशिखरादितस्ततो निहितसंत्रासितरलचक्षुरतिक्रम्य कक्ष्यान्तराणि तत्क्षणप्रवृत्तनिर्भरक्रीडारसे कन्यान्तःपुरे भृत्यगीताक्षिप्तमनसा परिजनेन समीपवर्तिनाप्यनुपल-

१. 'इत्यभिहिता सा तु' इतिभवेम् २. 'नियमितापीड' इति स्यात्.

क्ष्यमाणा रक्षणपदातिशून्येन निर्गत्य प्रमदवनपक्षद्वारकेणानुलग्नमेव स्वभवनोपवनस्य तं व्यपास्तनन्दनवनविभूतिमाभरणभूतमखिलाया अपि नगर्याः क्रीडार्थमात्मनः कारितं तातेन लवङ्गपुन्नागचन्दनागुरुप्रायपादपगुपिलमतिविपुलविशदोदारमतिशयाभिरामं कुसुमाकरारामममव्रजम् ।

यस्मिन्नम्बया प्रतिष्ठापितस्य भगवतः कुसुमकेतोः पूजाविधानाय कात्यायनिकामुखेन प्रातरादिष्टास्मि । तत्र च मदनयात्रायातनगरलोकालोकनशङ्कया दूरतः प्रहतमपहाय मार्गमुत्पथेन प्रस्थिता चन्द्रपादप्रकटितेषु प्रदेशेषु सत्वरं व्रजन्ती, विजृम्भमाणमुखरपक्षारवेषु यदृच्छयाप्युड्डीयमानेषु खगकुलेष्वितस्ततः प्रधावमानं परिजनमुत्प्रेक्षमाणा, समासन्नवल्लरीविटपेषु लग्नासूत्तरीयांशुकदसा (शा)सु पृष्ठतः सहचरीभिर्धृताञ्चलेति सवैलक्ष्यं विवर्तमना, स्थाणुष्वपि पुरस्ताज्झटिति वीक्षितेषु जातवनपालपुरुषशङ्का लतागुल्मान्तरेषु निलीयमाना, निजमपि पादपातध्वानमन्यदीयमिति साध्वसादवधारयन्ती, अनभ्यस्तचरतया चरणसंसर्पणस्य दृढतरोपजातजङ्घाजाड्याप्यखण्डयन्ती गतित्वरां क्षणेनैवातिदूरमव्रजम् ।

क्रमेण चासाद्य तस्यारामस्य रम्यतरमभ्यन्तरोद्देशमुपसंहृतत्वरितगमना दूरादेव दृष्टिपथागतेन तत्कालमाक्रान्तभुवनोदरस्य रागजलनिधेर्वीचिभिरिव संनिहितमकराभिरालोहितांशुकपताकाभिः पल्लवितशिखरेण गगनोल्लेखिना वैद्रुमेण केतुस्तम्भेन प्रकाश्यमानमतितुङ्गशृङ्गोच्छ्रायप्रांशुपृथुशिलाशालपरिगतममलकलधौतकलशाध्यासितसुधाधवलनिःशेषकूटं कैश्चिदाविष्कृतप्रौढपत्त्रैः[1] कैश्चिदुल्लासिताभिनवतनुच्छदैः[2] कैश्चिदाकृष्टशिलीमुखचक्रैस्तदा[3] त्रीणि भुवनान्यभिषेणयितुमुद्यतस्य

---

१. पर्णानि वाहनानि च. २. तनुच्छदो वारवाणं लघुपर्णानि च. ३. शिलीमुखा बाणा भ्रमराश्च.

विषमबाणस्य बलदर्शनाय मधुना स्वसैन्ययोधैरिवाहूतैस्तिलकचम्पकाशोकपुन्नागनागकेसरप्रभृतिभिः प्रधानपादपैः समन्तादुपगूढमतिदृढस्तम्भविततमण्डपाभिरामं कामदेवायतनमायातवती प्रक्षालिताध्वरेणुधूसरचरणयुगला च द्वारदीर्घिकायामादाय तदुपकण्ठजातेभ्यो लताजालकेभ्यः सुरभिपरिमलाः सुमनसः कतिचिदितस्ततः क्षिप्तसचकितदृष्टिपाता निभृतनिभृतैः पदैस्तदभिमुखमचलम्।

गत्वा च स्थिता द्वारदेशे विशुद्धहाटकघटितविकटासनपीठबन्धमुद्गन्धितैलाध्मातपात्रबोधितानेकस्थूलदशानां दिशि दिशि ज्वलन्तीनामायतनदीपिकानामुत्तप्तकनकांशुराशिकपिशेन सर्पता सर्वतः प्रकाशेन प्रकटिताखिलप्रतिमारूपमुभयतो निरूपितनिरुपमानरतिप्रीतिरूपकमधिकशिशिरेण स्वच्छसुरभिणा चन्दनरसेन समस्तभुवनविजयोपार्जितेन यशसेव संपादितापपदीनचर्चमुच्छन्ननिद्राभिराराधयितुमागतानां प्रियविमानितप्रमदानामीक्षणावलीभिरिव प्रतिबिम्बसंक्रान्ताभिः सजलकणिकाभिरसितोत्पलस्रग्भिराच्छादितसर्वाङ्गं गर्भगृहगर्भविरचितस्य लम्बितप्रलम्बपुष्पप्रालम्बघटितविकटभित्तेरखण्डपुण्ड्रेक्षुकाण्डकल्पितप्रकाण्डतोरणस्य तरुणगृहिणीवियोगविघटिताध्वन्यहृदयैरिवोद्दामरागैरशोकपादपप्रवालैर्द्वारि विरचिताविरलवन्दनमालस्य निबिडकण्टकाचितोभयधारैरतिकठिनजनहृदयदारुदारणाय चन्द्रकिरणैरिव क्रकचतां नीतैर्विरहता[2]र्तकीर[3]कान्ता कपोलकान्तिभिः केतकोदरदलैः कल्पितावचूलचामरस्य मकरन्दपाननिश्चलनिलीनैः कज्जलकालकान्तिभिर्मधुकरकुलैः प्रत्यग्रघटितानामग्निना मु[4]कुलपत्रिणां तैक्ष्ण्यमाधातुमाहृतैः खादिरैरिवाङ्गारैः

१. दुःसहबाणस्य पञ्चबाणस्य च. २. 'तान्त' इति स्यात्. ३. 'कश्मीरे कीराः स्युः' इति त्रिकाण्डशेषः. ४. अविकसितानि पुष्पाणि मुकुलानि तान्येव बाणा येषाम्.

सर्वतः कर्बुरीकृतोपहारपुष्पप्रकरस्य दृश्यमानानेककुटिलमार्गेण निसर्गमलिनात्मना मानतन्तुसंतानेनैव कामिनीहृदयेभ्यः समाकृष्टेन कृष्णागुरुधूपधूमेन निर्भरव्यासकुक्षेः पुष्पगृहकस्य मध्ये स्वायुधागारदर्शनबुद्ध्येव बद्धास्पदमलिन्दकालिखितबहुवर्णचूर्णपत्रवल्लिना स्थानस्थानविनिहिताखण्डशालितण्डुलस्तूपेन पटवितानकप्रान्तलम्बितोत्तालनालिकेरकदलकलुम्बिना निरन्तरन्यस्तमाक्षिकेक्षुरसकुम्भेन शातकुम्भकरकोत्सर्पिसरकगन्धाकृष्टरणदलिपटलवाचालितेन विततपुटकिनीपत्रपुटकार्पितसकर्पूरताम्बूलवीटकेन प्रकटितानेककूष्माण्डतुण्डीरकत्रपुसवार्ताकशाकपणेन क्वचिदनतिकोमलैर्नारङ्गीफलैः, क्वचिदधिगतस्तोकपाकावस्थैः कपित्थैः, क्वचित्पीनपरिमण्डलाङ्गैर्मातुलुङ्गैर्यथाकालमात्मना निर्वर्तितानां बालयुवतिप्रौढवनितापयोधराणां प्रतिच्छन्दकैरिव यौवनेनोपदर्शितैरुपेतेन फेनिकाशोकवर्तिखण्डवेष्टमोदकप्रायपक्वान्नबहुलेन बलिकर्मणा कल्माषितसमग्राग्रिमभूमिभागं भगवता समस्तसुरसङ्घवन्दिताज्ञेन मघवताप्यलङ्घितशासनं कुसुमशरासनं देवमद्राक्षम् ।

दृष्ट्वा च किंचिदुपशान्तसंतापा तन्मुखार्पितप्रीतिनिश्चलेक्षणा विलम्ब्य क्षणमात्रमभ्यन्तरप्रविष्टामन्तर्निविष्टः कदाचित्कोऽपि मां पश्येदिति विशङ्कमाना द्वारदेशस्थितैवोत्सृष्टकुसुमाञ्जलिः प्रणाममकरवम् ।

कृतमरणसंकल्पा च निर्गत्य तेनैव मार्गेण गत्वा बहिःप्राकारवलयात्पदानि कतिचित्कमलदीर्घिकानर्घभूषणस्य पुण्यपरिणाहभाजः कतिपयदिनानीतयौवनप्रौढेर्गाढसुकुमारच्छदच्छन्ननिखिलशाखासंचयस्य सर्वतः संचरद्भिः कुसुमसौरभावकृष्टैः षट्चरणचक्रैरक्रमाक्रम्यमाणदक्षिणानिलचलितचारुविटपस्य रक्ताशोकशाखिनः स्कन्धशाखायामायतेन विस्तारिणा स्ववेषाडम्बरावरणपटेन पाशमघटयम् ।

प्रातः प्रमीतामसम्यगावृतवपुषमवलोक्य मां नरलोकस्त्रपामेष्यतीति शङ्कया निबिडनीविबन्धनमपि पुनः पुनर्गाढीकृत्य निविशितमशिथिलकञ्चुकावृत्तस्यापि कुचमण्डलस्योपरि विधाय चिरमुत्तरीयेण बन्धुरं गात्रिकाबन्धममन्दसंदानितमपि सयत्नमापीड्य पुष्कलैः पुष्पदामभिः केशभारमभिष्टुतेष्टदेवता कृतगुरुजनप्रणतिरसंपादितोचितफले बाह्येऽपि परिजने जातानुतापा विपक्षवर्गेऽपि भावितप्रीतिः प्राङ्मुखीभूय सादरमन्तरबद्धलक्षा कृताञ्जलिरवदम्—'भगवन्तः सकलजन्तुग्रामकर्मसाक्षिणः सहस्राक्षपुरःसरा लोकपालाः, तस्य तत्कालमात्मनो बरत्वेन प्रतिपन्नस्य नृपकुमारस्य दर्शनात्प्रभृति न मया पुमानन्यश्चक्षुषापि साकाङ्क्षमवलोकित इत्यस्य सत्याभिभाषणस्य, अस्य च क्रोधवैलक्ष्यनिर्वेदादिभिर्भावैरदूषितस्य, निजचारित्ररक्षणार्थमेव केवलमध्यवसितस्य जीवितपरित्यागस्य च यद्यस्ति कोऽप्यनुभावः, तत्तेनैव नृपकुमारेण सह जन्मान्तरेऽपि संगमो मे भूयात्' इत्यभिधाय कन्धरानिवेशितपाशवलया दूरमुत्प्लुत्य तस्यैवाशोकवृक्षस्य मूलवेदिकातः क्षितितलाभिमुखमात्मानममुचम्।

मुक्तदेहायाश्च मे गात्रभारेण दूरमाकृष्टाहृष्टमत्साहसोत्पन्नसाध्वसेव सर्वतः समकम्पतासावशोकपादपशाखा। कम्पतरलितकुलायकोटरोड्डीनानि विस्तारिणा पक्षपातविरुतेन हाहारवमिव कुर्वाणानि पर्यन्तेषु बभ्रमुः ससंभ्रमाणि विहंगमकुलानि। तैश्च सर्वतः कृतकरुणकोलाहलैस्तथाभूतमदवस्थादर्शनोद्भूततीव्रशोकैरिव ताडयद्भिरनवरतमुभयतः प्रेङ्खता पक्षयुगलेन जठरमुद्वेज्यमाना गात्रपरिमलामन्त्रिताभिर्विहाय सविधवर्तिनीरुद्यानवीरुधो वेगाद्वाचिताभिर्भ्रमरमालाभिर्मञ्जरीव प्रत्यवयवं विलुप्यमाना तत्क्षणप्राप्तमर्त्यलोकावतारशापेव त्रिदशललना

समासन्नभूतलस्पर्शा निरालम्बमम्बरे कृतस्थितिर्भाराञ्चितेन संकुचता प्रतिक्षणं पाशवलयेनाकालचलितं जीवितमिव निरोद्धुमतिनिबिडमापीडितशिरोधरा कण्ठरोधादूर्ध्वमनवकाशेन निष्कासनसहान्सहायानिवान्वेष्टुमन्तर्भ्राम्यता श्वासपवनेन निर्भरमापूर्यमाणकुक्षिकोशा प्रियवियोगादपि दुःसहेन गृहागतार्थिजननिराकरणादपि कष्टतरेण विपक्षपक्षोपसर्पणादपि संतापकेन निशितनिर्स्त्रिंशदारणादपि दारुणेन महानरकवासदुःखसंवादिना वेदनावेगेन व्याकुलीकृता पृष्ठत एव मे समागताम्, अन्तिकस्थामपि विसंस्थुलतया चक्षुरिन्द्रियस्य स्तोकमप्यनुपलक्षिताम्, श्रवणमार्गमवतीर्णेन विस्तारिणा करुणरटितेन कथमपि चिरेण प्रत्यभिज्ञाताम्, 'हा, किमिदमापतितम्, किं संवृत्तम्, किमनुष्ठितं निष्ठुरप्रकृतिना दैवेन' इत्यभिधायाभिधाय प्रचलितकांचीरत्नवलयावलीवाचालमग्रकरयुगलमन्योन्यमास्फालयन्तीम्, मुहुर्मोक्षणाय पाशग्रन्थेरशोकमारोढुं परकरमाबध्नतीम्, मुहुर्भङ्गाय शाखायाः शिखामधोमुखमाकर्षन्तीम्, मुहुर्मूलवेदिकाग्रे निक्षिप्य चरणावाकर्षणाय मे तिर्यग्भुजयुगं प्रसारयन्तीम्, मुहुः कल्पनाय पाशस्य प्रविश्य वनं बालपर्णशालासु परशुदात्रशस्त्रिकादीन्युपकरणान्यन्वेषयन्तीम्, मुहुः कण्ठबाधाप्रतिविधानाय धृत्वा जङ्घयोर्मामूर्ध्वमुत्क्षिपन्तीम्, मुहुरवष्टम्भाय मच्चरणयोरधस्तादुपलशकलान्युपर्युपरि विरचयन्तीम्, अशोकशाखाधिरोहणाय विटपान्तरालपातिनो रज्ज्वायतानिन्दुकिरणानप्यनवलम्बमानाम्, साहायकाय विगतचेतनेषु पाषाणपुत्रकेष्वपि दृष्टिं पातयन्तीम्, निश्रेणिकानिषण्णध्यानतया दीर्घपृथुलां केलिदीर्घिकातरङ्गश्रेणिमपि साकाङ्क्षमवलोकयन्तीम्, अदृष्टमद्रक्षणोपायतया च मनसि पुञ्जितासह्यदुःखां मुहुर्मुहुर्मूर्च्छामनुभवन्तीम्, मोहविरतौ च

साध्वसादुत्थाय बद्धप्रबलकम्पाम्, 'किं पापकारिणि, कृतः कारणमन्तरेण त्वयास्य सकलविश्वविश्रामवेश्मनो निजस्य विनाशो राजवंशस्य' इति मामेव निरनुक्रोशमाक्रोशन्तीम्, 'अनार्ये, किमियं त्वया स्वकार्यसाधनाय निधनमुपनीता' इति तातमपि जीवितनिरपेक्षतया प्रतिक्षिपन्तीम्, 'विगतलक्षणे बन्धुसुन्दरि, जानत्यापि जीवितमुत्स्रष्टुकामा किमियमवधीरिता त्वया, निर्गच्छन्ती धृता च। किं न धावित्वा हठात्पृष्ठतो विमोहितया च संकटप्रासादकुड्यान्तरालपरिसर्पणेन कस्मान्न कोलाहलः कृतः' इति सानुतापमात्मानमेव प्रतिपदं निन्दतीम्, अतिविशदचन्द्रातपापि 'भगवति त्रयोदशीक्षणदे, क्षीणपुण्याया मम त्वमपि कालरात्रिः संवृत्ता। मातर्धरित्रि, विधुरेऽस्मिन्निमामपालयन्ती पृथ्वीपालबालिकामलीकं वहसि धात्रीशब्दम्। देवि कात्यायनि, मदीयजीवितेन भर्तृदारिकाया रक्ष जीवितम्। आवयोर्न कश्चिद्भेदः। स्वामिन्यो वनदेवताः, निवेदयत पात्रसंक्रमेण देव्या गन्धर्वदत्तायाः सुतावृत्तान्तम्। अत्यन्ततान्ता न शक्नोम्यहमन्तःपुरं गन्तुम्। तात पितृपते, निर्दयप्रकृतिरपि विधेहि मयि कृपामेकवारं कृपणायां प्रियसखीप्राणदानेन। सलिलसंगत्यैव स्वच्छशिशिराशयोऽसि सततम्। अतो वरुणो भूत्वा सकरुणः कुरु विपाशामिमाम्। पाशमोक्षणे तवैव वैचक्षण्यम्। भगवन्पवन, रुद्धगलरन्ध्रवेदनाविरसाया भव समाश्वासहेतुरस्याः श्वासप्रसरदानेन। हताश चित्तयोने, चैत्रोत्सवेनैव निश्चेतनीभूतो न चिन्तयस्यात्मानम्। अनया विना विधुरेषु कुण्ठितशरस्य कस्ते शरणम्। दुरात्मन्, आत्मनैव निष्पादिता विपदमीदृशीमस्याः पश्यतो मनागपि न ते विच्छायता संजाता। अशोक, सत्यमिवाशोकस्त्वम्' इत्याद्यनेकप्रकारं संबद्धमसंबद्धं च विलपन्तीं बलवता शोकवेगेन विधुरीकृतां बन्धुसुन्दरीमपश्यम्।

दृष्ट्वा च तां तथाविधावस्थामुपस्थिता प्रतिविधेयविपदमेकपद एवास्पदीकृतामखिलैरपि त्रैलोक्यवर्तिभिरसौख्यैः शतमुखीभूतदुःखवेगां विगलितोष्णबाष्पपटलविप्लावितमुखीं कृतप्रयत्नापि दृढमतिगाढपाशग्रन्थिपीडितगलत्वादपारयन्ती वक्तुमुत्क्षिप्य किंचित्प्रचलितेन पाणिना दक्षिणेतरेण रुदतीं तां न्यवारयम् ।

सा तु तेन प्रचलता मत्करतलेन तालवृन्तेनैव प्रबलसंदीपितशोकपावका 'भर्तृदारिके, विरम । किं वारयसि दैवेनैव वारिता । विरताहमद्य प्रभृति रोदनात् । अनाकुला प्रसाधय स्वाभिप्रेतमर्थम् । अस्मद्विधे बाह्यपरिजनेऽद्यापि कः प्रतिबन्धः' इति रोषादिवोदीर्य द्विगुणमापूर्यमाणबाष्परुद्धगलनिर्यदागद्गदाक्षरमुन्मुक्तगुरुतराक्रन्दा दूरमुत्क्षिप्योत्क्षिप्य पातितेन निर्दयाघातविघटिताङ्गुलीकिसलयगलद्रुधिरशीकरेण करयुगलेन युगपदुत्तमाङ्गमुरस्तटं च ताडनत्रुटितहारमुक्तमुक्ताफलासारसंवर्धिताश्रुबिन्दुविसरमनवरतमाजघ्ने ।

घनतरावधूनितहस्तयाथ तथैव मया पुनः कृतनिषेधा निर्याय तस्मादशोकतरुतलात् 'अद्यापि स्पष्टचेतनासमर्था जीवितुमसावन्वेषयामि कंचित्' इति विचिन्तयन्ती समन्ततः प्रहितलोचना मन्मथायतनसंमुखी सत्वरमधावत् । एतावन्तमेव तत्कालवृत्तमात्मनस्तस्याश्च वृत्तान्तमविशदतया स्वप्नविज्ञानसदृशमवगतवती । ततः परम् 'किं तयोक्तम्, किमनुष्ठितम्, कः प्रसाधितोऽर्थः, कीदृशश्च संपन्नो ममावस्थाविशेषः' इति प्रबलवेदनावेगजनितेन कृत्स्नकरणशक्तिच्छिदा मूर्छागमेन मुषितविज्ञाना स्वल्पमपि नाज्ञासिषम् । केवलं कियत्यापि वेलया समुपलब्धसंज्ञा व्यपगतपाशबन्धना निराबाधनिश्वासप्रवृत्तिरमृतपङ्कपर्यङ्कसुप्तमिव विकचपङ्केरुहा राशीकृतनिवेशमिव समासादिता पूर्वमृदुतर-

स्पर्शविशेषनिर्वृतं गात्रमुद्वहन्ती रोदनादुपरतामविरतविलापदलितगल-रन्ध्रजर्जरेण स्वरेण शनैः शनैरादितः प्रभृति 'यो मे वंशः, यथाह-मुत्पन्ना, यथा वृद्धिमुपगता, यथा कृतः कलासु परिचयः, यथानुभूता यौवनविलासाः, यथा निशीथसमये सुप्तमात्रैव खेचरैरपहृत्य चित्र-शालिकाशयनादेकाकिनी पञ्चशैलके रत्नकूटाद्रिकटकमण्डनं जिनायतन-मानीता, यथा तत्र चित्रलेखारचितचतुरप्रसाधनया प्रवर्तितो गीत-नृत्यादिकः प्रेक्षणकसमुचितो विधिः, यथा मनुजलोकदुर्लभलास्य-प्रयोगदर्शनप्रीतेन विद्याधराधिपतिना **विचित्रवीर्येण** सह सविस्तरं प्रवृत्तः संलापः, यथा तदुपनीतच्छत्रचामरालंकारा सदृशनेपथ्यपार्थिव-कुलकुमारिकावृन्दपरिवृता पारावारमवलोकयितुमारूढा स्फाटिकं जिना-यतनपर्यन्तवर्तिनं प्राकारम्, यथा च तन्मूलमाश्रित्य विहितस्थितौ नात्यवस्थितो वीक्षितः स निजरूपनिर्मथितमन्मथाकारः पार्थिवकुमारः, यथा च प्रथम एव दूरदर्शितानुरागमुद्रया समुद्रपूजाव्यपदेशेन मुखनिवेशितोन्मुखदृशस्तस्य कन्धरायामधिरोपिता स्वहस्तेन दिव्या स्वयंवरकुसुममाला, यथा च तिलकक्रियानन्तरमेव केनापि हेतुना समुपजाताच्चित्तविप्लवादुत्प्लुत्य जलनिधौ कृतप्रपातस्य प्रीतिलङ्घितया तस्य भृष्टतो[1] विहितमनुपतनम्' इत्यादिकमशेषमपि पूर्ववृत्तं मदीय-वृत्तान्तमुपवर्णयन्तीं तामेव **बन्धुसुन्दरीम**श्रौषम्।

'कोऽयमाप्ततमः समीपमागतोऽस्या यस्यैनमतिरहस्यमप्यस्मदपहार-वृत्तान्तमावेदयति। कस्य चायममृतस्यन्दसुन्दरो देहसंस्पर्शः' इति विमृश्य मन्दमन्दोन्मीलितेक्षणा झगिति लोचनमार्गमवतीर्णममृतकर-मिव पुरुषरूपमादाय मदनोत्सवदिदृक्षया क्षितावागतमतिसूक्ष्मसुकुमार-

१. 'पृष्ठतो' स्यात्.

सिकते श्रूयमाणशोकार्तकोककामिनीवारुणविरुतौ तटशिलातलास्फालवाचालवीचिमाले तत्कालमुदिताः कुमुदिनीरिव द्रष्टुमाकृष्टतिर्यक्प्रसृतपादपच्छायेन गगनमध्यमध्यासिना शशधरेणाधोमुखैर्मयूखयष्टिभिरुत्सारिताशेषप्रदोषतमसि चन्द्रप्रभाप्राचुर्याच्च दूरापसृतसलिलेऽपि स्वच्छजलतिरोहित इवोपलक्ष्यमाणकुमुददीर्घिकातीरदेशे निषण्णमागृहीतमदनज्वरार्तकामिसमुचितचारुशृङ्गारवेषमुन्मिषच्चन्द्रकान्तमुक्ताफलप्रायमणिविशेषैर्यथास्वमुचितस्थानविनिवेशितैः कटककेयूरकुण्डलादिभिर्भूषणैरलंकृतवपुषमायामिनीभिरन्तरान्तरा लक्ष्यसरसबिसकन्दलाभिर्वैकक्षकस्रग्भिः सरिद्भिरिव सागरप्रपातसमये स्पर्शतृष्णया संलग्नाभिः कृतकण्ठग्रहमामोदितदिशा चन्दनविलेपनेन स्वच्छेनाप्यतिघनेनोद्भाव्यमानेन सूचितास्मद्विरहजनितोद्दामपाण्डुभावमाशक्त(?)चञ्च्वाकारकर्णाभरणपद्मरागरत्नाङ्कुरेण शशिहरिणहरितरोचिषा शैवलप्रवालेन कल्पितकर्णावतंसमेकशुकशकुन्ताक्रान्तशिखरमिव बालसहकारविटपमुदधिपूजाव्यतिकरे मत्करप्रकीर्णस्य हरिचन्दनद्रवस्य सुरभिसान्द्रैर्बिन्दुजालकैरलंकृतेन तेनैव चिरंतनेन चीनवाससा प्रत्युरसमजलार्द्रेणापि संपादितजलार्द्रीकृत्यम्, तया च प्रयत्नसंरक्षितया स्फुरदुदारवर्णयापि कस्याप्यसंविभागीकृतया सिद्धमन्त्रविद्ययेव दिव्यकुसुममालया स्वदेहपरिरक्षणाय कृतशिखाबन्धमिन्दुकान्तनिष्यन्दशिशिरं हृदि स्थिताया अपि मम प्रेमदोषादाशङ्कितां पाशबन्धमूर्छामिव छेत्तुमानन्दजलबिन्दुविसरमनवरतमीक्षणाभ्यामधःप्रवर्तयन्तम्, अङ्कदेशोपवेशितायाश्च मे मुहुर्गात्रमभिनवैः कदलीगर्भपत्रैर्वीजयन्तम्, मुहुर्जललवस्यन्दिभिः कमलिनीकन्दैरवयवानाच्छादयन्तम्, मुहुः करमृदितनिष्पीडितेन चन्दनाग्रपल्लव-

---

१. 'शुकचञ्चु' इति टिप्पणी.

रसेन स्तनपृष्ठमनुलिम्पन्तम्, मुहुरासन्नतरुवल्कलविवराकृष्टेन कर्पूररेणुना कपोलौ छुरयन्तम्, मुहुः स्वेदिना करतलेन पाशपीडितस्कन्धधमनिविधुरं कन्धरां संवाहयन्तम्, मुहुर्दृष्टिरोधिनीमनिलविधुतामलकपद्धतिं सलीलमुत्क्षिप्य नखशुक्तिभिः श्रवणशिखरमारोपयन्तम्, मुहुर्निश्चलाक्षिपक्ष्माग्रसंग्रथितमवतंसमञ्जरीरजःसरसिजगन्धिना वदनमारुतेन व्यपनयन्तम्, मुहुः श्वासपायिनो मुखवासपरिमलहृतानुद्यानमधुकृतो मधुरमुल्लासितेनोत्तरीयपल्लवेन व्यावर्तयन्तम्, आलापनाय च वारंवारमव्याहतश्वासदर्शनोपजातपरमाश्वासां बन्धुसुन्दरीं व्यापारयन्तम्, आकृतिविशेषदर्शनोपजातविश्वासया च तया सविस्तरमाख्यायमाने मदीयवृत्तान्ते सादरवितीर्णकर्णं तमेव पूर्वदृष्टमूर्वीपतिकुमारमद्राक्षम्।

दृष्ट्वा च संभ्रान्तहृदया 'किमेष पाशग्रन्थिपीडया निबिडमास्कन्दितान्ममैव हृदयाद्विनिःसृतो बहिः, अथ प्रार्थिताभिर्मदनुकम्पया देवताभिर्दिव्यशक्त्या कुतोऽप्यानीतः, उतान्यदेव किंचित्प्रयोजनमालोच्य गुरुजनेन प्रहितः, इह परिभ्रमन्कौतुकेन प्राप्त आहोस्विच्चेन चतुरोक्तिनिपुणेन नाविकेनावबोधितं, स्वबुद्ध्या वावगतमाधाय मनसि तत्कालमीहितस्य तस्यास्सदालापस्य हृदयार्थमनुरागप्रेरितः परापतितः' इति वितर्कयन्ती किंचिच्चलितलोचना चिरमतिष्ठम्।

चिन्तयन्ती च तदचिन्तितप्राप्तमनेकजन्मोपार्जितैः सुकृतकर्मभिरपि दुरापमाकल्पावधिकृतैस्तपोभिरपि दुःसाध्यं चतुर्मुखप्रमुखदेवतानिदानैर्वरप्रदानैरप्यलभ्यं लब्धरम्भोर्वशीरूपसौभाग्याभिरप्सरोभिरप्यनभिलष्यन्तं तदङ्कशय्यावस्थानमात्मनो दूरारूढगर्वा सर्वमपि सौभाग्येन भुवनत्रयान्तर्वर्ति तृणाय मन्यमाना क्षणमवजितारविन्दगर्भकेसरसौ-

कुमार्येण मज्जगतमपि मुष्णता विरहदाहोष्माणमानयतेव संनिपात-निद्रामिन्द्रियाणां रचयतेव चन्दनद्रवेण चर्चामावरणमन्तःकरणस्य क्षिपतेव क्षीरसागरोदरे निरवशेषानवयवान्परिणमयतेव शारदज्योत्स्ना-रूपेण शरीरमेकीकुर्वतेव प्रतिप्राणिस्थितानि सकलान्यपि त्रैलोक्य-सुखान्यसंख्यैरपि निदर्शनैरनावेद्यहृद्यतास्वरूपेण सारमिव सुधारसस्य सत्त्वमिव शंकरशिरःशशिकलाशैत्यस्य सकलमादाय विधिनोत्पादितेन समुद्रपातसमयेऽप्यनासादितपूर्वेण स्वप्नान्तरेष्वपि निद्रालाभविरहादल-ब्धेन पुनरलभ्योऽयमनयेति जातकरुणेनेव मकरकेतुना परां स्वादुता-मानीतेन भाविता तस्य सकलगात्रस्पर्शेन व्यवधानहेतुरिति पुलक-जालकोद्भेदमपि निन्दन्ती कुङ्कुमाङ्गरागमपि विपक्षपक्षे स्थापयन्ती भूषणप्रभावितानमपि विघ्नमवधारयन्ती धृतस्रंसमानजघनस्तनांशुकेन स्वेदसलिलेनापि दूयमाना शरीरार्धेन लब्धप्रियाङ्गसङ्गामचलकन्यामप्यु-पहसन्ती सहसैव विह्वलतामगच्छम् ।

दृष्ट्वा च मां तथाविधां क्षणेनैवान्यथाभावमुपगतामुत्पन्नसाध्वसा बन्धुसुन्दरी सादरमवादीत्—'भर्तृदारिके, किमेवं पुनरपि स्थिता त्वमस्वस्था । कथय किं ते वपुषि बाधाकृत्' इत्यसकृदनुबध्यमाना[2] बद्धोत्कम्पया सगद्गदाक्षरोद्गारमनया शनैः शनैरुत्थाय कृतशिरोवगुण्ठना तस्य नृपकुमारस्याङ्कपर्यङ्कादेकदेशे कमलिनीपलाशशयनस्योपाविशम् ।

अत्रान्तरे सा मुक्ततारकरुणफूत्कारा निधाय मज्जानुनोरुपरि मूर्धानमनवरतनिपतद्बाष्पसंहतिरभिनवानि शुद्धान्तनिर्गमात्प्रभृतिकान-नान्तरुपजातान्युदीर्योदीर्य दारुणानि दुःखानि पूर्वकालमनुभूतानि च

---

१. मज्जनि गतं विरहदाहोष्माणं मुष्णता. २. सादरं पृच्छ्यमाना.

मया सह विगतयन्त्रणानि शैशवक्रीडितानि परिहासवचनानि विश्रम्भाभिभाषणानि च भावयन्ती भीषणोदीर्णशोका चिरमरोदीत्।

उपनीतवदनक्षालनोर्वकां च तेन प्रक्षाल्य वदनं प्रमृज्य चोत्तरीयपल्लवप्रान्तेन मत्संनिधौ न्यषीदत्।

उत्सृष्टदीर्घनिश्वासा च स्थित्वा कंचित्कालमवचना मामवोचत्—'भर्तृदारिके, किंचिदितोमुखी भव। पश्य चातिसुन्दरोदारदर्शनमपूर्वतेजोविशेषपिशुनितमहानरेन्द्रवंशोत्पादमादरादमुं महाभागम्। अद्य ते दत्तं जीवितमनेन। यद्ययं तदायतनवर्ती न स्यात्, आकर्ण्य वा मदीयमाक्रन्दमतिवेगादगणितनिजश्रमो नागच्छेत्, उत्प्लुत्य च व्योम्नि खड्गधेनुकया पाशं न विनिकृन्तेत्, पतन्तीं च भूतले जातमूर्छां न प्रतीच्छेत्, उत्क्षिप्य च भुजाभ्यामेतदम्भःस्पर्शजन(?)पवनमुपवनदीर्घिकातीरं नावतारयेत्, तदा कथं ते पुनः प्राणलाभः स्यात्। तदेष ते परममुपकारी नृपकुमारः। न च तवैकस्याः, सर्वस्यापि सपरिग्रहस्य त्वदीयगोत्रस्य, त्वया प्रयुज्यमानामर्हति प्रणामादिकां सर्वामपि गृहायातमान्यजनसमुचितामपचितिम्' इत्युदीर्य कन्धरापृष्ठलुठितपाणिः प्रथमदर्शनत्रपाविकुञ्चितस्मितार्द्रनयनतारकां तस्य मां प्रणाममकारयत्।

सोऽपि किंचित्कृतप्रतिप्रणतिरन्तर्गतप्रेमशंसिना प्रीणयन्नमृतवारिच्छटाच्छेन विकसता दृष्टिविक्षेपेण मच्चित्तमीषद्वलितवदनस्तामवादीत्—बन्धुसुन्दरि, प्रवृद्धेन प्रतिदिवसममुना सौजन्येन मधुनेव परभृता मधुरभाषितां परामानीतासि, येन मामपि निदेशमात्रकारिणमत्यन्तमुपकारीति कीर्तयसि। कोऽहमुपकारक्रियायामस्याः। त्वयैव

१. 'नोदका च' स्यात्.

यत्कर्तव्यं तदखिलमनुष्ठितम् । अनुदिनं नवैर्नवैः प्रसादविशेषैस्तथा तथोपलाभितस्य[1] तावतः सखीजनस्य परिजनस्य च । मन्ये त्वमेका शरणमस्याः संजाता । यस्मान्निजेनेव सर्वलोकाभिभाविना प्रज्ञाबलेन विज्ञाय जीवितव्यनिरपेक्षमाकारमावासगमनाय पुनः पुनः कृतविसर्गयापि न त्यक्तमेतदीयचित्रशालिकाद्वारम् । क्व चलितेयमिति चिन्तयन्त्या च दूरमनुसृता व्रजन्ती पृष्ठतः । समुपजातव्यामोहयाप्यस्ति मे विलम्बस्तावदधुना कंचित्कालम् । विकालवेलायां गमिष्याम्युद्यानमिति संस्मृत्य कात्यायनिकायाः पुरः प्रयुक्तं वचनमेकाकिन्याप्यनुसृतः कामदेवायतनमार्गकृतोऽतिगुपिलतया दिवापि संत्रासकारिणि स्त्रीणामगणितात्मविनिपातया निशायामिह महीयसि महीपतिक्रीडावने प्रवेशः । विचरितमितस्ततः सकष्टमेतां द्रष्टुकामया । दृष्ट्वा च कृतः पाशमोक्षणाय बहुप्रकारो यत्नः । कियद्वा वर्णयाम्यसाधारणभक्तिवात्सल्यायास्तवोचितकारित्वम् । एकमेव मनागयुक्तं कृतं यदहमस्या महानर्थहेतुरुपकारपरम्परोद्घट्टनेन वैलक्ष्यमानीतः । एतां च प्रणामकर्मणा घननिदाघघर्माघ्रातनवशिरीषकलिकावत्कोमलाङ्गयष्टिं कष्टमनुभाव्य बहुमानार्थिजनपदव्यामारोपितः सकृदनुस्मरणेनाप्यपनेतव्यरणरणकस्य नामग्रहणेनाप्यनुग्रहं मन्यमानस्य बाह्यपरिजनप्रयोज्येन दृष्टिदानेनापि संवर्धनीयानन्दस्य निन्दापरं ममोपचारकरणम्' इति ब्रुवाणं च तं बन्धुसुन्दरी स्मित्वा मन्दमवदत्—'महाभाग, मदभिप्रायेण सत्यं महानर्थहेतुरस्यास्त्वम् । अत एव नायुक्तमुपकारोद्घट्टनं मया विहितम् । केवलं त्वदभिप्रायमाश्रित्य पृच्छामि । सर्वकालमन्तःपुरगतायाः स्वप्नेऽप्यजातपुरुषसंनिधिरधुनैव[2] दृष्टः कथं महानर्थहेतुरस्या भवान्[3]' । अथ किंचिदुद्भिन्नहासः

१. 'लम्भितस्य' इति स्यात्. २. 'संनिधेः' इति स्यात्. ३. 'भवान् इति पृष्टः' इति स्यात्.

'[1]छलग्राहिणि, रहस्यमेतन्न शक्यते प्रकाशयितुम्' इत्युदीर्य तूष्णीमभवत्। सापि कथमयं महानर्थहेतुरिति विमृश्य बहुशः प्रश्नकाङ्क्षया मन्मुखे चक्षुरक्षिपत्।

ततोऽहमुद्भिन्नहासा निभृतमुपसृत्य तां कर्णे विदितवृत्तान्तमकरवम्। सापि मद्वचःश्रवणविस्तारितेक्षणा प्रत्यङ्गमर्पितस्तिमिततारकेण चक्षुषा निरीक्ष्य तुलितकुसुमायुधं तस्य रूपमन्तः परं परितोषमवहत्। अभाषत च निभृताक्षरम्—'भर्तृदारिके, कृतमतीव दुष्करं त्वया, यदस्य प्रथम एव विरहे न मुक्ताः प्राणाः, न गृहीत उन्मादः, न प्रतिपन्नं महाव्रतम्, एवं दुःखमनुभवन्त्या दर्शितः स्नेहः' इत्युदीर्य रचितकरसंपुटा प्रणम्य तमवादीत्—'कुमार, कुटिलस्वभावाः स्त्रियः, निसर्गसरलः पुरुषवर्गः, इति जनप्रवादो न निरवद्य इति चिरादद्य मे स्थितं मनसि। यस्मादपृष्टयापि मया दृष्टमात्रस्य ते जन्मनः प्रभृति सर्वमावेदितं निजरहस्यम्। त्वया तु पृष्टेन विदितपूर्वमेतावदपि मे न प्रकाशितम्। अप्रकटिते तु तस्मिन्कथमहं सोऽयमस्याः प्रिय इति त्वां जानामि। तत्क्षमस्व मे, यन्मनोरथशताकाङ्क्षितदर्शनस्य स्वतः प्रीतेन विधिना कथमपि समीपमानीतस्य भुवनत्रयप्रथितपार्थिवप्रथमसूनोः प्रथमदर्शने न दर्शितः प्रतनुरपि संभ्रमः, न प्रपञ्चितो वचनमात्रेणाप्युपचारः, न कृतमर्घपाद्यादिकमीषदपि पूजाविशेषविधानम्' इत्युदीर्य वेगागमनबलात्तुङ्गकुचयुगा भुजयुगं प्रसार्य संजातनिर्भरोत्कण्ठेव कण्ठे तमतिगाढमाश्लिक्षत्। उपनीय विष्टरमादरादर्घमुपपादयितुमुद्यताम् 'अतिथिवत्सले, मा कृथाः क्लेशम्। अमुनैव ते सहजसौहार्दशोभिना संभ्रमेण कृत्यकृत्योऽस्मि। कृतमाडम्बरेण' इति ब्रुवाणः स तां न्यवारयत्।

---

१. संबोधनम्.

अथ निविश्य सा विहितकुशलप्रश्ना विलम्ब्य स्तोकमुत्सुका मामवादीत्—'भर्तृदारिके, किमनेनैव शुष्ककण्ठाश्लेषेण दर्शितस्नेहया मया स्थातव्यम्, उतास्य महाराजसूनोस्त्वत्समागमप्रदानपरमोपकारिणः पुण्यैः कथंचिदासादितस्य कर्तव्यः कश्चिदुपचारः' इति । कृतप्रश्नां च तां वारंवारमवनतमुखीम्—'सखि, किमर्थं न करोषि । पूर्वमपि मया शरीरतः प्रभृति यत्किंचिदस्ति तत्समर्पितं समस्तमपि ते । किमन्यदस्मादप्यधिकमिच्छसि' इति साभ्यसूयेव चरणाङ्गुष्ठलतया लिखन्ती क्षोणितलमव्यक्तमवदम् ।

सा तु निशम्य तज्जातसंमदा 'भर्तृदारिके, यदि तवैष निश्चयस्तत्किमन्येन । साश्वगजवाहना सरत्नस्वर्णकोशा सपरिजना त्वमेवास्मै मया विश्राणिता' इत्यभिधाय तत्क्षणाबद्धसाध्वसप्रकम्पतरलिताङ्गुलीकम् 'अलीकवत्सले, मुञ्च माम् । इष्टसंयोगोऽयमस्याः परमदाहदायी भविष्यति' इति कृतनिषेधमिव सप्रहर्षा समाकृष्य मत्करतलम्, अविरलोद्भिन्नपुलकजालकेन स्वेदजलसेकादुद्गताङ्कुरेणेव तत्कालकन्दलितकन्दर्पमदमुकुलितालोलपक्ष्मणि मदीक्षणयुगे निहितनिस्तरङ्गचक्षुषस्तस्य दक्षिणाग्रपाणिना समयोजयत् ।

कृतकरग्रहणां च मामीषन्नतमुखीमुपवेश्य तस्यार्धासने समुज्झितासना समानीय करयुग्ममग्रतः कृताञ्जलिरवोचत्—'कुमार, वृत्तस्तावदेष संक्षेपेण युवयोरभीक्ष्णमाकाङ्क्षिणोर्मनोरथसहस्रैः करग्रहमहोत्सवः । संप्रति कृतार्थाहमुपजाता । समासादितं स्वाधीनत्वम्, अपसृतश्चिन्ताराशिः, अवगतं सुखस्वरूपम्, आरोपिता मनसि निद्रानन्दसंप्राप्तिः । किं न तद्यन्न मे संपन्नमभिमतम् । तथापि कृपणार्थिजनचेतोवृत्तिवदजातपरितोषा प्रार्थये किंचित्' इत्युक्तश्च स तया स्तोकमवनताननो ह्रीत इव तामवादीत्—'बन्धुसुन्दरि, किं प्रयच्छामि । त्वदुपकार-

स्यास्य सदृशं दानमपि नास्ति । किं वस्तुनान्येनोदितेन । निजभुजार्जितामवनिमप्यशेषामर्पयामि ते, किं तु सांप्रतं दातुमप्रभुरहम् । यदि त्वं प्रीतिदानार्थिनी तदेनामात्मसहचरीं याचस्व । मम पुनः शरीरादारभ्य यत्किंचिदस्ति तत्पूर्वमेव सर्वमुपनीतमस्यै समुद्रमध्यावस्थितेन सुहृदा कर्णधारेण' इत्यभिहितासौ द्विगुणतरमवाप्तपरितोषा विहस्य तं पुनरभाषत—'कुमार, कस्मान्महाकृपण इव मिथ्योत्तरैर्निवारयसि माम् । अनाकुलस्तिष्ठ । न मयार्थार्थमाबद्ध एष ते पुरः प्रार्थनाञ्जलिः । इदं ममाभिप्रेतम् । प्रेतनाथमुखनिपतितामेतां मलयसुन्दरीमुद्धर्तुकामया काममनुभूत एतया क्लेशः' इति कुर्वता मय्यनुक्रोशम्, 'क्रमागतो महापुरुषमार्गः कुलाभिमानिभिरत्याज्यः' इति भृशं विमृशता, 'स्वदारपरिपालनकर्म गृहमेधिनां धर्मः' इत्यजस्रं ध्यायता, 'त्रिभुवनातिशायिरूपलावण्यया दुर्गदेशस्थितोऽप्यविज्ञातकुलशीलसंनिवेशो दृष्टमात्रः स्वयंवृतोऽहमनया' इति मनसि न्यस्यता, समुद्रपातादिमरणाध्यवसायसूचितममुष्याः स्नेहमन्वहं चिन्तयता, 'मद्वियोगे प्राणनिरपेक्षया रक्षितं चारित्रमात्मीयमनया' इति मन्यमानेन पुण्यभागिना तथा तथा प्रयतितव्यम्, यथा भूयोऽपि नेयं दुःखभागिनी भवति' इत्यभिधाय विहिताश्रुपाता तस्य पादयोर्न्यपतत् ।

सापि[1] तां तथा पादपतितामवलोक्य करुणया शुचा च युगपद्गृहीतचेताः सखेदमवदत्—'बन्धुसुन्दरि, पृथग्जनोऽपि न वृथाभ्यर्थनः कृतो मया, किं पुनः प्राणपरिरक्षणममुष्याः कृतं यया तां सद्य एवाद्य विहितोपकारां करोमि । भवतीमन्तरेणापि ते वचनमवधृतं मया सर्वम् । अस्ति चाभ्युपगमः । तथापि विधिरत्र प्रमाणम्' इत्यभिधाय तूष्णीमभूत् ।

---

१. 'सोऽपि' इति स्यात्.

ततोऽहमुपजातसमधिकधृतिस्तत्रोन्निद्रकाननद्रुमोपगूढे दूरारूढशशधरांशुधोरणिध्वस्ततमसि रसितानुमितसितहंसपतत्रिमिथुने कुमुददीर्घिकातीरसैकते कुसुमशयनीयोपविष्टा समीपविनिविष्टेन मन्मुखासक्तगाढानुरक्तदृष्टिना दयितेन चतुरचटुनिवेशपेशलैः परिहासवचनैर्विनोद्यमाना विनिहिताङ्गयष्टिरुत्सङ्गदेशे बन्धुसुन्दर्याः कदाचिदप्राप्तपूर्वमतिशयितगीर्वाणसदनावासमुदममन्दमानन्दमनुभवन्ती निशीथमनयम्।

क्रमाधिरूढविश्रम्भा च तमहं कृतप्रश्नाया बन्धुसुन्दर्याः स्वदिग्विजयवृत्तान्तमावेदयन्तमुदधिवार्ताव्यतिकरे लब्धावसरमनुयुक्तवती— 'आर्यपुत्र, तत्कालसंभृतमद्यापि नोपारमति मे भयम्। अतः पृच्छामि। तस्मिन्नवसरे ततः पातालसदृशादम्बुराशेः केन त्वमवतारितस्तीरः' इत्युक्तो मया कृतस्मितः सव्रीडमवदत्—'द्रविडराजतनये, त्वदीयवदनेन्दुदर्शनगृहीतोद्यमेन केनाप्यदृष्टेन' इति। तमहमब्रुवं पुनः 'आर्यपुत्र, सत्यमेवास्मद्विधजनाभ्युदयकाङ्क्षिणा पूर्वजन्मार्जितेन शुभकर्मणादृष्टेनोद्धृतस्त्वम्, तथापि परमार्थतः कथय। विस्मयो मे।' स पुनरवदत्—'चन्द्रमुखि, परमार्थोऽप्यसावेव। शृणु निवेदयामि सागरप्रवेशात्प्रभृति यन्मे वृत्तम्। तदा तिरोभूतदर्शनायां त्वयि तीव्रविरहदुःखासहिष्णुतया निपतितोऽहमर्णवपयसि नूतनाम्भोधरनिनादधीराम्।' 'अहो नृपकुमार, किमपि कमनीयदर्शनायास्तवाकृतेरतिविसदृशोऽयं व्यवहारः। कथय किंनिमित्तमनिमित्त एवात्मानमुत्सृजता सविधवर्ती कैवर्तजनोऽयमर्णवावर्तमकराणाममीषामामिषत्वेन त्वया प्रकल्पितो वराकः। इदं चाकस्मादनुसरणमात्रेणापि प्रशमिताशेषजन्तुदुरितमखिलविश्वत्रितयविश्रुतमहिम्ना महावीरजिनवरप्रतिमया प्रसाधितस्य सिद्धायतनमैत्र्या पवित्रितं तीर्थमन्यतीर्थिकपरिगृहीतैर-

नेकसत्त्वप्रलयहेतुभिः प्रपाततीर्थैः समीकृतम्' इति वाचमाकस्मिकीमश्रृणवम् । 'क एष मामुपालभते' इति चिन्तयन्नेवोन्मीलितलोचनो न किंचिदन्तिकस्थमीक्षितवान् । केवलं तथैवात्मना समाक्रान्तपूर्वे पर्वतोपकण्ठावासितस्य निजसैन्यस्य नेदीयसि नदाधिराजोत्तारतीरे तरन्तीं तामेव निजनिजस्थानोपविष्टप्रहृष्टनिःशेषनाविकां नावमद्राक्षम् ।

'केन वयमुदधिमध्यादुद्धृताः, कथं चेयस्माभिरचिन्तितैव नौरिह प्राप्ता' इति तारकेण सह चिन्तयन्नन्तर्विस्मितो यावत्तिष्ठामि, तावदागत्य रात्रावदर्शनादनुभूततीव्रशोकेन परिवृतो राजलोकेन नीतश्च वीतगमनाभिलाषोऽपि प्रीतमनसा निवासम् ।

तत्र चादत्तदर्शनः प्रधानलोकस्य शिथिलीकृतसकलपृथ्वीव्यापारः सर्वकालमेकान्तवर्ती प्रवर्तिताविरतशीतोपचारः परिचारकजनेन 'न जाने सा वराकी गता कामवस्थाम्' इति त्वां चिन्तयन्निमेषमप्यनुपजातनिद्रो निशाः कतिचिदनयम् । एकदा तु प्रातरेव द्रष्टुमुपागतस्तदवस्थमवलोक्य तारकः सखेदं मामवादीत्—'कुमार, निष्पल्लवानि चन्दनद्रुमवनानि संजातानि । निःशेषितमृणाला नालशेषाः सरसीषु नलिनाकरा वर्तन्ते । कियन्तं कालमिह पर्वते कुर्वद्भिरफलं देहदाहप्रतीकारमुत्सृष्टपुरुषकारैरासितव्यम् । किं न चिन्त्यते कोऽपि तदवास्युपायः । किं च काञ्चीनगरगमनाय गृह्यतेऽद्यापि नोद्यमः । किं विस्मृतं तद्युवराजस्य यत्तदा समुद्रोदरे नौस्तव छद्मना त्वदर्थे कृतप्रार्थनस्य विज्ञाय मे भावमभिमुखार्पितस्मेरनयनया 'भद्र, किमहं न श्रृणोमि, येन भूयो भूयस्तमेवार्थमावर्तयसि । सर्वमवधारितं ते वचनम् । अङ्गीकृतश्चायं नायकः, किंतु तिष्ठतु तावद्यावदहमिहस्था स्वस्थानमुपगता काञ्चीमध्यमागतं ग्रहीष्याम्येनमिति यदुक्तं तया' इत्यभिहिते तेन किंचिदुच्छ्वसितचेताः

पुनरवोचम्—'तारक, स्मरामि सर्वम् । किं तु संदिग्धमेतत् । किं तया भवन्तमुद्दिश्य गदितम्, आहोस्वित् आर्ये, संप्रत्येव नृत्यन्त्यास्त-वातिरभसेन सारसनमध्यसद्मा समुच्छलित एष पद्मरागः । तद्गृहाणैन-मिति पुनः पुनर्भाषमाणं तमेव पुष्पपटलकन्धरं देवलकदारकम्' इति न शक्यते निर्णेतुम् । अथ तद्दर्शनोपायमपरमप्रेक्षमाणैरर्थसंशये प्रवृत्तिरप्रतिषिद्धेति मत्वा गम्यते तत्र, तदपि दुष्करमेकाकिनः । त्वदध्यासितां नावमेकामधिरुह्य प्रस्थितस्य मे सकल एव प्रतिपन्थी परिग्रहजनः । सैन्यसहितस्य च परमण्डले गमनमतिविरुद्धमप्रसाधकं च प्रारब्धे कार्यस्य' इति व्याहरन्तमुपसृत्य वेत्रधारी मामवोचत्—'कुमार, देवस्य चन्द्रकेतोरन्तिकादागतो लेखहारकः प्रतिहारभूमौ तिष्ठति' । 'प्रवेशय' इत्यभिहिता च सा शीघ्रमेव तं प्रावीविशत् ।

कृतप्रणामं च सादरस्तमद्राक्षम् । अपृच्छं च—'भद्र, कुशली तातः' इति । अथासौ 'यथाज्ञापयसि' इत्यभिधाय भूयः कृतप्रणामः पुरस्ताल्लेखमक्षिपत् ।

तत्र च 'शत्रुबलपीडितेन द्रविडमण्डलाधिपतिना कुसुमशेखरेण दूतमुखेन कृत्वा सख्यमुपयाचिताः स्मः । प्रतिज्ञातं प्रतिश्रुतं च तस्मै तदस्माभिः । प्रेषितश्च तत्सैन्यसाहायकाय कियानपि रथाश्ववारणप्रायो दण्डः । सैन्यं संत्यक्ताशेषकार्येण कल्याणभागिना स्वसैन्यपरिगतेन गत्वा सत्वरमधिष्ठातव्यम्' इत्यतिक्रान्तवार्ताप्रकाशनपुरःसरं पितुरादेश-मभिलिखितमीक्षितवान् । उच्छ्वसितहृदयश्च तदवधारणेन सिद्धमेव त्वदीयदर्शनं समर्थयमानः प्रहर्षनिर्भरः स्थित्वा मुहूर्तमीषत्कृतस्मित-स्तारकमवोचम्—'सखे, तातलेखार्थेन स्थापितास्तावद्वयं त्वदीयवचसि । उत्तिष्ठ । काञ्चीगमनसज्जो भव' इत्यभिधाय तत्रैव क्षणे प्रयाणघोषणा-

पटहमदापयम् । उच्चलितसकलनौदण्डश्च प्रत्यहमखण्डितैः प्रयाणैर्लङ्घयित्वा लवणजलनिधिं जनपदांश्च कतिचित्क्रमेण काञ्चीमागमम् । आकर्णितमदागमनवार्तोपजातप्रीतिना च त्वत्पित्रा प्रत्युद्गम्य दूरमुपदर्शितादरेण प्रवेशितः शुचावेकत्र सावकाशे प्रदेशे स्कन्धावारमामुचम् ।

तत्र च त्वदुपलम्भाशया दिङ्मुखख्यातरूपसंपदां राजकन्यानां विद्धरूपाण्यादरप्रवर्तितैश्चित्रकृद्भिरभिलिख्योपनीतान्यजस्रमवलोकयतः कथानिबद्धं यथावृत्तमात्मीयमुदधिवृत्तान्तमखिलसामन्तान्तःपुरेषु चिरंतनाख्यानकव्यपदेशेन स्वप्रयुक्ताभिः कथकपुरंध्रिभिः प्रकाशयतः प्रधानदेवतायतनेषु नरपतिप्रासादशिखरेषु नगरपालोद्यानेषु प्रेक्षाजनसमाजेषु मज्जनायातपौरवनितासमाकुलेषु च स्रवन्तीपुलिनेषु द्विवापि संचारिततारकस्य मे गताः कतिपयेऽपि दिवसाः ।

अद्य तु प्रातरेव प्रासादतलगतोऽहं शिबिरासन्नवर्तिना रथ्यामार्गेण व्रजन्तमुज्ज्वलविचित्रवस्त्रधारिणमनेकविच्छित्तिविरचितप्रसाधनमनर्घरत्नाभरणभूषिताङ्गमनणुमाणिक्यखण्डखचितपर्याणेषु वाजिषु वारणेषु गतिकम्परणितकिंकिणीकलापेषु याप्यमानेषु चाधिरूढमङ्गनासमूहमवलोक्य जातकुतूहलस्तारकमपृच्छम्—'भद्र, जानासि क्वायं जनसमूहः प्रस्थितः' । स मामवादीत्—'युवराज, ज्ञातमेवैतत् । अस्ति रम्यतानिरस्तनन्दनवनवैभवमितो नातिदूरे नरेन्द्रभवनोपवनसंसक्तमतिशयस्निग्धसुकुमारद्रुमं कुसुमाकराभिधानं काननम् । तत्र निजसौभाग्यखर्वितसमस्तान्तःपुरपुरन्ध्रिगर्वया गन्धर्वदत्ताख्यया महादेव्या कारिते देवस्य मकरकेतोरायतने प्रवृत्ताद्य चैत्री यात्रा । तां द्रष्टुमुच्चलित एष पौरयोषिज्जनः । न चायमेतावानेव । अन्योऽपि नगरनारीजनो

राजलोकश्चानेकसहस्रसंख्यस्तत्र यास्यति । कुमारस्यापि यदि नरेन्द्रानुवृत्त्या भक्त्या यदि लोकमार्गानुसरणेन यद्यन्यदेशयात्रास्थितिविलोकनकुतूहलेन युज्यते गन्तुम्, प्रस्तुतस्यापि प्रयोजनस्य सिद्धावयमेवावसरः। यद्यत्रापि शैथिल्यं तदा कोऽन्यः प्रक्रमो भविष्यति । यत्र तद्दर्शनं भावि ।' अहं तु 'युक्तमयमाह' इति मनसाभिनन्दिततदीयवचनस्तत्क्षणमेवोच्छ्राकृतमज्जनो गृहीतरुचिरवेषः समारोपितवर्यकनकपर्याणां करेणुकामधिरुह्य कृपाणकुन्तपाणिना तरुणवण्ठप्रायेण पदातिलोकेन परिमितेनैवानुगम्यमानो मनोभवायतनमिदमभ्यागमम् । अवतीर्य च कृतप्रवेशः प्रणम्य दूरस्थित एव मन्मथमुन्मथ्यमानहृदयस्त्वद्दर्शनोत्कण्ठया द्वारदेशाभ्यासगतमन्यतममुत्तमं मत्तवारणकमध्यासितवान् ।

तत्र च समासन्नचारिणा परिचारकेण तूर्णमुपनीतायामलघुतरविस्तारायां नेत्रविस्तारिकायामुपविष्टः प्रत्येकमनुरागशून्येनापि चेतसा निष्पतन्तमापतन्तं च वनिताजनमनन्यदृष्टिरीक्षमाणो दिवसमनयम् । अवसिते च वासरे विरलीभवत्सु कृत्रिमतुरङ्गवारणक्रीडाप्रधानेषु प्रेक्षणकेषु, विघटितासु विटलोकलोचनसुधासु वेश्यारासमण्डलीषु, कृतपरस्परसेकयुद्धेषु प्रस्थितेषु मज्जनवापिकाभ्यः कनकशृङ्गभृङ्गारपाणिषु भुजङ्गपौरेषु, निर्याते यात्रायातनगरनारीगणे, क्षणेन विरते रतिभर्तुरायतनरामणीयके, झटिति नष्टाशः समं मार्तण्डमण्डलाभोगेन विच्छायतामगच्छम् ।

श्लथीभूतसकलगात्रसंधिश्च कथमप्युत्थाय तस्या द्वारमत्तवारणकादेकहेलयोज्जिहानस्य कल्पान्तदहनदारुणस्य दाहज्वरव्यथावेगस्य मरणमेव मन्यमानो निराकरणमङ्गणोपविष्टानुपश्रित्य सर्वानप्यात्मसेवका-

---

१. वस्त्रविशेषगद्दिकायाम्. २. आशा मनोरथः, दिक् च.

न्प्रत्येकमवदम्—'भद्राः, प्रयात सदनम् । अद्य मया गृहीतनियमेनैकाकिनास्मिन्नेव स्मरायतनमण्डपे निवस्तव्यम्' । गतेषु च तेषु पुनरपि तदेवायतनमविशम् । तत्र च गृहीतविरहिवेषः प्रेषणानन्तरमेव सत्वरैरुपेत्य परिचारकैरुपरचितमग्रे मकरकेतोः शिरोभागनिहितमृदुमृणालिकां काण्डगण्डोपधानमम्बुकणिकानिकुरम्बकर्बुरमरविन्दनीपत्रसंस्तरमध्यारोहम् । तेन च प्रचुरदाहवेदनावहेन चिताहुतवहेनेव द्विगुणमुपताप्यमानो जालान्तरनिपातिभिरंशुनिकरैः प्रासविसरैरिव हिमांशुना हन्यमानः कृतविनिद्रोद्यानबकुलकलिकाघातेन विषवातेनेव मलयमरुता विह्वलीकृतः क्वणद्भिरुपकर्णमिष्टदेवतानामवर्णानिव जपद्भिरुत्तंसभृङ्गैर्ग्राह्यमाणो मुहुर्मुहुः स्मृतिं येनैव प्रापितो विपदमेतां तस्यैव परमशत्रोर्विषममार्गणस्यागत्य निकटे निषण्णो मूढधीरितीवाबद्धविकटाट्टहासैरालिङ्गितः सर्वाङ्गेषु प्रसारितभुजाकारदीर्घनालैः कुमुदजालैस्त्वदवलोकनसाधकोपायमालोचयन्मरणमतिशयकरणमङ्गनाया इवाक्रन्दशब्दमश्रृणवम् ।

श्रुत्वा च वेगान्निर्गतो बहिरुदस्तबाहुयुगलामुभयगण्डस्थलप्रसृतबाष्पसलिलस्रोतसमशेषदिक्प्रहितनिःप्रत्याशनयनामायतनसालशिखराग्रस्थिताम् 'अहो नृपतिमन्दिरारामवर्तिनो नगरलोकाः, श्रृणुत कृपणाया मम प्रार्थनावचः । यः कश्चिदत्र यात्रादर्शनार्थमागतः स्मरायतनमध्ये चाकृत्रिमसरित्तीरमण्डनेषु माधवीमण्डपेषु वा कृताभिनवसंस्कारासु क्रीडागिरिगुहासु वा गन्धसलिलच्छटाधौततटशिलातलेषु कमलकुमुददीर्घिकापुलिनेषु वा गृहीतव्रतः श्रान्तः पानगोष्ठीप्रसक्तः प्रियाविरहवेदनार्तो वा तिष्ठति, स तूर्णमुत्तिष्ठतूत्तिष्ठतु । समावर्जयतु पुण्यस्कन्ध-

---

१. 'अरविन्दिनी' स्यात्.

मतिमहान्तमेकस्य सकलजगदेकचूडामणेः कन्यकारत्नस्य परिरक्षणेन रक्षन्ननन्तं प्राणिसंघातम्' इति विक्लवं विलपन्तीमिमामेव तव सहचरीं बन्धुसुन्दरीमद्राक्षम्। दृष्ट्वा च तीव्रदुःखोपतप्तहृदयः सदयमवदम्— 'भद्रे, का त्वम्, किमर्थमाक्रन्दसि, केयं कन्यका, कस्यापत्यम्, किमस्या जातम्, किं चास्माभिरत्र प्रतिविधातव्यम्' इत्यभिहितासौ विलोक्य मां तत्कालमेव स्वस्थानगतजीविता शिरसि बद्धाञ्जलिम् 'भ्रातर्, अलमलं प्रश्नेन। ममैव पृष्ठतो धाव धाव। शीघ्रं कुरु कुरु प्रगुणां करे कृपाणिकाम्। छिन्धि छिन्धि पुरतोऽस्य सरसीतीरशाखिनः स्कन्धशाखानिबद्धमस्या महाराजदुहितुः कन्धरापाशम्। मा विधेहि तावदन्यं व्याक्षेपम्। आवेदयिष्यामि सर्वमेतद्यदि मे मनोरथाः संपत्स्यन्ते' इति संभ्रान्तहृदया गदन्ती गद्गदस्वरेण श्वासविधुराधरा प्राकारशिखरादवतीर्य सत्वरा मध्ये तरूणामधावत्। अहमपि तथाविधाकृ[1]तदर्शनेन क्षिप्रतरमुत्क्षिप्तपादः पदान्यनुसरन्नस्यास्त्वत्समीपमागच्छम्' इति निवेद्य निजवृत्तान्तमुपशान्तवचसि तस्मिन्सविस्मया बन्धुसुन्दरी क्षणमिव स्थित्वान्तरिक्षमैक्षत।

बभाषे च किंचित्क्षुभितहृदया—'कुमार, कस्मान्निराकुलस्तिष्ठसि। उत्तिष्ठ यावदक्षीणभूयिष्ठा रात्रिः। अन्वेष्टारश्च यावदिह नापतन्ति तावदेनां प्रापय प्रच्छन्नामेव निजदेशम्। अति हि विरुद्धमत्रावस्थानमस्याः। शृणु। निवेदयामि। यतः करग्रहणवार्ताश्रवणभीतयाध्यवसितमेतदुद्बन्धनविधानेन मरणमेतया। तस्यैव शक्रसेनापतेर्वज्रायुधस्य प्रदास्यति प्रातरेनामतिनिबिडविग्रहनिपीडितो द्रविडदेशाधिपतिः। उ[2]पनीता च संधित्सुना तेन दुर्निषेधाविरोधहेतुश्च। नीता तु

१. 'कृति' स्यात्. २. ढौकिता.

देशान्तरमिदानीमेव शत्रोरपहृता भवति सुखेन चातिवाहयति कालम्। कालान्तरे च सकलवरगुणोपेतेन निर्व्याजसुहृदा महाराजतनयेन गत्वा त्वया गृहीतपाणिः क्रमाधिगतवृत्तान्तस्य पितुरपि परां प्रीतिमावहति। तदेवमत्र क्षणे निर्जनादितो वृक्षगहनादपहरणमस्या गुणवदतिमात्रमाभाति मे। तथापि त्वं प्रमाणम्।'

सोऽपि तच्छ्रुत्वा कृतविमर्शः—'सूक्तवादिनि, मुंक्तवादिनि, युक्तमभिहितम्। किं तु दुष्करमिदं मादृशानाम्। अहं हि वारंवारमभ्यर्थितेन प्रतिपद्य मित्रतां शत्रुगृहीतस्य राज्ञस्तावकस्य साहाय्यकाय पित्रा समादिष्टः। तेनास्य सर्वथा सराष्ट्रस्य सपशोः सपुत्रदारस्य रक्षाविधौ मया व्यापृतव्यम्। यदा तु छलेन रात्रावुपेत्य प्राणभूतामस्य दुहितरमपहरामि, तदा तदपकारकृत्येषु नित्यमेव निषण्णबुद्धेर्वज्रायुधस्य मम च न व्यतिरिच्यते किंचित्। किं च हृत्वा गत इमामनवनिर्दोषगीतचरितस्य तस्यापि पितुरात्मीयस्य दर्शयिष्यामि कथमात्मानम्। आस्तां च तावत्स मे तातः। इयमप्युचितकारिणी त्वदीया सहचरी विवाहसमये 'पश्य वरमुखम्' इति व्यापारिता प्रियसखीभिः कथमानन्दनिर्भरा मे वदनमवलोकयिष्यति। तदलमनेन कर्मणा। मा त्वरस्व। स क्रमः कोऽपि चिन्तनीयो येन दातुमेतामुद्यतः काञ्चीविषयाधिपोऽपि निषिध्यते। विरोधोऽपि सार्धममुना न वर्धते। इयमपि प्रीतिकारिणी पितुर्भवति।' इत्यभिधाय नीत्वा च कन्यान्तःपुरप्रवेशं यावदावामदृष्टमुखविकारः प्रकृत्यैव गत्या स्वशिबिरं प्रति प्रस्थितः।

प्रस्थिते च तत्र क्षणमात्रदत्तान्तरेणोत्पाद्य परमं शैत्यमुपनीततीव्रतरदाहव्यथेन विषमज्वरेणेव पुनरपि विरहदुःखेनाध्यासितामादाय मां बन्धुसुन्दरी कन्यान्तःपुरमगच्छत्।

---

१. 'युक्त' स्यात्.

आरोप्य च शयनचित्रशालिकायामविलम्बितगतिस्तत्कालमेव गत्वा सर्वमपि विद्याधरापहरणादिचित्रशालिकाधिरोहणपर्यन्तमम्बाया यथावस्थितं मदीयवृत्तान्तमकथयत् ।

असावपि तमाकर्ण्य संभ्रान्तहृदया विस्मयप्रमदसाध्वसादिभावशबलितं शोकमुद्वहन्ती समुपसृत्य सविधवर्तिनं द्वितीयशयनमधिशयानस्य मत्पितुरनुच्चोच्चारिताक्षरा श्रवसि समचारयत् ।

पितापि मे तदुपकर्णनेन सद्य एवोपजातवैवर्ण्यः स्थित्वा मुहूर्तमवनतमुखः सखेदमवदत्—'देवि, पश्य दुरात्मनो दैवस्य गतिम् । एषा मलयसुन्दरी मन्त्रिमतमनुवर्तमानेन तवापि वचनमप्रमाणीकृत्य वज्रायुधाय विग्रहोपशान्त्यर्थं मया दातुमिष्टा । निर्दिष्टं च तत्प्रेषितप्रधानपुरुषाणां प्रभाते संप्रदानलग्नम् । अन्तरा चायमन्तरायः संवृत्तः । यदि तावदवधीर्यैनमवधार्य च प्रबलवैरिवृन्दावस्कन्दपीडितानां प्रजानां क्षेमलाभमनपेक्षितापत्यप्रीतिरेनाममुष्मै प्रयच्छामि, ततो नियतमेषा जात्यैव पुरुषद्वेषिणी पुरुषान्तरेऽवरूढगाढानुरागा शस्त्रेण वा विषेण वा वृक्षशाखोद्बन्धनेन वा प्रायोपवेशनकर्मणा वा जीवितं मुञ्चति । अस्यां च पञ्चत्वमुपगतायामाकल्पमयशो दुष्कृतं च मे नोपारमति । अथ न प्रयच्छामि, ततोऽधुनैव संधानमानीतो विशिख इव विघटते विपक्षः । विलक्षीभूतश्च महतीमप्रतिष्ठामुपकण्ठवर्तिषु नृपेषु प्रख्यापयति । एवं स्थिते कर्तव्यमूढं मे हृदयमिदमपेक्षते तवोपदेशम् । आदिश यदत्र सांप्रतं करणीयम् ।'

अम्बा तु मनसा गृहीतक्षणापि 'मत्प्रदानपक्षनिराकरणे पूर्वमादृतं न मे वाक्यममुना' इति किंचिदुपजातरोषेव विरतवाक्प्रवृत्तिः स्थित्वा क्षणमधोमुखी मध्यस्थमेव वचनं व्याहरत्—'देव, काहमुपदेशदाने ।

किं वाभ्यधिकमन्यद्विज्ञापयिष्यामि। द्वावपि व्यञ्जितौ देवेन पक्षौ। य एवात्मने रोचते, य एव बहुगुणः प्रतिभाति, स एवाश्रीयते' इत्युक्तेऽम्बया पिता मे पुनरवोचत्—'देवि, ममैष तावत्संकल्पः। एष वज्रायुधः प्रदानेन वत्साया न संप्रति स्वीकर्तुं नाप्यदानेन निराकर्तुमुचितः। केवलमिदं करणीयम्। अस्यामेव शर्वर्यामनुपलक्षिता जनेनेयमाप्तकतिपयलोकपरिवृता देशान्तरे दवीयसि विसर्जते। प्रजासु च 'आयुष्मती स्मरायतनजागरणसमुत्थया झटित्येव तीव्रया शूलव्यथया विसंस्थुलीकृतशरीरा 'संस्थिता' इति प्रकाश्यते। अत्र हि कृते जनापवादः परिरक्षितः, विपक्षश्च न विरूक्षितो भवति। अनुपलक्षितावस्थितौ चास्यामुत्थिते सर्वत्रैवाभावप्रवादे दीर्घविग्रहजनितनिर्वेदोऽयमपरकन्याप्रदानेन वा देशैकदेशविश्राणनेन वा कतिपयगजाश्वापवर्जनेन वातिनिपुणमुपपादितेन पणबन्धेन संधां स्थापयिष्यते' इत्युदीर्य कृतपार्श्वावलोकनो नातिदूरे निषण्णमाहूयैकमाह्वानाय मे वर्षधरमादिक्षत्। आहूतोपढौकितां च तेनास्थानविहितात्मवधसाहसत्रपाविलक्षविक्षिप्तेक्षणाम् 'प्रभाते विपक्षाय दीयमानः कथमात्मा मया रक्षितव्यः' इत्यनेकोपायचिन्ताचान्तःसकललावण्यविच्छायमुच्छन्नचैतन्यमिव शरीरमुद्वहन्तीमवलोक्य मामुत्पन्नकरुणस्तातः 'एह्येहि पुत्रि, परिष्वजस्व मां नृशंसम्' इत्यभिदधानो बाष्पायमानदृष्टिर्गृहीत्वा भुजाभ्यामङ्कदेशे मामुपावेशयत्। वारं वारमुत्सृष्टदीर्घनिश्वासश्च स्मृत्वा स्मृत्वा मदीयमुद्बन्धनदुःखमधिकमात्मनश्चेष्टितेनान्वतप्यत। विसर्गेऽप्यमुक्तमत्संनिधेः स्निग्धतां बुद्धिमत्तां च बन्धुसुन्दर्या मुहुर्मुहुः प्राशंसत्। पाशच्छेदविहितास्मत्प्राणरक्षे सिंहलेन्द्रसूनौ परां बन्धुबुद्धिमाबध्नात्।

---

१. 'विसृज्यते' इति स्यात्. २. मृता.

तथाविधेऽप्युपद्रवे दैवादजातमरणां पुनर्जातेति माममन्यत । भूयो मरणसंभावनया हृदय इव निक्षेप्तुकामस्तत्कालमधिकमुल्लसितेन बलवतापत्यस्नेहेन मोहितो मुहुर्मुहुर्गाढमस्वजत ।

व्यसृजच्च शनकैः सान्तरनुतापमालापम्—'वत्से **मलयसुन्दरि,** क्षमस्व मे स्खलितमेतत्, यदपरिज्ञाय हृदयभावं भवत्याः सहसैव त्वमस्माभिरस्मै शत्रुसामन्ताय दातुमध्यवसितासि । किं करोमि । न केनापि पूर्वमावेदितो ममैष त्वदपहारवृत्तान्तः । जाने जनन्यापि ते संप्रत्ययमवगतः । अन्यथा तत्प्रदानसमये पृष्टयास्माभिः किमिति यथावस्थितमेव स्वरूपं नाविदितं मे । तदलमुद्वेगेन । स्वस्थचित्तास्व । न त्वामिदानीं प्राणविच्छेदेऽप्यमुष्मै संप्रयच्छामि । केवलं कंचित्कालमनुभवितव्यो भवत्या प्रवासजनितः क्लेशायासः । सोढव्यमधिकमूढचित्तया सुहृद्बन्धुजनविप्रयोगदुःखम् । एष **वज्रायुधः सिद्धादेश**दैवज्ञवचनप्रत्ययेन सकलखेचरचक्रवर्त्यमात्यपदसंप्राप्तिकामः किमपि बद्धाग्रहः करग्रहविधौ वरणाय ते प्रातरेव प्रहेष्यति प्रधानपुरुषान् । प्रतिपन्ना च भवती प्रत्यक्षदर्शनातिदुष्करा निषेद्धुमेषाम् । आसन्नवर्तिनि च यत्र क्वापि नगरे वा जनपदे वा तवावस्थानमहितस्य सर्वतो विहितचारसंचारस्याध्यक्षमेव । तदुत्तिष्ठ वत्से, विधेहि प्रस्थानमधुनैव दूरदेशान्तरगमनाय' इत्युक्तवन्तं च तातं माता मे पुनरवोचत्—'देव, यद्यसौ दूरे गमयितव्या तद्दूरं तत्रैव पत्रलस्निग्धपादपे दक्षिणाब्धिजलतरङ्गास्फालवाचालदेवार्चनशिलावेदिके मलयमेखलामूलवासिनि प्रशान्तवैराख्ये वैखानसाश्रमपदे गच्छतु, यत्रार्यपुत्रेण सह मे प्रथमदर्शनं संवृत्तम् । तत्र हि ।

प्रातः प्रातरवेक्ष्य होमहुतभुग्धूम्यामहादुर्दिनं
हृष्टस्याश्रमबर्हिणस्य रसितैरायामिभिस्त्रासिताः ।

नीचैरेत्य समाधिनिश्चलतनोर्मध्ये जटामण्डलं
यस्याबाधितबद्धनीडचटकाश्चक्रुः स्थितिं भोगिनः ॥

तस्य भगवतो जगत्त्रयख्याततपसस्त्रिकालगोचरज्ञानवसतेः सकलदुःखितप्राणिवत्सलस्य कुलपतेः स्नात(?)शान्तातपस्य[1] पादमूले स्थिता न मे दुःखमुत्पादयति । सुखेन च दिनानि मत्प्रख्यवृद्धतापसीवृन्दपरिपालिता प्रेरयति"[2] । 'तथा' इत्यभिनन्दितालापया चोत्थाय तत्कालमेवाम्बया कृताखिलगमनमङ्गल्या 'कष्टमाभाषितो नाभीष्टजनः' इति मनः सशल्यमुद्वहन्ती बाष्पसलिलप्लुतेक्षणा प्रणम्य पितरमन्तःपुरान्निरगच्छम् ।

अपसारितच्छत्रचामराडम्बरा च निभृतपदमपक्रम्य पक्षद्वारकेणाग्रतो नातिदूरे सिन्दूरितकुम्भभागामुत्तमाङ्गनिहितसितकुसुमदामदूर्वाक्षतामभीक्ष्णचलिततीक्ष्णाङ्कुशमुखेन प्राङ्मुखीकृत्य धारितामाधोरणेन दृष्टसकलशिष्टलोकाचारया मम शरीरपरिचरणाय चापलनिवारणाय च प्रतिशिष्टया[3] तातेन बलवदभीष्टया तरङ्गलेखाख्ययाम्बाया बालसख्या समागत्य प्रथममेवाध्यासितशारिकोटरैककोणां करेणुकामध्यरोहम् ।

आत्तशस्त्रकतिपयान्तर्वंशिकपदातिपरिवृता च तत्कालविनिवृत्तपौरप्रचारसुखसंचारनरपतिपथां क्रमेण नगरीं निशीथिनीं चालङ्घयम् ।

व्रजन्ती च वर्त्मनि प्रतिदिवसमविलम्बितैः प्रयाणकैरल्पेनैव कालेन तत्तपोवनमासादितवती । तत्र चाद्यदिवस एव विसर्जितसहायातभृत्यलोका विमुक्तहारनूपुरादिनिःशेषभूषणकलापा मङ्गलमात्रमेकैकमणिवलयशेषं वेषमुद्वहन्ती प्रतिदिवसमाविष्कृताधिकाधिकवात्सल्येन तात-

१. 'स्नानशान्तातपस्य' इति स्यात्. २. अत्र किंचित्त्रुटितं भवेत्. ३. 'प्रेषितया' स्यात्.

बहुमानात्तापसजनेन सादरं दृश्यमाना मुनिकुमारिकावृन्दपरिवृता, कदाचित्कुलपतिसमादेशादतिथिवर्गमुपचरन्ती, कदाचिद्देवतार्चनकुसुमान्याहरन्ती, कदाचित्पत्रपुटकाहृतैः प्रस्रवणवारिभिर्बालवृक्षकानुक्षन्ती, कदाचिदुटजाजिरोपान्तजातानां वनलतानामालवालानि विरचयन्ती, कदाचिदचिरोपलिप्तासु पर्णशालाङ्गणवितर्दिकासु दर्शितानेकललितपत्रलेखान्स्वस्तिकानभिलिखन्ती, कदाचित्प्रनष्टजननीदुग्धदुर्बलान्बालहरिणकान्बाष्पलभ्यैः शष्पकवलैः संवर्धयन्ती निषिद्धचापलेन प्रियालापिना मत्कृते प्रकृतिसरसस्वादुपाकाः शाककन्दलीः सप्रपञ्चं पचता प्रत्यहमपरापराणि परिणतिमुखानि शाखिनां फलानि प्रयच्छता स्वशयनीयसंनिधावतिस्पर्शवद्भिर्वल्कलांशुकैस्तल्पमुपकल्पयता यथावसरमभिनवाभिनवानि पौराणिकाख्यानकानि कथयता स्थविरतापसीसमूहेन विस्मारितसकलबन्धुविरहदुःखा केवलेनैव तस्य क्षणमात्रोपलब्धसंगमस्य प्रेयसो जनस्य पुनरदर्शनेन दुःखिता कंचित्कालमनयम् ।

एकदा तु याममात्रे वासरे समासन्नपर्णशालावस्थिताहमेकाकिनी केनचित्काञ्चिविषयादागतेन द्विजातिना कुलपतेरावेद्यमानं तदीयवृत्तान्तमश्रृणवम्—यथा किल संमदनत्रयोदशीप्रदोषे प्रगुणितात्मपृतनावीरवर्गो विनिर्गत्य काञ्च्याः कृतमहासंगरः पराङ्मुखीभूतसकलसैन्यनायकेन सायकोन्मथितसारथिच्छत्रकेतुना निरस्त्रीकृतेन शत्रुणा न ज्ञायते कथंचित्समस्तैरेव सहचारिभिः सह नरेन्द्रैर्द्राग्गेव दीर्घनिद्राया शायितः । श्रुतिविवरमवतीर्णमात्रेणैव चानेन तस्य पापात्मनो वचनालापेन कालकूटविषकणिकलापेनेव विह्वलीकृतशरीरा दुःखभरनिरुद्धमन्तःकरणमात्मनो नियन्तुमपारयन्ती नष्टचेतना प्रेमोपदिष्टां तदीयचेष्टामिव यथाश्रुतामनुचिकीर्षुरहमपि दीर्घकालं मूर्च्छामयीं निद्रामगच्छम् ।

१. मुखवातच्छेद्यैः.

कथंचिदुपलब्धसंज्ञा च सत्वरमुत्थाय 'किमतः परं श्रोतव्यम्' इति चिन्तयित्वावधीरिततदारब्धवार्तापरिसमाप्तिर्निर्गता तपोवनात्।

गता चातिमात्रविरलतापसप्रचारवेलातटमवलोक्य च पुरस्तादतिचिराद्दृष्टमिष्टमिव बान्धवमम्बुराशिं शतमुखीभूतदुःखदाहा निदाघसरिदिव प्रथमजलधरासारवारिवरणबन्धेन महतापि प्रयत्नेन हेलागतं बाष्पवेगमपारयन्ती धारयितुमुन्मुक्तातितारकरुणपूत्कारा 'हा प्रसन्नमुख, हा सुरेखसर्वाक्का(का)र, हा रूपकन्दर्प, हा लावण्यलवणार्णव, हा लोकलोचनसुधामर्ष, हा महाहवप्राप्तपौरुषप्रकर्ष, हा कीर्तिकुलनिकेतन, किमेकपद एव निस्नेहतां गतः। किं न पश्यसि मामस्थान एव निर्वासितां पित्रा विसर्जितां मात्रा परिहृतां परिजनेनावधीरितां बन्धुभिरेकाकिनीमदृष्टप्रवासां वनवासदुःखमनुभवन्तीं किमागत्य नाथ, नाश्वासयसि। कदा त्वमीदृशो जातः। कश्च संप्रत्यवेक्षितो मत्पक्षपाती, यदाशया माध्यस्थमवलम्ब्य स्थितम्। किमत्र मद्दुःखदुःखितास्ते बन्धुसुन्दरी, या समागत्य मत्कृते पुनरपि करिष्यति तव प्रार्थनाम्। कथय किमर्थमेकपद एवाहमप्रिया जाता। किं कृतं मया ते विप्रियम्, येन सकृदपि नालपसि। यदि च निसर्गनिष्ठुरस्तत्किमागत्य पाशोपद्रवाद्रक्षिताहम्। किं तदैव नोपेक्षिता जीवितमुत्सृजन्ती। सांप्रतं दर्शयित्वा ममात्मानमावेद्य निःसामान्यमनुरागमपसृतो दर्शनपथात्। आकर्ण्याप्यकल्याणभागिनी तवाद्यापि न प्रत्येमि शत्रुसंपादितां विपदम्। अव्यापन्नविग्रहं जीवन्तमिव केनापि हेतुना भवन्तमुत्पश्यामि। यद्यपि सुराङ्गनासङ्गमस्पृहः पापकारिणीमपहाय मां दिव्यलोकमुपगतः, तथाप्येकवारमागत्य तेनैव प्राक्तनेन रूपेण दर्शयात्मानम्। अनव-

१. निष्ठुरः.

लोकितत्वदानना मर्तुमपि हताशा न शक्नोमि। निष्करुणकीर्तिः प्रिया ते नाहं न चान्यः कश्चिदिति किं न जानामि। युक्तकारी महासत्त्वः स्वार्थविमुखश्च भवानिति च किं न वेद्मि। तथाप्यनेकपापात्मना तमोरूपेण प्रेमनाम्ना महाग्रहेण गृहीता। हस्तगोचरगतोऽपि दैवहतया न प्राप्तः पतिस्त्वमिति चिन्तयन्ती शोकपरवशा निस्त्रपं विलपामि। सर्वथा कृतार्थस्त्वमुन्नामितस्त्वयैकेन सूनुना सिंहलेन्द्रवंशः। तवैकस्य जगति निष्कलङ्कं यशः। त्वमेकः सकलभूपालराजपुत्रेषु ग्राह्यनामा। मरणमपि तवैव श्लाघ्यमेकस्य। येनैकाकिना तत्कालमेव निर्गत्य शिबिरादसोढपरिभवेनासंख्यसेनापरिवृढपरीतः प्रापितः परामवनतिमरातिः। अनेन पुनरुचितकारित्वेन कृतविप्रियोऽपि नितरां प्रियोऽसि मे। यत्तदा बन्धुसुन्दरीवचनेन युक्तोऽपि न प्रयुक्तस्त्वयास्मदपहारः। केवलमिदं बाधते यदुपवर्णितं तया मत्प्रदानोदन्तमाकर्ण्य तूष्णीमेव निर्गच्छता नृपोद्यानादीषदपि नाभाषिताहम्' इत्यादि विविधं व्यलपम्।

अल्पीभूंताशोकोद्रेका चं 'सुचिराक्रन्दितेनात्र दयितयानपात्रिकासंपर्कसुभगे सागराम्भसि विसृज्य निर्वापयामि तीव्रदुःखानलशिखाजालकवलितानिमान्प्राणान्' इति विचिन्त्य चेलाञ्चलप्रमृष्टप्रबलरोदनोच्छूननयना स्नेहनिर्गताश्रुसलिलक्लिन्नदृष्टिभिरागत्यागत्य परिचयात्पुरोद्धवन्तीभिरवगताभिप्रायाभिरिव निरुद्ध्यमाण(न)मार्गा वनमृगीभिः प्रस्थिता पदानि कतिचित्।

पृष्ठतः पारावारपुलिने यथोत्तरं विस्तरन्तमपरस्परानुलग्नमच्छिन्नसंतानमङ्घितलताडितानामन्तरान्तरा दलन्तीनां शुक्तिकानामारवेणानुसृतमनतिमसृणं वालुकारणितमशृणवम्।

---

१. 'भूतशोको' इति स्यात्. २. 'च किं सुचिरा' इति स्यात्.

श्रुत्वा चोपजातकम्पा 'कष्टमागतः को[1]ऽप्यनुपदी' इति चिन्तयन्ती वेगवलितकण्ठनाला पृष्ठतो व्यलोकयम् । अपश्यं च नातिदूरे दूरदोलायमानबाहुयुगलां क्लमविशृङ्खलपदक्षेपचटुलेन गतिमिव, त्वरयितुमजस्रमायतिमता केशपाशेन पृष्ठे ताड्यमानामवस्रस्तनिवसनग्रन्थिसंवरणविहस्तवामहस्ता[2]मंसशक्तमुत्सर्पता दक्षिणकरेण श्रमश्वासवल्गत्कुचयुगास्फालितं गलितमुत्तरीयवल्कलप्रान्तमंसदेशे निवेशयन्तीम्, आसन्नमणिशिलानिपतितप्रतिच्छायाछलेनात्मदेहमपि गतिविलम्बविद्वेषेण स्थाने स्थान इव निक्षिपन्तीम्, यथादर्शनमनुप्रस्थितेन संभ्रमस्खलितगतिना तापसीजनेन दूरविच्छिन्नेनानुगम्यमानमार्गाम्, प्रेमदोषादुत्प्रेक्षिताया म[3]त्तृषः प्रशमनाय गृहीतस्वादुसलिलपूरितकमण्डलुमापतन्तीम्, आकुलाकुलां तरङ्गलेखाम् ।

उत्पन्नवैलक्ष्या च तदवेक्षणेन 'कष्टम्, न संपन्नमिष्टम् । अविनीततायाश्च नीतः पात्रतामात्मा । किं करोमि । आगतेयमन्तिके । न शक्यत इदानीमुदन्वत्पयसि पुण्येऽस्मिन्नपुण्योपहतमुज्झितुं हतशरीरकमेतत्' इति चिन्तयित्वा क्षणं दिक्षु निहितोद्विग्नदृष्टिर्झटिति संनिधावेव दृष्टस्य स्वभावाकृष्टकज्जलकूटकालिम्नः कालकूटविषराशेरिव मथनसंनिहितशिपिविष्टकवलितावशिष्टस्य विटपहारदूरावर्जितप्रान्तस्य निरन्तरतया पर्णसंहतीनामर्ककिरणैरपि मरणभीतैरिव परिहृताभ्यन्तरप्रवेशस्य मारुताघूर्णितनिखिलशाखानिवहमात्मानमपि सर्वाङ्गव्यापिना निजवेषेण विह्वलीकृतमिव प्रकाशयतश्चञ्चुपुटनिविष्टचर्चितावशिष्टफलशकलैरितस्ततो मृतैश्च मूर्च्छितैश्च स्पन्दमानैश्च श्वसद्भिश्च निश्चेतनैर्वनशकुन्तैर्निरन्तराक्रान्तमूलदेशावकाशस्य किंपाकनाम्नो विद्रुमस्य हृद्यस्पर्शगन्धवर्णमति-

---

१. अन्वेष्या. २. 'मासक्त' इति स्यात्. ३. मत्पिपासायाः.

शयस्वादुरसपरिपाकं विपाकदारुणतया विषयसौख्यमिव मूर्तिमत्तया परिणतमादाय पाणिना दक्षिणेन क्षीणपुण्या फलमेकमभ्यवहृतवती।

भुक्तमात्र एव च तत्र शिथिलीभूतसकलपूर्वावस्थमस्वस्थतामगान्मे गात्रम्। कीलितेव कालायसकण्टकेन मन्दमपि नास्पन्दत जिह्वा। स्थगितमिव पटलेन लक्ष्यग्रहणदक्षताममुचच्चक्षुः। पिहितपुटमिव पटाञ्चलने स्पष्टमाजिघ्रन्न गन्धं घ्राणम्। आघ्रातमिव संनिपातेन दीर्घमपि घोषमसकलविशेषं नादितं श्रोत्रम्। एवं च विकलीभूतसकलेन्द्रिया समुत्थितप्रबलकम्पा सर्वदेहावयवेषु मुषितनयनोन्मेषेण मूर्छता प्रतिक्षणमवच्छाद्यमानविज्ञाना निद्रागमेन क्षणमपि स्थातुमूर्ध्वमपारयन्ती तस्यैव विटपिनस्तले शिलातलमेकमाश्रित्य निःसहविमुक्तदेहा समुपाविशम्।

अत्रान्तरे त्वरागमनगाढजाताङ्गग्लानिरन्विष्य तत उतः[2] परागमत्तरङ्गलेखा तमुद्देशम्। आगत्य चात्यन्तमापूरिता कोपेन भूत्वा पुरो निरस्तदाक्षिण्यमितरामिवातिरूक्षैरक्षरैर्मामवादीत्—'दुर्विनीते, कागता त्वमिह। किं तवागमनकार्यमत्रोपजातम्। कस्तवास्मिन्नास्ते। केन ते दुर्मतिरियं दत्ता। ह्रीतापि न तपस्विलोकस्य निर्विवेकवनचरप्रचारदूषिते सागरोपकण्ठकच्छेऽस्मिन्नेकाकिनी यदृच्छया भ्रमन्त्युच्छादिता[3] सगोत्रपुत्रपरिवारा वैरिणि, त्वयाहम्। यदि तवापतन्त्याः पथि कथंचित्क्रूरसत्त्वाद्युपद्रवसमुत्थः कोऽप्यनर्थो महानापतिष्यत्, तदा काहमगमिष्यम्, किमभविष्यम्, केषु तीर्थेषु पापोपलिप्तमात्मानमक्षालयिष्यम्, किमहं पापकारिणी त्वया सहायाता, किं करोमि, क गच्छामि, कस्य कथयामि, केनोपायेन चापलमिदं ते निवर्तयामि।

१. लोह. २. 'इतः' स्यात्. ३. 'उत्सादिता' स्यात्.

दत्तावधानयाप्यधन्यया निष्पतन्ती तपोवनान्नोपलक्षिता। कथमिदानीं प्रमादोपहतमात्मानमृषिजनस्य दर्शयिष्यामि। कथं च कुलपतिं कुपितमनुनेष्यामि। किं मुधा निधाय जानुनोरुपरि मूर्धानमवनतमुखी तिष्ठसि। उत्तिष्ठ। गच्छाश्रमम्। दृष्टा शीलवति, ते शालीनता' इति ब्रुवाणा कराग्रेण बाहुमूले मामग्रहीत्। उत्थाप्य च कथंचिदतिमहता प्रयासेन प्रचलिता नीत्वा पदानि त्रिचतुराणि विगतचेतनामिवासमञ्जसक्षिप्तचरणां चिरेण मामुत्पन्ननिर्वेदा पुनरेकत्र वृक्षमूले न्यवेशयत्। अभाषत च विषवेदनाविषण्णां मुहुर्मुहुरुच्चस्वनेन **'मलयसुन्दरि, मलयसुन्दरि,** किमेवमुत्सृष्टसौष्ठवा तिष्ठसि। किं च वारंवारमालापितापि मे वाचं न प्रयच्छसि। अपि न कुपिता त्वम्। वत्से, परित्यक्तनिजनिवासे चिरप्रवासोपतापितमनसि रौद्रवनवासकष्टप्रनष्टदेहवर्णलावण्ये त्वन्मुखालोचनजनितमु(सु)खमात्रावलम्बितजीविते दीनदृशि परिजने मादृशि किं करोषि रोषम्। किमहिताहं ते। किमन्योऽस्ति कश्चिन्मम तव स्थाने। किं द्वेषेण निष्ठुरं त्वां तर्जयामि। किं प्रातिकूल्येन विचरन्तीमितस्ततो निवारयामि। प्रस्थानसमये सबहुमानमाहूय त्वदीयपित्रा वारंवारमभ्यर्थिताहम्—'एषा **मलयसुन्दरी** निमेषमपि न त्वयोपेक्षितव्या, रक्षितव्या च सर्वोपद्रवेभ्यः शरीरमिव मदीयमत्यादरेण'। तेनैष मे प्रयत्नः। अन्यथा किमहमेवं त्वां नियन्त्रयामि। सर्वथा यथासुखमास्स्व। न त्वामितःप्रभृति दुःखे स्थापयिष्यामि' इति तस्याः श्रवणदुःखदायिनः खेदप्रलापाननिच्छतीव श्रावयितुमपजहार चेतनां मे मूर्च्छा।

ततोऽहं कियत्यापि वेलया नष्टनिःशेषविषवेगनिद्रा मनसि मुक्ता वपुषि कवलितातिबलवता जाड्येन कण्टकितसर्वाङ्गलेखा **'तरङ्गलेखे,**

किमित्यकाण्डे कमण्डलुजलेन मां सिञ्चसि । स्वस्थचित्ताहमधुना । दूरमुपसृतो मे संतापः' इति गद्गदाक्षरं गदन्ती चक्षुरुदमीलयम् । अपश्यं च दिव्यदारवप्रासादकाभ्यन्तरस्थमार्द्रचन्दनप्रवालकल्पितोपधाने मृणालकन्दलिनि नलिनीपत्रसंस्तरे निषण्णं यथावस्थितसरलसर्वावयव-मुत्तानशयमतिशयमृदुस्पर्शेन पृथुना स्वा(श्वा)सहार्येण पट्टांशुकप्रावरणेन चरणावधिप्रच्छादितमच्छशिशिरेण निपतता समन्ततस्तन्तुजालविवरैर्वारिपूरेणोपरिष्टादवष्टभ्यमानमेकाकिनमात्मानम् । उत्पन्नविस्मया च 'कस्येदं दारुभवनम्, केन वाहमिह निक्षिप्ता' इति चिन्तयन्ती मुहूर्तमतिष्ठम् । अवलोकयितुकामा च तन्निवासिनं जनमुत्थाय शयनादासन्नदृष्टेन सोपानसंक्रमेण चकितचकितोपरितनीं भूमिमध्यरोहम् । तत्राप्यदृष्टमानुषप्रचारा गवाक्षमधिरुह्याग्रतो दत्तचक्षुरद्राक्षमस्यैव रसातलगम्भीरवारेरदृष्टपाराग्व्यस्य दिव्यसरसः क्षीरसागरस्येव मन्दरमुदरभागे मन्दिरम् ।

तत्प्लवमानमवलोक्य चोपजातविस्मया मनस्यकरवम्—'हन्त, कः प्रदेश एषः । न तदिह तपोवनम् । न तन्निवासी तापसजनः । न सा गवलशिखिगलश्यामलया मलयगिरिमूलवनमालया समन्ततो मालिता लवणजलराशिवेला । न तत्र स्थिताहम् । न सा मत्पार्श्ववर्तिनी तरङ्गलेखा । सर्वमिदमन्यत्र विज्ञायते किमिति । अथवा ज्ञातमेव । तथा तथोपजनितैः पुरा मे मानसैः शारीरैश्च दुःखनिवहैरजातपरितोषो विधिरेष विविधं विजृम्भते । न जाने कियन्मयाद्यापि दुष्कृतस्य फलमुपभोक्तव्यम्, केषु देशान्तरेषु गन्तव्यम्, कान्यवस्थान्तराण्यनुभवितव्यानि, किं कालावधिर्बन्धुजनवियोगो विषोढव्यः । मरणमपि पापकारिण्या न संपद्यते । तथा हि—पूरितसप्तपातालमुदधिजलमपि

नङ्गलं जातम्। प्राणनाशाय निबिडमाहितः कण्ठदेशे पाशोऽपि पुष्पमाला संवृत्ता। नितान्तकटुकिंपाकफलरसोऽपि रसायनत्वेन परिणतः। कृतमतिक्रान्तवस्तुचिन्तया। यावदिह स्थिता दैत्यस्य वा यातुधानस्य वान्यस्य वा कस्यापि दुष्टात्मनो दृष्टिगोचरे न पतामि, तावदिह तीराश्रमनिवासिमुनिपरम्परास्नानपुण्यीकृतपयसि दिव्ये महासरसि शरीरमुत्सृजामि। येन जन्मान्तरेऽपीदृशस्य प्रियवियोगदुःखस्य भाजनं न भवामि' इति कृतमरणनिश्चया तेनाञ्चलगलज्जलबिन्दुना दिव्यांशुकपटेन स्तनतटावरणाय गात्रिकां बद्धुमारब्धवती।

दृष्टवती च तस्यैकदेशे दृढतरग्रन्थिसंयतमतिपृथुलताडीपत्रसंचारितसुरेखाक्षरं लेखमेकम्। उदकभिन्नं च तं सयत्नमुद्वेष्ट्य कौतुकेन स्वैरं स्वैरमवधारितवती—'स्वस्ति। महाराजाधिराजचन्द्रकेतुचरणारविन्दमधुकरो युवराजसमरकेतुः काञ्च्यां सकलदक्षिणक्षोणिपालशिखरमहाराजकुसुमशेखरवंशकुमुदाकरशशिकलां मलयसुन्दरीं सप्रेमबहुमानमात्मीयदेहारोग्यवार्तया सुखयति। स्मरामि तस्यातिचारुचन्द्रोद्गतेरमृतोत्पत्तिदिवसस्येव परमानन्दहेतोरनङ्गोत्सवदिनप्रदोषस्य, यत्र गाढविरहदुःखार्तमानसेन मया जन्मान्तरेऽप्यसंभावितपुनर्दर्शना कृशोदरि, विनैव यत्नमवलोकितासि। कृतार्थं मे करतलद्वन्द्वम्, येन मन्दं मन्दमारब्धसंवाहनेन लब्धः स्वेच्छया तुलिततापाहतशिरीषकुसुमशेखरसौकुमार्यो विलासिनि, विपाशितायास्तवाङ्गसंस्पर्शः। तत्तत्कालनिर्जनं नरेन्द्रभवनोद्यानम्, सा कृत्तकरिदन्तावदाता प्रदोषचन्द्रिका, स सूक्ष्मशितसुकुमारवालुकः कुमुददीर्घिकातीरभागः, सा त्वदासनपरिग्रहगुरुकृते कमलिनीपलाशशयनैकदेशे स्थितिः, तानि च ममाम्भोधिनिर्गमावगमाय कथमपि कृतप्रश्नायाः प्रीतिपिशुनितानि ते नितान्त-

मल्पाक्षराणि लज्जाजल्पितानि मृतस्यापि मे न स्मृतेरपयास्यन्ति । किं करोमि । दूरदेशान्तरस्थितिस्त्वन्मुखावलोकनसुखप्रतिबन्धिनी जाता । चेतसा तु सर्वदा समीपेऽहम् । अत्रैव गाढकण्ठग्रहपुरःसरं बन्धुसुन्दरी विज्ञाप्यते ।

श्रुत्वात्यद्भुतमस्मदाजिललितं वैतलिकेभ्यः प्रगे
प्रीतात्काञ्चिनराधिपात्तव सखीं प्राप्यादरप्रार्थिताम् ।
वोढास्मीति मनोरथः स्थगयतो वाद्यं तदा योऽभव-
न्नाधन्यस्य जितेऽपि विद्विषि स मे दैवेन संपादितः ॥

तथापि देव्याः शरीरे दृढमप्रमत्तया भवितव्यम्' इति । स च लेखः सलिललवप्लुताक्षरतया स्थानस्थानेषु दुर्विबोधिभावार्थोऽपि भावितः सर्वोऽपि । उत्पत्तिस्थानं तु सर्वादरव्यापृतदृशापि न मयाभ्यूहितं तस्य ।

ततोऽहं दुःखभागिनी तस्य लेखस्य दर्शनेन पुनरुपजातजीविताभिलाषा 'जीवति प्रियो मम' इति सानन्दा, 'स्मरति पूर्वमनुभूतानां मत्समागमसुखानाम्' इति साश्रुपाता, 'प्रनष्टजीवितानां दुर्घटं पुनः प्राणनम्' इति निराशा, 'ह्यस्तनतिथिन्यासलाञ्छिता लेखोत्पत्तिः' इति सविस्मया, 'मत्खलीकरणाय माया न कस्यापि केली किलस्येयम्' इति सवितर्का, 'स्वयमजातानुभवस्य दुरभिलेखा वचनपद्धतिरसौ' इति सावष्टम्भा, 'दुर्लभः पुनरीदृशे पुण्यसरसि शरीरत्यागः' इति मरणोन्मुखी, 'महती प्रियस्य मत्प्राणपरिरक्षणविधौ बन्धुसुन्दरीं प्रति प्रार्थना' इति सविलम्बा, इत्यनेकविकल्पकवलितमनोवृत्तिरात्मनः कर्तव्यमालोचयन्ती तिष्ठामि यावत्, तावदनिलोल्लासिताभिः कल्लोलततिभिस्ताड्यमानं क्षीरमगमज्जवेन तद्दारुभवनम् । ततोऽहमवतीर्य तस्मादत्र दिव्ये सरसि विहितस्नाना कृताभिमतदेवतार्चनक्रिया तटासन्नवर्तिनस्तरोरेकस्य मूलमाश्रित्य चिन्तानिःसहशरीरा समुपाविशम् ।

अत्रान्तरे चतुरोदारवेषा यदृच्छया सरस्तटलताखण्डेषु कुसुमान्यवचिन्वती देवतार्चननिमित्तमागता तमुद्देशमेका द्विंत्रिपरिचारिकापरिवारा स्तोकपरिणतप्रौढयौवना योषित्। ऊर्ध्वस्थितैव च सा समुपजातप्रत्यभिज्ञेव निश्चलतारकेण चक्षुषा सुचिरमवलोक्य मामुद्धुरस्वरेण ध्वनिना ससंभ्रमा समभाषत—'वत्से मलयसुन्दरि, कुतस्त्वम्। कथमेकाकिनी पतिता शून्यायामिहाटव्याम्। केनेयमीदृशी तव संपादितावस्था। हा, हतोऽसौ येन दुर्मेधसा तान्यपनीय चिरंतनानि सिचयरत्नानि कल्पतरुलतायामिव सर्पकञ्चुकशल्कानि वल्कलान्यमूनि तव तनौ समारोपितानि। उत्तिष्ठ पुत्रि, परिष्वजस्व क्षणमात्रं जातमित्रभावं जनमिमम्' इति ब्रुवाणैव सा स्वयमुत्थाप्य मामशिथिलव्यापारितभुजद्वया कण्ठे गृहीतवती।

अहं तु तत्कालदुर्लभेन प्रकटितान्तःप्रीतिना तस्यास्तेन वचनविन्यासेन पूर्वपरिचयप्रकाशनपुरःसरेणेव समाश्लेषेण कृतसमास्वा(श्वा)सा परां निर्वृतिमगच्छम्। आदरव्यापारितमतिश्च 'क्व दृष्टा मया, क्व दृष्टा मयेयम्' इति चिन्तयन्ती चित्रलेखेयमिति तां परिज्ञातवती।

अत्रान्तरे पूरितवनान्तरालो नातिदूरे ससंभ्रमोल्लासितकनकदण्डोड्डामरकराणामग्रतः प्रधावन्तीनां वेत्रधारीणामुच्चचार मिश्रीभूतः श्रवणहारिणा चारणबन्धुजनजयव्याहारेण दूरनिर्हारी समुत्सारणध्वनिः।

अथातिमन्थरच्छत्रगतिसूचितविलासमन्दपदविन्यासा, विधूयमानधवलचामरा, सविभ्रमोल्लासितभुजलताभिरुभयतो वारललनाभिरनादरसंदानितदरास्या(श्या)नस्नानार्द्रकेशपाशा, क्वचिदप्यमुक्तश्रिया विजित्य वदनारविन्देन बन्दीकृतमिन्दुमिव चन्दनतिलकबिन्दुमलकिना ललाट-

१ 'द्वित्र' इति स्यात्.

फलकेनोद्वहन्ती धृतासिफलकाभिः परिवृता, समन्ततः साधितमहाप्रभावविद्याविवृद्धपौरुषावलेपाभिरनेकशतसंख्याभिरङ्गरक्षाधिकारनियुक्ताभिरङ्गनाभिरासन्नचारिणा समारब्धसेवोचितचटुक्रियेण मुहुर्मार्गवर्तिनीर्वनलता विवर्तयता मुहुः श्वासपरिमलाकृष्टमलिपटलमुत्सारयता मुहुः कपोलतललुलितमवतंसपल्लवमुल्लासयता मुहुर्नूपुरस्वनानुसारिणः सरःकलहंसकानुत्रासयता मुहुर्लग्नमवनीरजश्चरणयोरुत्तरीयाञ्चलेन प्रणुदता खेचरेन्द्रनारीजनेनानुगम्यमाना, तीरस्थितं तत्प्रासादरत्नमवलोकयितुमुत्तरात्सरस्तीरपुलिनादखिलदक्षिणश्रेणीपतेर्विद्याधरचक्रवर्तिनश्चक्रसेनस्य महिषी पत्रलेखाभिधाना पादचारेण तत्रैवागच्छत् । ऊर्ध्वस्थितैव च सा विलोक्य तदग्रतोभूताभिः 'इदं सुन्दरम्, इदं सुन्दरम्, इह दीयतां दृष्टिः, इह दीयतां दृष्टिः' इति ससंभ्रमाभिः प्रकाश्यमानविभागं प्रधानसहचरीभिरतिचिरमुत्पन्नविस्मया परिजनमपृच्छत्—'अपि नाम ज्ञायते कस्येदम्' इति ।

अथ समीपस्थिता सकलकोशागारसंरक्षणाधिकारनियुक्ता मुक्तावली नाम पालिका व्याहरत्—'देवि, तत्त्वतो न ज्ञायते । युक्त्या तु निश्चितमिदम् । यस्य मार्गणाय पूर्वेद्युरितः सुवेलपर्वतं गतो गन्धर्वकः, तदेव तेनेदं हारिचन्दनं विमानमानीतम् । यतोऽत्र यद्वस्त्रयुगलमाभरणं च भर्तृदारिकया गच्छतस्तस्य प्रसादीकृतं तदिदमविकलमास्ते' इत्युदीर्य तूष्णीकाभवत् । सा तु तन्निपुणमवलोक्य प्रत्यभिज्ञाय सशोकेन निश्चललोचना स्थित्वा मुहूर्तमवनतमुखी सखेदमवदत्—'भद्रे, यदाह भवती तथैव सर्वम् । केवलमिदं न ज्ञायते स गन्धर्वको वराकः कामवस्थां प्राप्तः' इत्यभिदधाना समागत्य चित्रलेखायाः संनिधावभवत् । सकौतुकानुरागमर्पितेक्षणा च मयि स्थित्वा मुहूर्तमीषद्विव-

र्तितमुखी 'सखि, केयमत्र भवती, क वा जातपरिचया भवत्या' इति नीचैस्तामपृच्छत् । सा तु पृष्टमात्रैव तया समुत्सृष्टदीर्घनिश्वासा प्रवर्तमानमनवरतमक्ष्णोरभीक्ष्णमुत्तरीयाञ्चलेन प्रणुदती बाष्पवेगं सोद्वेगमवदत्—'देवि, किमहमावेदयामि मन्दभाग्या । दैवमत्र प्रष्टव्यम्, येनासौ संभ्रमकारिणा निरस्तकरुणेन देहमात्रेणैव भिन्ना तवापि प्रश्नविषयतां नीता । प्रापिता चेयमुपजातपरिचयलोकशोकोद्रेकहेतुमेकपद एवातिकष्टमीदृशमवस्थाविशेषम् । शृणु कृतावधाना । श्रावयामि येयं यत्र चानया सह पूर्वमुपजातः परिचयः । इदं हि तावद्विदितमेव । प्रियंवदाया यथा सहोदरी रूपसौन्दर्यखण्डिताखिलखेचरीचक्रचारुत्वगर्वा **गन्धर्वदत्ता** नाम मे स्वसा यवीयस्यासीत्, सा दशवर्षदेशीया सुवेलपर्वते पितुर्गृहमधिवसन्ती वैताढ्यगिरिनिवासिना मातामहेन राजकन्योचिताभिः सहकलाभिरकाल एव परिणतं लास्यविद्यारहस्यमवलोकयितुमुत्पन्नकौतुकेनादरान्नीता स्वनगरीं **वैजयन्तीम्** । तस्यां पुरि कदाचिदभ्यमित्रीणे राजनि रजन्यामुपेत्य सारकरितुरगपत्तिपरिवृतेन जितशत्रुनाम्ना शत्रुसामन्तेन पातितः प्रतिभवनमुद्भूतभीतवनिताजनाक्रन्दो महानवस्कन्दः । तेन निर्दयव्यापारितनिशितशस्त्रदुर्वारेण सर्वतः प्रसारता विरचितव्यूहवीरपुरुषदुःखप्रवेशेन क्षणादक्रियत कांदिशीको नगरलोकः ।

ततः स्तोककालसूत्रितायोधनेषु निधनमुपगतेषु प्रधानपुरुषेषु, प्रहारविकलकाययष्टिषु यमातिथिभूतेषु यामिकेषु, अदृष्टरिपुपराजयोपपत्तिष्वपसृतेषु पत्तिषु, गृह्यमाणमन्दुरावाजिनि विदार्यमाणदुर्मदद्विपे विलुप्यमानकोशकलशे व्याकुलीभूते समन्ताद्राजकुले, **समरकेलि**नामान्तर्वंसि(शि)कः प्रविश्य कन्यान्तःपुरमुपजातकरुणस्त्रासतरलित-

नयनतारकाम् 'हा तात, हा तात' इति विक्लवं व्याहरन्तीं गन्धर्वदत्ता-मुत्क्षिप्य गगनमुदपतत् । प्रस्थितश्च निमित्तीकृत्य तत्पितुः पस्त्यम-गस्त्यचरितेनाघनाघनायुधप्रहारच्छिन्नकायोऽतिकृच्छ्रेण दक्षिणजलराशि-वेलावनाश्रयं प्रशान्तवैरं नाम तापसाश्रमं प्रापत् । अवतीर्णमात्रश्च पत्रलतरुनिकुञ्जे कूजत्समदकलकण्ठे तदुपकण्ठनिम्नगारोधस्यधिकाध्व-संधुक्षितक्षतव्यथाव्याकुलस्तत्कालसंनिहितस्य कुलपतेः समर्प्य तामस्पी-भूतशोकः परलोकमगमत् । आघ्राते च तस्मिन्दीर्घनिद्रया दुःखविद्राण-वदनाममृतनिष्यन्दसुन्दरैराश्वासनालापैरपगतविषादां विधाय तां कुल-पतिस्तपोवनमनयत् । अवर्धयच्चापत्यबुद्ध्या बद्धपक्षपातः । प्रतिदिवस-मासादितोद्दामयौवनां च कदाचिद्द्रष्टुमागताय गोप्त्रे सकलदक्षिणापथस्य पार्थिवाय ख्यातमहसे कुसुमशेखराभिख्याय प्रायच्छत ।

अथ स राजा समुपजातहर्षस्तदासादनेन कृतकृत्यमात्मानं मन्य-मानस्तत्रैवाश्रमे तामुपयम्य सम्यग्विहितेन विवाहविधिना गन्धर्वेण[1] गर्वोद्धुरः स्वनगरीं काञ्चीमागच्छत् । अकरोच्च तस्याः कनकवेत्रच्छत्र-चामरादिराज्यालंकारसूचितमहोदयं महादेवीपट्टबन्धम् । उद्वहतानुराग-[2]मज्ञातपरस्परवियोगं भोगसुखमुपभुञ्जानयोश्च तयोरतिक्रान्तेषु त्रिचतुरेषु संवत्सरेषु रूपनिर्भर्त्सितरतिरेकैवात्मजा जाता । मलयपर्वतः प्राप्तिहेतु-रस्याः पारम्पर्येणेति पर्यालोच्य पित्रा तस्यैव भूधरपतेरभिधानेन लाञ्छितं मलयसुन्दरीति ललितं कृतं नाम । सेयं क्रमप्राप्तयौवना प्रकर्षमाग-तेन गीतनृत्यादिकलाकौशलेन देशान्तरेषु लब्धख्यातिरपहृत्य खेचरैः पञ्चशैलकाख्यमन्तरद्वीपमुदधिर्दक्षिणस्य[3] क्षणदामुखे प्रसुप्तैव नीता ।

१. 'गान्धर्वेण' इति स्यात्. २. 'उद्वहतोरनुराग' इति स्यात्. ३. 'उदधेः' इति स्यात्.

तत्र च त्रिदशनिष्पादितस्य मणिशिलाप्रासादस्य पुरतः प्रत्यग्ररचिते विचित्रवस्तुविन्यासचारौ महति चामीकरस्तम्भमण्डपे कृतावस्थाना जगत्रयैकनाथस्य भगवतो महावीरजिनवरस्य (?) निर्वाणदिवसात्प्रभृति विद्याधैरैरारब्धमङ्गलसा¹त्रामवेक्षितुं पक्षावधिं यात्रामायातया कार्तिकमासपौर्णमासीनिशीथे मया दृष्टा। निशम्य चासाविमं चित्रलेखालापमुपजातपूर्ववृत्तान्तस्मृतिरमन्दशोकानन्दमन्तःकरणमुद्वहन्ती सतर्षमाकृष्य मां पुनः पुनर्गाढमाश्लिक्षत्। अवलम्ब्य च करेण प्रचलिता पृच्छती प्रबन्धेन स्थिं²तिवृत्तान्तमम्बायाः परिवृता नभश्चरनितम्बिनीजनेन जिनायतनमिदमागच्छत्। आरब्धदेवार्चनावस्थित्वा चिरमावासगमनाय मां पुनः पुनरतत्वरत्। अहं तु दर्शनेनास्य दिव्यदेवतायतनस्य विरतगमनाभिलाषा तिष्ठासुः 'अम्ब, न युज्यते ममैतदवस्थायाः स्वजनेन सह संवसितुम्। इच्छामि चैतत्कतिपयान्यहानि मुनिकन्यकाव्रतं पालयितुम्। इदमेव मे वनं भवनमस्तु' इत्यवदम्।

सा तु निर्भरस्नेहमोहिता विहातुमनिच्छती तदेव मां पुनरवोचत्। यदा तु निश्चलनिश्चया 'न शक्यते नेतुम्' इति मां निरचिनोत्, तदास्य तिसृभिर्भूमिकाभिरुपरचितनिर्माणस्य मणिशिलामठस्य रम्यतरमध्यां मध्यभूमिकामाश्रयाय मे विश्राणितवती। वितीर्य च शरीरपरिचरणाय चतुरिकाभिधामिमामन्तःपुरविलासिनीमुपनीतकतिपयपुण्यार्जनोपकरणा सरस्तीरदृष्टं तदेवारुह्य हरिचन्दनविमानमन्तःपुरविहारिणा राजपरिजनेन परिगता गता स्वावासम्।

अहं तु प्रत्यग्रलिपिना दिव्यपटपल्लवग्रन्थिलेखेन संदेहितदयितजीविता विमुच्य जीवितपरित्यागबुद्धिमत्रैव निरपत्रपा स्थिता। दर्शना-

१. 'स्नाना' इति स्यात्. २. 'स्मृति' इति भवेत्.

शया च तस्य गुणनिधिर्द्विगुणीकृततपश्चरणा निश्चलनिरुद्धचेतोवृत्तिरधरीकृतेन्द्रियग्रामायत्तिरग्रत एव दृष्टेऽस्मिन्नदृष्टपाराख्ये दिव्यसरसि प्रत्युषस्येव निर्वर्तितस्नाना वितीर्णसंध्यादेवतार्घाञ्जलिरागत्य सिद्धायतनमेतत्स्वहस्तनिर्वर्तिताभिषेका सुरभिकिंजल्कैरकल्कमानसमभ्यर्च्य भगवन्तमादितीर्थंकरमभिनवैः कनकवारिजैरन्ते च पूजाकर्मणः प्रणम्य पुरतो नि²विष्टास्य विष्टपत्रयपतेः प्रशान्तवैराश्रमनिवासपरिचिताभिर्वृद्धतापसीभिरुपदिष्टानि प्रत्यहं जपन्ती प्रियसमागममन्त्राक्षराणि वृक्षवल्कलनिवसनसमारब्धोपवासकृच्छ्रचान्द्रायणादिविविधव्रतविधिरध्वश्रमेण क्षुधा च क्षीणसामर्थ्यं तीर्थवन्दनार्थमागतमतिथिलोकं शाकफलमूलादिभिः सादरमुपचरन्ती त³दुपवीतशेषेण वन्यान्नेन विरलविरलमात्मदेहं वर्तयन्ती निशासु च स्थण्डिलनिषण्णा परिगता परमवैराग्येण प्रदीप्तमिव सर्वतो दुःखदहनैर्जीवलोकमालोकयन्ती विगलितानुबन्धा बन्धुजनदर्शने जातविद्वेषा विषयसुखोपभोगे भग्नाभिलाषा जीवितव्ये व्यपेतस्पृहा सुहृत्संप्रयोगे विप्रयोगावसानतां संयोगानामवश्यमनुभाव्यतामनुभवनीयानामशक्यप्रतीकारतां कर्मशक्तेर्दुःखदानव्यसनितां स्नेहस्य निःसारतां संसारस्य विरसितां विलासानामनिमित्तभङ्गुरतां भागधेयानामविधेयतां विधेर्विचित्रतां कालपरिणतेरशरणतां प्राणिसार्थस्य पुण्यभागितामसज्जनानां धन्यतां धर्मनिरतानामन्तरान्तरा भावयन्ती क्षपयामि सांप्रतमनवलोकिता कृतान्तेन कालमिति निजवृत्तान्तमावेद्य तूष्णीकाभवत् ।

अहं तु तेनानवसानोद्वेगकारिणा चरितेन तस्यास्तुषारानिलेनेव नलिनाकरः परं म्लानिमगमम् । अकरवं च चेतसि—'अहो निरवधि-

१. आयत्तिर्वशित्वम्. २. 'निविश्यास्य' इति स्यात्. ३. 'तदुपनीतशेषेण' इति पाठे 'तद्गृहीतशेषेण' इति व्याख्या भवेत्.

प्रचारो विधिः नास्त्यगोचरः पुराकृतकर्मणाम्। अशक्यप्रतीकारा कृतान्तशक्तिः। अव्याहता गतिः सर्वत्र भवितव्यतायाः। येन भुवनत्रयख्यातभूपतिकुलोद्भवानामसदृशानुभावशुभलक्षणाश्लिष्टवपुषामनुसृतनीतिमार्गाणामुपशमादिगुणगणजुषामीदृशानामप्याकृतिविशेषाणामेवंविधान्यापतन्ति व्यसनानि' इति कृतविमर्शः स्थित्वा क्षणमवोचम्—'**मलयसुन्दरि,** किमर्थमपगतसकलदोषानुसङ्गमेवमेवात्मानमवसादयसि। मा विषीद। मा खेदमुद्वह। मा कृतान्तमाक्रोश। मा कर्मणां देहि दोषम्। इह हि संसारसद्मनि समासादितावतारः स्वभावविमलोऽपि जन्तुरेकत्रैव जन्मनि दशावशेन दीपाङ्कुर इवानेकानि रूपान्तराण्यनुभवति। तथा हि—विपुलेश्वरकुलोत्पन्नोऽपि नाप्नोति निरपायानि विषयास्वादसौख्यानि। असंख्यपरिवारोऽपि क्षणेनैकाकितां याति। निःप्रत्याशतां गतोऽपि सर्वलोकातिगमकस्माद्वस्तु लभते। लब्धाभिमतलाभोऽपि झगिति वियुज्यते तेन। जाताप्रतिविधेयविरहोऽपि भूयः समागच्छति तेनाभिवाञ्छितेन। अनिरामयशरीरोऽपि मरणावहां विपदमासादयति। लब्ध्वापि परमामकल्पतां कल्याणपरम्परामधिगच्छति। तदेतदमृतविषभूतं वस्तुरूपमधिगम्य कस्माद्विषादिनी भवसि। कथय दिव्येषु वा मानुषेषु वा यस्यैकयैवावस्थया व्यतीतः कालः। यश्चातिपुण्यवानपि प्रागनुभूय सौख्यानि पश्चान्न दुःखं प्राप्तः। सर्वथा धैर्यमाधेहि। धारय परममन्तःपरितोषम्। उपगतः संप्रति प्रतिकूलचारी विषमयः स ते विषमदशाविपाकः। सिद्धा शून्यसिद्धायतनसेवा। समाप्तिमुपगतमाप्तोपदिष्टं मन्त्रजपकर्म। फलोन्मुखीभूतो विरसवनफलाहारः। स्फुरितमाजन्म पतिव्रताव्रतेन। तिष्ठति स ते दीर्घायुरघटितक्लेशो जीवितेशः। पृच्छ प्रथमदर्शनात्परेण वृत्तां मामेव तद्वार्तां[म्]। 'यथा

दक्षिणसमुद्रान्तरद्वीपे दिव्यजिनगृहप्राकारशिखरस्थिता नात्यवस्थितस्य दृष्टिपथमागता, यथा काञ्चीनगरावासितेन निर्गत्य नृपगृहोपवनमध्यादर्धरात्रसमये सज्जितसमग्रात्मसैन्येन संग्रामः कृतस्तेन, यथा च विकलीकृतेनाप्यरातिना शायितः क्षणमसौ दीर्घनिद्रया, यादृशी च सा दीर्घनिद्रानुभूता तेन, यत्र च गतेन देशान्तरगतामनुस्मृत्य भवतीं सुचिरमासितं विषादपरेण, यस्य च करे स्वहस्तसंचारितलिपिः स ते स्वकुशलोदन्तलेखः सविस्तरो दत्तः' इत्यादि सर्वं वेद्मि । केवलम् 'अनासन्नदेशस्थेन कथमिह स्थितायास्तेन सह समागमो भावी भवत्याः' इत्येतदेवाविज्ञातमास्ते इत्यभिहिता । तेन सा युगपदुत्तीर्णदुःखभारलघुशरीरा समुत्पत्य सुरलोकमिव गता परां निर्वृत्तिं प्रापत् । अभिमतसमागमोत्सुकायाश्च तस्याः सर्वदा दूरीकृतः शनैः शनैरागत्य लब्धावसर इव समीपमुपससर्प कन्दर्पः । समागतानङ्गदर्शनाय गतेन्दुसंक्रमितचन्द्रिकेव द्विगुणमुल्ललास लावण्यच्छाया । कान्तिचन्द्रिकावतारभीतातपपरामृष्टमिव हृष्टलोचनपत्रभवद्वदनशतपत्रम् । अञ्जनरजोरागमिव निधित्सुरक्षालयत्तरङ्गायतापाङ्गमक्षियुगलम् । आनन्दबाष्पस्तनावरणवल्कलमिव त्याजयितुमुदगच्छदच्छिन्नसंततिः समन्ततः प्रकीर्णकनकचूर्णाभिरामो रोमभेदः । प्रथमसंगमप्रथितसाध्वसानीव समकम्पन्त संततस्वेदानि सर्वाङ्गानि । प्रस्तुतप्रहर्षसंवरणा च सा तत्क्षणान्तःप्रविष्टरतिचरणनूपुररणितसंभिन्नेनेव गद्गदेन स्वरेण स्वैरमगदत्—'कुमार, किं तेन तव समागमप्रकारेण विज्ञातेन । तिष्ठतु स तावत् । सुचिरमनुभूतानि मया तज्जनितानि फलानि । अनेनैव निखिलजनमानसावासदुर्ललितस्य मकरकेतोरिवास्य त्वत्प्रसादादवगतेन पुनरुज्जीवनेन रतिरिव कृतार्थाहमुपजाता । समासादितं समस्तमभिमतम् । आस्तां

दूर एवासौ । सुचिरमुपभुङ्क्षामतिप्राज्यानि जीवलोकसुखानि । अहं पुनरिहैव कथमपि पुण्ययोगादासादिते दिव्यभूभृति कृतव्रतनियमोपवासा तरुत्वग्वसनधारिणी कन्दफलमूलाशना त्रिकालमर्चयन्ती देवमेवमेवातिवाहयिष्यामि जन्म । गता मे स्वविषया सर्वापि चिन्ता । केवलमिदं क्षिणोति चेतः, स ते निरन्तरप्रसादललितः कदाचिदप्यदृष्टविरहः शिबिरवर्ती प्रणयिलोकः क्षणमात्रपरिचितस्य वज्रपाषाणपरुषमनसो मादृशस्यापि निसर्गनिःस्नेहस्य वनवासिवर्गस्य परमप्रीतिदायिना त्वदीयदर्शनेन सहसैव दूरीकृतः कां दशामनुभविष्यति । कथं च त्वदेकावलम्बनः स ते गुरुजनः क्रमेणाकर्ण्य कष्टामिमां दुष्टवारणापहारवार्तामार्तहृदयोऽपि विघटमानं सुकुमारमात्महृदयं धारयिष्यति' इति भाषिणीं विहस्य सावज्ञमिव तां प्रत्यवोचम्—'मलयसुन्दरि, सुदूरमपि विषण्णेन धीमता तदेव चिन्त्यं वस्तु यदुपायसाध्यम् । अनेन तु नितान्तनिष्फलारम्भेण चिरमपि ध्यातेन केवलं क्लेश एव हृदयस्य' । साध्याहरत्[1]—'कुमार, किमशक्यमस्य । लेखप्रदानसाध्यमेतत्ते प्रयोजनम् । अहमपि यावदध्यवस्यामि । किं तु विधिवशादवसरेऽत्र पक्षिमात्रोऽपि निकटे नास्ति कश्चिन्नभश्चरो यस्त्वदीयवृत्तान्तमावेदयेत्' इति वदन्त्यामेव तस्यामनास्या(श्या)नशैवलश्यामपक्षतिरक्षुद्रविद्रुमारुणेन तत्क्षणोदितादर्कबिम्बादिवोत्कीर्णेन कुटिलकोटिना चञ्चुपुटेन प्रसूत[2]मरकतांशुसंतान इव चेतनो जात्यपद्मरागत्रि[3]वर्णराजिना द्विजातिशब्देनेवोद्भासितः । कण्ठभागेन भयवशोद्भ्रान्तलोचनाभिः स्वभाषया वार्यमाणोऽप्यकृशमाक्रोशन्तीभिः शुकीभिर्निकटचारिणो नीलपाटला-

१. 'सा व्याहरत्' इति स्यात्. २. प्रसूत उत्पादितः. ३. त्रयो वर्णा ब्राह्मणक्षत्रियवैश्याः, नीलकृष्णरक्ताश्च.

त्सरक्तोत्पलादिव कमलिनीखण्डादेत्य निजयूथान्मसृणमसृणोत्क्षिप्तचरणो रुचिरमूर्तिरेकः शुकशकुनिरविशङ्कितमवादीत्—'महाभागे किमित्यभाग्येव खेदमुद्वहस्येवम्। एष प्राप्तः पक्षिरूपी नभश्चरोऽहम्। आज्ञापय मया यत्कर्तव्यम्' इत्यभिहिते तेन सभयविस्मया मलयसुन्दरी विहस्य चक्षुषा मे वदनमद्राक्षीत्।

अहं पुनरविस्मितः सादरमवेक्ष्य तम् 'नैष पक्षिमात्रः, विशिष्टजातिः कश्चिदयम्' इति विचिन्त्य विहितनिश्चलावस्थानस्याग्रतो गैरिकरसेन किंचिदापाण्डुरत्वचि समासन्नताडीतरुदले कराङ्गुलिनखाग्रलेखन्या सुरेखाक्षरं लिखित्वा लेखमक्षिपम्। अवोचं च तम्—'अहो महात्म[न्,] निसर्गेणैव पक्षपातिनः [1]प्रसन्नमुखराराद्युते(?)र्विनयवतश्च भवतः पुरस्तादतिशयप्रपञ्चितोपचारमुच्चार्यमाणं वचनमबुधत्वमेवावबोधयति। अतो विवक्षितमेव निजकार्यमाचक्षे—'इतः क्षोणीधरारण्यात्ककुभि दक्षिणस्यामनुपलक्षिताथ मानं कियन्तमपि गत्वा भूमिभागमगणितश्रमेण कल्याणभागिना कामरूपाख्यमण्डलख्यातनामानमाश्र(श्रि)त्य लौहित्यनदमावासितबलस्य मत्सेनाधिपतेः कमलगुप्तस्य गुप्तेन भूत्वा सत्वरमयं प्रापणीयो लेखः'। स तु 'यदादिशसि' इत्युदीर्य दर्शितादरो दूरव्यावृत्तवदनकोटिना चञ्चुपुटेन लेखमादाय तमुदङ्मुखः समुदपतत्।

गते च तत्र त्रिकूटाधिष्ठितां काष्ठामधिगतप्रहर्षविस्मयः सस्मितमवादिषम्—'मलयसुन्दरि, किमेष चिरपरिचितः शुकशकुन्तिर्येन ते वचनमुच्चरितमात्रमेवावधार्य बुद्धिमानिव पुमानचकितमनाः समागत्य

---

1. 'प्रसन्नमुखराड्(ज)द्युतेः' इति पाठे तु 'प्रसन्नस्य मुखरूपिणो राज(ज्ञ)श्चन्द्रस्य द्युतिर्यस्य' इति व्याख्या संभवति.

निकटोद्देशमादेशमुपयाचितवान्' इति । प्रहृष्टेन परिपृष्टा मया विहस्य सा स्वैरमवनतमुखी 'कुमार, सर्वदा परित्यक्तपरविषयचिन्तायाः सततमात्मकर्मसु निविष्टदृष्टेः पर्वतारण्य इह सदृशरूपविज्ञानैर्मानुषैरपि समं न मे परिचयः । किं पुनः पक्षिरूपैः । अपूर्वः कश्चिदयमागतः पतत्री' इत्यभिधाय विहितोर्ध्वलोकावलोकना सांध्यकृत्यनिर्वर्तनाय तस्माद्दीर्घिकातटशिलातलादुदतिष्ठत् ।

अत्रान्तरे नितान्तमुपजातकुतूहलो नीलबहलपक्षमापटलचञ्चुपुटमनुकर्तुमिव तस्य शुकविहङ्गस्याङ्गमुल्लासितहरितपत्रसंततिररुणतां निनाय निजमण्डलं चण्डभानुः । क्रकचकृत्तातिवृत्तरक्तचन्दनस्तम्भच्छेदच्छविना दिनकरबिम्बेन चुम्बितप्रान्तमञ्चलन्यस्तधातुमुद्रास्तबकमिवाम्बरमराजत । पुञ्जीभूय मूले युगपदतिवाहिततरुणतपनातपाः पुरस्तादुद्गतं ध्वान्तमनुगन्तुकामा इव प्रावर्तन्त पूर्वाभिमुखमखिलाः पादपच्छायाः । स्रंसमानसरलरविकरशिरासंततिः स्वस्थानचलितद्विजसमूहो विवर्णसंकुचितच्छविः प्राप्य परिणतिप्रकर्षमस्तोन्मुखो बभूव दिवसः । क्षतक्षपातमसि प्रकाशितजगन्निशान्ते शान्तिमुपगते दिवसदीपार्चिषि घृतोन्मेषशेषत्विषा तपनबिम्बेन परिगृहीता रक्तसूत्रवर्तिरिव पुरतः स्फुरितभास्वराङ्गारा वरुणदिशि गुञ्जारुणा संध्या व्यराजत । निरस्तघनरागेण तमसा बद्धमुकुलाः कान्तिमुभयथापि हरितां प्रापुरब्जिन्यः । सांध्यरागसंभेदारुणानि रविवियोगदलितरक्तारविन्दिनी हृदयरागानुरञ्जितानीव रेजुरदृष्टपारतीरोपान्तनीराणि । निम्नोन्नतविभागविश्रान्त-

१. अम्बरं वस्त्रम्, गगनं च. २. द्विजा दन्ताः, पक्षिणश्च. ३. आदित्यस्याङ्गारप्रतिभत्वम्. ४. हरितां दिशां कान्तिं संकुचिताः कमलिन्यः, (पक्षे) हरितां नीलाम्.

तिमिररक्तातपच्छेदा नूतनद्वीपिचर्मोच्छादितेव स(श)बला शिलोच्चय-क्षितिरलक्ष्यत । रणरणायमानषट्चरणमालावलयितचरणानि परस्परा-सङ्गशङ्कितानि यतियोगेन निगडितानीव ददृशिरे कमलदीर्घिकासु चक्रनाम्नां मिथुनानि । पुरस्तादस्तभूभृतः[1] प्रततवडवाग्नितापिते पतित-मपरार्णवस्नेहकटाहे निरूप्य तपनतपनीयमाषकमुदीरितकलकलैर्द्विजैरा-[2]कुलीकृतो नैनाजगाम[3] श्यामतां प्रदोषः[4] । कुसुमकोशक्रोडकूजच्चञ्चरीकाणि पत्रसंकोचविरलायमानघनविटपजालकानि निद्रालसनिलीननीडजाक्रा-न्तिलम्बलताशिखाग्राणि तनुनापि तमसा तिरोधीयन्त तमालतरुगह-नानि । प्रतिप्रसूनमासीनसकलोपवनमधुकर इव निरन्तरनिलीननील-[5]कण्ठकलकण्ठावगुण्ठित इव चकासामास मांसलीभूतकालिमा कानना-भोगः । क्षणेन च कठोरतरतां कलयता कलिकालेनेव कलुषात्मना तमस्तोमेन कवलितं सकलमपि भुवनमेकवर्णमभवत्[6] । दृष्टिविरहितेव सृष्टिरिन्द्रियाणामुदभाव्यत । रसातलोदरगता इवाज्ञायन्त ककुभः । समुद्रजलमग्नेव समदृश्यत मही । मुरारिजठरावासित इव व्यभाव्यत समग्रोऽपि भूतग्रामः । तारकादिभिर्दिग्विभागानां पुष्पपरिमलेन विटपिनां ध्वनिना तिरश्चां चरणसंचारेण वर्त्मनां व्यज्यत विशेषः । किं च—नक्तंचरकुलानां प्रचारः, खङ्गिनामूर्ध्वचरणावस्थितिः[7], उलूकानां चक्षुरा-लोकः, चक्रनाम्नामपनिद्रत्वमद्रावभवत् । अति भास्वरमणिप्रभोत्तम्भिता-काशमादिदेवायतनमपहाय सकलमपि विश्वमानशे तिमिरराशिः ।

एवं च विगलिते निशीथिन्याः प्रथमयामे निखिलमपि निर्माय सायंतनं नियमकर्म प्रणम्य दूरस्थमप्यादरेण गुरुजनमधिगतोदय-

१. भूभृद् राजा, गिरिश्च. २. द्विजाः पक्षिणः, विप्राश्च. ३. 'नन्वाज' स्यात्. ४. प्रकृष्टदोषश्च. ५. नीलकण्ठो मयूरः, कलकण्ठः पिकः. ६. म्लेच्छम्, नीलं च. ७. शरभपक्षिणाम्.

मृगाङ्कमण्डलक्षालिततमःपङ्कपटलामनतितुङ्गया निरन्तरसमासङ्गसंगलितसौभाग्यया सुश्लिष्टसंधानमणिशिलातलघटितया शिखरपरिपाट्या समन्ततः परिक्षिप्तपीठां मठाग्रभूमिकापृष्ठवर्तिनीमिन्दुकान्तमाणिक्यमण्डपिकामगच्छम्।

तस्याश्च मणिशिलाबन्धबन्धुरेषु मन्थरपदन्यासया गत्या सविभ्रमं परिभ्रम्य पर्यन्तेषु दृष्ट्वा च दिशि दिशि प्रदीप्तदिव्यौषधिकलापोद्द्योतकपिलितातुच्छकूलकच्छमुच्छलितचन्द्रमणिकन्दरासान्द्रनिर्झरनिनादमिन्दुप्रभाप्रकाशितविभागमेकशृङ्गविस्तारमुपजातहर्षोऽहमचिरनिर्वर्तितप्रदोषकृत्यामतर्किताधिगतकान्तकुशलोदन्तनिर्वृतामच्छसलिलक्षालनापास्तरजसि मण्डपिकाजिरे रजतवेदिकामाश्रित्योपविष्टां मलयसुन्दरीमुपगम्योपाविशम्। आसीने च मयि नातिसंनिकृष्टमध्यास्य विष्टरमुत्सुकोत्सुका समागत्य चतुरिका साकूतमवदत्—'भर्तृदारिके, निश्चलविधृतया(?) शिबिकाप्ययानश्चारायणो नाम कञ्चुकी कतिपयपरिस्कन्दपरिवारो द्वारि। ब्रूते चैषः 'बलवदश्व(स्व)स्थचित्तया तिलकमञ्जर्या प्रेषितो मलयसुन्दरीमानेतुमहम्' इति।

निशम्य चैतदुत्पन्नसाध्वसा द्रविडराजपुत्री तामपृच्छत्—'भद्रे, विदितमस्यास्त्वया किंचिदस्वास्थ्यकारणमन्येद्युरेव निरामयशरीरा मत्सकाशमागत्य गता स्वगृहमायुष्मती'। सा प्रत्यभाषत—'भर्तृदारिके, सम्यगहमपि न जानामि। तदपि दृष्टं श्रुतं चावेदयामि। अतो दिनादतिक्रान्त एकदिवसव्यवहितेऽहनि प्रातरेव द्विगुणतरतरुणतरुगणं दक्षिणमदृष्टपारसरस्तीरतटवनमितोऽहमव्राजिषम्। अवचितविकचकुसुमा च कृत्वा देवतार्चनं यावत्त्वत्कृते कन्दफलमूलमन्वेषयन्ती कंचित्कालमतिवाहयामि, तावद्भर्तृदारिकापि तिलकमञ्जरी वनविहार-

कौतुकहृता त्वदन्तिकादुत्थाय शैलप्रस्थमवलोकयन्ती करेणुकारूढा तमेवोद्देशमुपदिश्यमानसरणिरन्तर्वंशिकैरागच्छत् । आसाद्य च श्लक्ष्णशितसुकुमारवालुकं पुलिनमेकमवतीर्णवत्यामत्र प्रमदपरतन्त्रः समस्तोऽपि सध्रीचीजनोऽस्याः क्रीडितुमनेकप्रकारमारभत । कोऽपि हरिचन्दनद्रुमेषु दोलामरचयत् । कश्चिद्वल्कलविवराकृष्टेन कर्पूरकणरेणुना गात्रमच्छुरयत् । अन्यः कर्णपूराशया करनखाग्रैर्लवङ्गपल्लवानग्रहीत् । अपरः सरस्तीरविघटितशुक्तिमुक्तैर्मुक्ताफलैर्द्यूतक्रियां प्रावर्तयत् । सा तु निर्भरविकसिताभिरमरतरुवल्लीपरम्पराभिः प्रलोभिता सलीलमुत्थाय चरणचारेण पुष्पावचयमकरोत् ।

परिभ्रमन्ती च तत इतो नितान्तरमणीयमाकरमिवामोदस्य, सदनमिव पुष्पसंपदाम्, आस्पदमिव मकरकेतोः, निकेतनमिव सर्वर्तूनाम्, उल्लासितकराकारविटपाभिरुपरि निपतन्तमातपमिव निरोद्धुमूर्ध्वमतिदूरमारूढाभिरतिमुक्तकलताभिर्लवलीभिस्ताम्बूलवल्लीभिरन्याभिश्च प्रशस्तवनलताभिर्निरन्तरानद्धनिबिडभित्तिभागमतिघनतया मारुतेनापि दुःखलभ्यप्रवेशमामोदतरलितैस्तरुणतापिच्छपिकपिच्छभासि छदच्छायातमसि कूजितेन व्यज्यैर्भृङ्गनिकरैरक्रमाक्रम्यमाणकुसुमस्तबकमेकमेलालतामन्दिरमविक्षत् ।

प्रविष्टमात्रायामेव तस्यामकस्मादशनिताडनत्रुटितविकटाञ्जनशैलशिखरानुकारी युगान्तघनघटाघोषभीषणेन विस्तारिणा कण्ठरसितेन रोषयन्नीषदुपजातनिद्रानन्दविच्छेदमद्रिकन्दरामन्दिरमृगेन्द्रवृन्दमचिन्तितावासगृहिणीस्वयंग्रहाश्लेषविभ्रमैः सहर्षसंक्षोभमीक्षितः क्षितिधरगुहासु शबरसेनाधिपैरतर्कित एवागत्य गगनाग्रदेशात्सरस्यपतदवनतमुखो महावारणः । तस्य चोच्छलितसलिलच्छटाक्षपिततटविटपिना

जनितसकलाटवीसत्त्वसंत्रासेन विगतहेतुना वेतपतनेन तरलितो भय-विहस्तः[1] सकलोऽपि भर्तृदारिकापार्श्ववर्ती युवतिलोकः प्रपलाय्य कश्चि-त्तरुतलेषु कश्चिद्व्रततिवलयेषु कश्चिद्गिरिगुहान्तरालेषु तरसा न्यलीयत।

क्षणेन क्षीणायां विभीषिकायामकाण्डविड्वरोड्डमरितेषु दूरमुड्डीय पुनरपि स्वानि वृक्षखण्डानि संसृ(श्रि)तेषु विश्रान्तवासितावेशनिभृतेष्व-ण्डजेष्वतीतासु कियतीष्वपि कालकलासु तस्मात्तिमिरगवलालिकज्जल-कूटकालान्नूतनादिव जलदवृन्दात्तडिल्लता विनिर्गत्यैलालतासदनाद्देवी तिलकमञ्जरी तरलरत्नाभरणकिरणप्रभासंभृतेन गात्रप्रभासंभारेण सकल-मुद्द्योतयन्ती तं वनोद्देशमवनतमुखी सलज्जेव नातिनेदीयसस्तमाल-तरुगुल्मस्य मूले गतिविलम्बमकृत। स्थित्वा च तस्यान्तरेषु मुहूर्त-मुपशान्तसंततश्वासपवनोद्गमास्वेदसलिलार्द्रजघनमण्डलासक्तमादरेण नि-बिडीकृत्य वि[स्र]स्तनीविनिवसनं[2] नियम्य चापरेण वैदग्ध्यशंसिना बन्धविन्यासेन सविलासमीषद्विवृतदोर्मूलपरिणाहाभ्यां बाहुलतिकाभ्या-ममन्दकुसुमामोदवासितवनानिलं शिथिलतामायातमलिनिकुरुम्बनीलं वालवल्लरीभारम[3]विचलविधृतलोचना लताजालकान्तरेण प्रतीपम[4]वलो-कितवती। कृत्वा च क्षणेन जृम्भारम्भानिष्पतद्बाष्पबिन्दुक्लिन्नलोचना-पाङ्गमङ्गभङ्गं प्रस्थिता। तदेव चकितचकिता लतालयनमुल्लासितस्तनां-शुका च वारंवारमवलोकितकुसुमजालकालीकमेव कुर्वती मार्गलतासु कुसुमावचयमागता द्वारमस्य। स्थित्वा चात्र कंचित्कालमुद्विग्नमानसा तदासन्नवर्तिषु तरुस्तम्बेषु सत्वरा भ्रमितुमारब्धा। क्षणेन चास्य तुङ्गं सरस्तीरतटमेकमधिकविस्तारितेक्षणा प्रतिक्षणोदञ्चितमुखी दिङ्मुखानि प्रेक्षितुं प्रवृत्ता। तां च दृष्ट्वा तथाविधामुत्पन्नविस्मया मनस्यकरवम्—

---

१. व्याकुलः. २. घनम्. ३. केशाः. ४. पश्चात्.

'हन्त, किमियमसमञ्जसन्यस्तचरणा तरुतलेष्वेकाकिनी भर्तृदारिका परिभ्रमति। किं वस्तु विस्मृतं किमपि काम्यं तदन्वेषयति, किमतर्कितस्वरूपेण तेन द्विरदपतनेन दूरीकृतमात्मीयमेवालीजनं मृगयते, यदि वा निरन्तरतपःक्षपितवपुषामृषीणामपि मुषितधैर्याणि दृश्यन्ते। अधुना हृदयहारीणि विभ्रमचेष्टितानि यान्यस्या न तानि मदनोन्मादमपहाय प्रकारान्तरेण संभवति। तदवश्यमखिललोकातिशायिरूपलावण्येन पुण्यपरमाणुनिर्मितोदारवपुषा दिव्यपुरुषेण केनापि दर्शयित्वात्मानमपसृतेन विप्रलब्धेयम्' इति चिन्तयामि यावत्तावदागत्य परिवृता सा परिग्रहाग्रेसरेणाभिसरलोकेन। नीता च निश्चितप्रकृतिविपर्यासभीतेनानिच्छुरपि गन्तुमनवरतविहिताभ्यर्थनेन स्वस्थानम्। तत्रापि सर्वदा शयनतलगता मुमुक्षुमतिरिव मन्दमप्यनभिनन्दितदिव्यरसपानभोजना, संनिपातविद्वैद्यवाणीव प्रकृष्टतापेऽप्यनुपदिष्टशिशिरोपचारा, निदाघपरमावस्थेव सहचरीरप्यपश्यन्ती, भीरुपरिषदिव पृष्टाप्यरतिकारणमनावेदयन्ती, चित्रज्ञमपि गतप्रज्ञ इति सावज्ञमवलोकयन्ती, प्रियभाषिणेऽपि रोषमुद्वहन्ती, केवलं यस्तस्मात्सरस्तीरतटवनादागतो यस्तद्गन्ता यस्तदुत्पन्नां वार्तामकथयद्यश्च तद्गमनार्थमुद्यममकारयत्तमेव परिजनं पार्श्वे कुर्वती तमेवालपन्ती तस्यैव वचनमवधारयन्ती प्राक्तनमहः स्थिता' इत्युक्ते तया मुक्तसाध्वसा मलयसुन्दरी सधीरमवदत्—'भद्रे, यद्येवमल्पो व्याधिः। न किंचित्कृतेनाकालगमनेन। उत्तिष्ठ। प्रहिणु चारायणम्। त्वमपि गत्वा सत्वरमिदानीमेव मद्वचसा समाश्वासय प्रकृतितरलां तिलकमञ्जरीम्। ब्रूहि

१. लोकमपि. २. शिप्टी शीतकाले पुष्पाति; सखी च. ३. 'शो तनूकरणे' इत्यस्यापि येन शिप्टीस्तनूकुर्वती; सखीरनवलोकयन्ती च.

चैनाम्—'अद्य निरवद्यशास्त्रशस्त्रविद्यापारदृश्वा किमपि कुशलः कलासु सकलभारतवर्षभूभुजो मत्पितुरपि माननीयाज्ञस्य राज्ञो **मेघवाहनस्य** प्रथमसूनुरवसानभूमिः समस्ताभिरामवस्तुविस्तरकथायाः कथंचिदपि दूरदेशान्तरादागतः प्रातरेव देवताधाम्नि **हरिवाहनो** नाम्ना कुमारो मया दृष्टः। स च निसर्गस्वच्छहृदयो मदीयवचनानुरोधेन स्थितोऽत्रैव दिवसमद्यतनम्। आनीतं च तं निजावासमनुबन्धेन परमबन्धुकल्पमुत्सृज्य युज्यते न यातुमिति चिन्तयन्ती नाहमायाता। तेन निःस्नेहतादोषो मयि न संभावनीयः' इति।

गतायां च तस्यां कृतप्रस्तावा **मलयसुन्दरी** शैशवानुभूतानर्णवान्तरद्वीपजातानृष्याश्रमनिवासवृत्तानन्यांश्च चिरंतनानात्मीयसुखदुःखवृत्तान्तानावेदयन्ती स्थित्वा सुचिरमुचितसमये मठाग्रपीठादवतीर्य तामेव मध्यमभूमिकामध्यभाजमात्मीयशयनशालामव्रजत्। अहं तु शशिकान्तमण्डपिकायां पुरस्तादेव विस्तृतायतमाश्रित्य मणिशिलापट्टमास्तीर्णमभ्यर्णनिहितकोमलकल्पपादपांशुकप्रावारमभिनवं पल्लवशयनमगमम्।

तत्र च विशालवेदिकापृष्ठबन्धौ सुगन्धिस्रग्दामकल्पितोपधाने निषण्णः शयनसंनिधानोपविष्टया निष्कृष्टरत्नोर्मिकाधिकसुखस्पर्शकरतलयुगलया प्रतिकलपरामर्शचलितचञ्चलकलाचिकाञ्चनवलयमालया मृद्यमानचरणद्वयः शनैः शनैः संवाहनकर्मचतुरया **चतुरिकया** तदुपवर्णितमनुस्मृत्य **तिलकमञ्जरी** मन्मथोन्मादमधिकमात्मन्युपजातबहुमानो मुहुर्मुहुश्चिन्तितवान्—'अरे हृदय, किमर्थमद्यापि ताम्यसि। किंच न मुञ्चसि चिरंतनविषादम्। उद्वह परं परितोषमधुना। यस्याश्चित्रपटगतेनापि रूपेण तादृशीं पुरा विकलतां नीतमसि, याममिलष्य विहितानेकसंकल्पेन नितान्तमल्पापि कल्पशतायमाना शयनतलगतेन

कथमपि यापिता सा त्वया संततवितीर्णदेहदाघा निदाघयामिनी, यत्समागमाशया प्रतिदिवसमुन्मुखेन साकेतनगरोपवनवर्तिना वीक्षितो गन्धर्वकस्यागमनमार्गः, यामनुस्मृत्य स्मरशरशरव्यतां गतेनापि रक्षता प्रयत्नेन धैर्यमतियापितो नितान्तदुर्मर्षणः स वर्षासमयः, यद्दर्शननिराशेन मुक्त्वा गृहनिवासमङ्गीकृतो दूरदेशान्तरप्रवासः, यद्विरहवेदनाविहितसौहित्येन लौहित्यमृगयावने विना मृगग्रहणसंकल्पेन कल्पितः सपरिवादिनीवादनमनुदिनं विनोदः, यदन्तिकं गन्तुमभिलष्यता व्यावर्तनसहेनापि गच्छन्नुदीचीं दिशमुपेक्षितः स नक्षत्रपथचारी शिबिरवारणः, यदनुरक्तेन दृष्टा सरस्तटलतावेश्मनि सापि भुवनत्रयातिशायिरूपान्या कापि राजकन्येयमिति परिहृता निरीहेण, यां विनिश्चित्यानुमानेन दूरोज्झितापि प्रतिनिवृत्य दिनमखिलमन्विष्टा क्षुत्पिपासायासितेन, या च मौनादिकाचेष्टास्मरणचकितेन दृष्टापि न पराङ्मुखी मयि भविष्यतीति चिन्तिता रजनिमखिलां द्रुमतलास्तीर्णतल्पस्थितेन, सा स्वत एव संप्रति विधेयतां गता जीवितं देवी तिलकमञ्जरी । सर्वथा लब्धं त्वया लब्धव्यम्, अधिगता जन्मवत्ता, निरस्तो दुस्त्यजश्चिन्ताभारः, स्वीकृतं स्वतन्त्रत्वम्, तथाप्येतदभ्यर्थये विमुच्य तरलताम्, तिरस्कृत्येन्द्रियाणि, निवार्य चक्षुषः प्रभुत्वम्, अङ्गीकृत्य नागरकवृत्तम्, निवर्त्य चापलं पञ्चबाणस्य, तथा कथंचित्प्रवर्तेथा यथाहमस्याः प्रथमदर्शने श्लथीभूतधैर्यस्थितिरासन्नवर्तिनो विदग्धलोकस्य नोपहास्यतां व्रजामि' इति चिन्तयन्नचिन्तितातीतयामामायामिनीमपि हेमन्तयामिनीं क्षिप्रमक्षपयम् ।

अथ मरुत्पथादवतरन्त्या विभावर्या निजप्रभाजालनिह्नुतच्छिद्रमच्छास्फाटिककटकमिवोन्मुक्तकरमिन्दुमण्डलं पपात । आपाण्डुपरिमण्डलेन

शश्विनासनेनैवैकेन किंचित्प्रकाशेन स्तोकविगलितमिश्रोत्तरीया दर्शनीयतामगच्छत्प्रतीची। हरितपाटलं रक्तारविन्दिनीवनमिव द्युमणिमार्गमवलोकयितुमुत्पतितमर(रु)णांशुभिः खचितमेचकादिन्द्रदिशि तलिनीभवत्तमिस्रम्। इतस्ततः कीर्णतनुजलतुषाराः प्रौढवातिका इव ज्वलितसर्वाङ्गम(भ) ङ्गनामान(नं) विषमपहर्तुमारभन्त संततोदीरितहंसपक्षशब्दाः सरोमरुतः। समकालमुत्क्षिप्तपत्रसंहतीनि सहैव कुमुदैररण्यदीर्घिकासु जघटिरे नष्टनिद्राणि चक्रवाकद्वन्द्वानि। क्षीणनिद्रेण निकटद्रुमकुलायशायिना शुककुलेन वारंवारमावेद्यमानविस्मृतक्रमाणि प्राक्रम्यन्त पठितुमाश्रमोटजनिषण्णैर्वृद्धवैखानसैः। प्राभातिकानि गङ्गास्तोत्रगीतकानि मदनुरागप्रगुणितश्चागत्य शयनशालाभ्यासमविभावितः कोऽपि बन्दीव वैदेशिको दिव्यपुरुषः श्रव्यवर्णोच्चारया वाचा समुच्चार्य तत्कालसमुचितं चतुःश्लोकमुपवर्णितप्रभातारम्भमेतद्वृत्तकुलकमनाकुलः पपाठ—

गेहे देव्याः सुषिरनिपतन्मारुतोत्तानवेणौ
धृत्वा कोणं विरचितलयो वादयन्दन्तवीणाम्।
रात्रौ द्वित्रैः सह सहचरैः सेवते त्वद्विपक्षः
किं संगीतं नहि नहि महीनाथ हेमन्तशीतम्॥

इयं व्योमाम्भोधेस्तटमिव जवात्प्राप्य तपनं
निशानैर्विश्लिष्यद्घनघटितकाष्ठा विघटते।
असावप्यामूलत्रुटितकरसंतानतनिकः
प्रयात्यस्तं स्रस्तः शितपट इव श्वेतकिरणः॥

भवत्याविर्भावः शिखरपरिपाट्या शिखरिणां
वनानां वृक्षश्रीरकलितविवेका विकसति।

---

१. गारुडिकाः. २. पक्षाः, पत्राणि च. ३. मिलितानि, संकुचितानि च.

ससीमा सग्रामा सनगरसरिद्वीपवलया
तमिस्रादुन्मज्जत्युदधिजलमध्यादिव मही ॥
यथा स्थूलं मूलेऽवतरति दृशामर्थनिकरो
यथा सूक्ष्मं लक्ष्मीं त्यजति विधुरस्तारकगणः ।
यथा वृद्धं बन्धः कमलमुकुलानां विघटते
यथा निम्नं भूम्ना रचयति पदं ध्वान्तनिचयः ॥
अयं वारस्त्रीणां सुरतविधिवैजात्यपिशुन-
स्तिरोधत्ते काञ्चिध्वनिबहलितः कण्ठनिनदः ।
असावप्यावृत्तिप्रशृ(सृ)तरवरेखाविलिखितै-
र्गलच्छिद्रैर्निद्रां व्रजति रतिपारापतगणः ॥
अवस्या(श्या)यस्पन्दै रभसरतनिष्पन्दवपुषां
विलासिद्वन्द्वानां द्रुतनिबिडिता श्लेषविधयः ।
दिशन्तो मौखर्यं भवनवलभीजालकभुवां
धुतक्रीडोद्यानद्रुमविततयो वान्ति मरुतः ॥
प्रभातप्रायासौ रजनिररुणज्योतिररुणं
रुणद्धीदं रोदो दिशि दिशि तमस्ताम्यतितमाम् ।
प्रभाछिद्रश्चन्द्रो दलति दलमैत्री जलरुहां
रहोऽनुत्साहस्य श्लथय नृप निद्रासुखरसम् ॥

श्रुत्वा चैतदुपजातविस्मयोऽहमरुणप्रभोद्भेद एवोत्थाय शयनात्किंचिदाबद्धकमलखण्डोन्मेषमीषदुपशान्तशोकसंचरत्कोकयोषान्विष्यमाणसहचरमनिललोलकल्लोलदोलायमानद्वित्रजलचरपतत्रिमिथुनमाबद्धपिण्डडिण्डीरशबलितशिलासोपानमालामूलमुपशान्तपङ्ककलङ्कशीतलस्वच्छनीरमदृष्टपारसरस्तीरमव्रजम् ।

तत्र च कृतावश्यकः स्नात्वा दत्तसंध्यादेवतार्घाञ्जलिरादाय सद्यः प्रबुद्धमधुकरोत्सृष्टविघटमानदलविकटकोशकोटराणि सनालदण्डानि भूयांसि कनकपुण्डरीकाणि नलिनीपलाशपुटसंदानिताश्च मकरन्दिनीरभरतरुसुमनसस्तदेव देवतायतनमागच्छम् ।

इच्छानुरूपरचितपूजश्च प्रणम्य परमया भक्त्या प्रथमजिनबिम्बमविलम्बितगतिः कृतसमस्तप्रातरितिकृत्यायास्तत्क्षणोपलिप्तामितस्ततो रचितरुचिरस्वस्तिकामविरलन्यस्तपुष्पस्तबकशबलां सबालातपामायतनमण्डपाङ्गणसङ्गिनीमाश्रित्य विपुलामिन्द्रनीलदोलास्तम्भवेदिकामासीनाया नातिसंनिधौ मलयसुन्दर्याः समुपाविशम् ।

निविष्टमात्रस्यैव मे हृष्टहृदया निकटमागत्य चतुरिका नीचैरकथयत्—'कुमार, त्वद्गुणश्रवणसंजातपरमप्रेमकौतुका प्रातरेवागमिष्यत्यद्यदेवी तिलकमञ्जरी । तदत्रैवोपविष्टेन कल्याणमूर्तिना मुहूर्तमासितव्यम्' इति वदन्त्यामेव तस्यां समकालचलितसकलसेनापतिपदातिबलकलकलोपबृंहितो विजृम्भितोत्तालवैतालिकव्रातजयजयध्वनिस्तारधीरेण वार्धितो धावतः पुरस्तादुदस्तकनकयष्टेः प्रतिहारलोकस्यालोकशब्देनोत्सारयन्निवोपहसन्निवा(?) घन्यकालजलवृन्दमसंख्यझल्लरीपटहशङ्खादिवाद्यरवसंभेदपृथुरुदस्थित प्रस्थानतूर्यघोषः । क्षीरसागरपटलानीव मथनोद्वेजितानि सकलमर्त्यलोकसरःपुण्डरीकवनानीव नाकमन्दाकिनीदर्शनोत्कण्ठितान्यशेषशरदभ्रमण्डलानीव चण्डानिलप्रहतानि तरुणपिण्डीतगरपाण्डुराण्यदृश्यन्त वेगादापतन्ति श्वेतातपत्राणि । मुखाग्रविस्फुरितफेनस्फारदशनप्रभैस्तारह्रेषारवमिषेण विषमाश्ववाजिनां जवमिवोपहसद्भिराशामुखान्यरुध्यन्त सर्वतो वियति । वल्गद्भिरश्वीयैर्दिवाप्युद्गतग्रहनक्षत्रतारागणमिव व्योमाङ्गणमलक्ष्यत व्याप्तम् । अनणुभिर्मणि-

विमानैर्द्विरदमदपङ्कमलिनितेषु मार्गजलदेषु तरलानिलतरङ्गितास्तरन्त्यो विद्युत इवाद्योतन्त कदलिकाकनकवैजयन्त्यः । सान्द्रकर्पूरमृगमदामोदवाही गन्धोदकनदीप्रवाह इव पवनेरितः प्रससार दिव्यकुसुमाङ्गरागपरिमलो वाराङ्गनाजनस्य । क्षणेन च प्रशस्तहतश्रवणामनणुनक्षत्रमालाकलितकुम्भभ्राजिनीं रजनीमिव निजप्रभान्धकारितभुवनभागां यामगजवसामारूढा प्रभालीढदशदिशारत्नाभरणकिरणौघेन सुरभिवासरारण्यपवनलेखेव नवपल्लवप्रकरेण निरन्तराच्छादिततनुलताप्रान्तचलितश्वेतचामरकलापा शरत्कालतटिनीव चटुलकलहंससेवितोभयतटा तमालनीलेन त्वंगतापुरः परस्परसङ्गिना शिखण्डिपत्रातपत्रखण्डेन दूराबद्धमण्डलं शाद्वलमिव व्योम्नि विस्तारयन्ती तारकाराजतनुरिवागत्य नभसा प्रतिमारूपेण सा भूम्यामवातरत् । त्यक्तयाना च देवतागारगोपुरद्वारि वारिताशेषपरिजनप्रवेशा प्रौढविद्याबलविवृद्धसौर्यावलेपाभिरुरःस्थलामुक्तमुक्ताफलखचितचामीकरवर्मभिरनेकरत्नकिर्मीरकार्मरङ्गासिपट्टप्रणयरमणीयभीषणाभिरधिकृताभिरङ्गरक्षाविधावनेकशतसंख्याभिः सर्वतो नभश्चरभटीभिर्घटितपरिवेषाविशेषचलविक्षिप्तेक्षणाभिरग्रतोऽग्रतः प्रस्तुतसमुत्सारणा मृषैव विस्तारितरोषपरुषारवाभिर्वेषधारीभिर्दूरादेव मामाबद्धलक्षेण चक्षुषा मुहुर्मुहुः सतर्षमीक्षमाणा प्रविश्य संनिधौ मलयसुन्दर्याः समुपाविशत् ।

निषण्णां च तामासन्नसहचरीवृन्दपरिवृतां पिबन्तीवोत्सङ्गयन्तीव गाढमाश्लिष्यन्तीव स्नेहनिर्भरेण चक्षुषा सुचिरमुद्वीक्ष्य परिमृज्य च कराग्रेण वारंवारमंश(स)देशे द्रविडदेशेश्वरसुता सखेदमप्राक्षीत्— 'प्रियसखि, परिक्षामपाण्डुरच्छायविग्रहा मृगाङ्कतनुरिव दिनेनैव दुरुपलक्ष्यतां गता । कथय किं ते तादृगस्वास्थ्यमुपजातम्, कथं च

निर्निमित्तमेव प्रशान्तिमुपगतम्, किं च त्यक्तसर्वान्यकरणीया प्रातरेवायतनमागता' इत्युदीर्य मयि निक्षिप्तलोचना लज्जावनतवदनामदत्तोत्तरामेव तां पुनरवादीत्—'तिलकमञ्जरि, विशेषदर्शितादरा क्षणमितो देहि दृष्टिम् । स एष सुगृहीतनामा भरतवर्षार्धभूभुजो महाराजमेघवाहनस्य प्रथमसूनुरविकलचतुःषष्टिकलाश्रयतया चतुर्गुणेनाधिकः समासादितसमग्रकलस्य शीतरश्मेरमृतमयस्वभावः कुमारो हरिवाहनः' इति व्याहृते तया सलीलपरिवर्तितमुखी तत्क्षणमेव सा तीक्ष्णतरलायतां बाणावलीमिव कुसुमबाणस्य,विवृत्तबालशफरस्फारसंचारां तरङ्गमालामिव शृङ्गारजलधेः, धवलीकृतदिगन्तां ज्योत्स्नामिव लावण्यचन्द्रोदयस्य, धैर्यध्वंसकारिणीमुल्कामिव रागहुतभुजः, संभ्रमोल्लासितैकभ्रूलतामाज्ञामिव यौवनयुवराजस्य, मुकुलितां मदेन, विस्तारितां विस्मयेन, प्रेरितामभिलाषेण, विषमितां व्रीडया, वृष्टिमिवामृतस्य, सृष्टिमिवासौख्यस्य, प्रकृष्टान्तःप्रीतिशंसिनीं वपुषि मे दृष्टिमसृजत् ।

दृष्ट्वा च तां प्रकटिततथाभूतविभ्रमामुपलक्षितानुरागा रूपेण वयसा विभवेन वेषपरिग्रहेण प्रभुतया गृहीतवाक्यत्वेन लावण्यसौभाग्यादिगुणलक्ष्म्या च लब्धसाम्या मृगाङ्कलेखा नाम तिलकमञ्जर्याः प्रियसखी विहस्य मन्दं मलयसुन्दरीमवोचत्—'भर्तृदारिके, यत्त्वया दिष्टममृतात्मकः कुमार इति, तत्तथ्यमिति निश्चितं मया । स्मृत्वाद्य चतुरिकावदननिर्गतेषु क्षरत्सु श्रवसि मन्त्राक्षरेष्विव महाभागस्यास्य नामवर्णेषु तूर्णोत्तीर्णदारुणज्वरवेदनायाः प्रलयदिनकरांशुकर्कशं क्वसि(शि)मानमायान्तमेकपद एव देव्यास्तमन्तःसंतापमाकर्ण्य चेदमीषद्विहसिताक्षी दक्षिणक्षितिपतनया । मृगाङ्कलेखे, किमत्राश्चर्यमविचार्यमहिमा महात्मनामनुभावः' इत्युदीर्य तूष्णीकाभवत् । तिलकमञ्जरी

तु किंचिदुपजातवैलक्ष्या क्षणमधोमुखीभूय विहिताकारसंवृतिरध:कृत्य साध्वसमवलम्ब्य धैर्यमपसार्य विभ्रमं निरस्य मनसिजोल्लासमवधार्य दूरारूढमात्मनः प्रभुत्वमालोच्य च सतामौचित्यकारितामतिप्रागल्भ्येव तिर्यक्प्रसारितभुजलतासरलसुकुमारारुणाङ्गुलीपरिगृहीतमुदधिवेलेव विद्रुमकन्दलीवलयितमुदग्रमभिनवं शङ्खमादाय ताम्बूलदायिकाकरतलादन्तःस्फुरद्भिः स्फटिकधवलैर्नखमयूखनिर्गमैर्द्विगुणीकृतान्तर्गतस्थूलकर्पूरशकलं स्वहस्तेन ताम्बूलमदात्।

दृष्ट्वा च तां कृतसमस्तोचितक्रियामक्रमोपचीयमानहर्षरोमाञ्चा काञ्चीविषयाधिपसुता प्रसन्नमनसं मामवोचत्—'कुमार, कृत्स्नेऽपि विद्याधरलोक इह लब्धपताका कलासु सकलास्वपि कौशलेन वत्सा तिलकमञ्जरी। यदि च कौतुकं ततश्चित्रकर्मणि वीणादिवाद्ये लास्यताण्डवगतेषु नाट्यप्रयोगेषु षड्जादिस्वरविभागनिर्णयेषु पुस्तककर्मणि द्रविडादिषु पत्रच्छेदभेदेष्वन्येषु च विदग्धजनविनोदयोग्येषु वस्तुविज्ञानेषु पृच्छैनाम्, येन युवयोः शृण्वती चतुरं परस्परालापमहमपि मुहूर्तमवगच्छामि निर्वृतेः स्वरूपम्' इत्यभिहितस्तया निभृतमास्थाय कंचित्कालमहमवोचम्—'काञ्चीराजतनये, अद्यापि मच्चित्तवृत्तेरविज्ञातत्वाद्देवि, करोमि कथमप्रस्तुतं वस्तुविचारम्। इतरोऽपि लोकः प्रायेण न भजत्याभिमुख्यम्, न समीहते सांनिध्यम्, न बहु मन्यते स्थिरावस्थानम्, नाकर्णयति वचनम्, न प्रयच्छत्युत्तरम्। नितरामपि कृतानुवृत्तेरसंजातपरिचयस्य परस्य किं पुनर्निसर्गनिःस्नेह ईश्वरजनः। तद्यदि कदाचिदत्रभवती नभःप्रचारेण प्रस्थिता दक्षिणाशाविभूषणेषु त्रिकूटमलयादिषु नगेन्द्रनिश्चलनिबद्धनीडगरुडपोतोद्भासितफणिषु लवणाब्धिरोधोवनेषु दृश्यमानदर्पान्धदिग्द्विपद्वन्द्वयुद्धेषु द्वीपान्तरेषु च

विप्लुत्य तेषु तेषु प्रतिनिवृत्ताश्रमेण वा दिव्यनगरीदर्शनकुतूहलेन वा शक्रावतारादितीर्थवन्दनाभिलाषेण वाग्रतो दृष्टिपथमागतामयोध्यापुरीमलंकरिष्यत्यात्मगमनेन, बाह्योद्यानविहिताश्रया च तत्र सेवाशया द्रष्टुमागतं पूर्वदृष्ट इति मामार्द्रया दृष्ट्या संभावयिष्यति, कृतोपसर्पणं च स्नेहेन विमुखीभूय न विमानयिष्यति, प्रस्तुतालापं च शनकैः प्रतिवचनदानेन कृतार्थीकरिष्यति, विहाय प्रस्तुतकथामन्यत्र वा न यास्यति, ततः क्रमेण लब्धप्रणयोऽहमवसरागतमात्मधिषणानुसारेण सर्वमेतत्प्रक्ष्यामि। अधुना तु मे दृष्टमात्रस्य स्वदेशं प्रतिवासं प्रस्थितस्य पुनर्दर्शनमेकमपहाय नान्यत्किमपि वक्तुं युक्तम्' इत्युक्तवति मयि संस्मृत्य तत्पुरावृत्तमात्मीयमप्रागल्भ्यविलसितमुद्भिन्नलज्जास्मिता मत्पुनर्दर्शनप्रश्नभीतेव सा सहसैवोदतिष्ठत्।

परिक्रम्य चायतनमण्डपे मुहूर्तमनुगम्यमाना सहचरीभिश्चतुरिकोपदिश्यमानमार्गमवाग्रभूमिकापृष्ठमारोहत्। तत्र च प्रतिक्षणं मयि क्षिप्तेक्षणा कुर्वती मसृणशीतलेषु माणिक्यमण्डपिकाशिलास्तम्भेषु मुक्तसीत्काराणि सविकारपरिरम्भणानि, वाचयन्ती श्रव्यभाषया तत इतः शृङ्गारसाराणि सत्कविसुभाषितानि, अभिलिखन्ती भित्तिभागेष्वभङ्गुरानुरागाणि विद्याधरपक्षिमृगमिथुनानि, नर्तयन्ती चलितवाचालवलयश्रेणिना हस्ततालशब्देन विषमवेल्लद्भूलतावातायनगतानायतनबर्हिणान्, उपहसन्ती प्रपञ्चितालीकगुणस्तवाभिश्चतुरोक्तिभिश्चतुरिकानिवेदितां मदीयपल्लवपल्यङ्करचनाम्, आघ्नती कराङ्गुलीयभ्रमुक्तैर्मुक्ताफललेष्टुभिर्गवाक्षकोटरेषु कोपाविष्टसहचरीचाटुघटनापरान्पारापतविटान्, बध्नती घनस्तनद्वन्द्वशालिनीनां शालभञ्जिकानामधिकण्ठमवतार्य चेटीकण्ठतो हठादानाभिलम्बान्मणिप्रालम्बान्, कुटिलयन्ती कराङ्गुलि-

विवर्तनेन प्रियकराकृष्टिसरलाः सहाससहचरीललाटलेखालकलताः, विदधती सार्द्रदन्तक्षतेष्वधरपत्रेषु सानुबन्धमारब्धहासोन्मिश्रपुष्कल-शुष्करुदितानामासन्नपरिचारिकाणामाक्रम्य चन्दनपङ्कोपलेपम्, निक्षिपन्ती सशब्दकृतचुम्बना मुहुर्मुहुश्चिबुकमुन्नमय्य परिजनोपनीतानां बन्धुजनबालकानां मुखे निजमुखेन ताम्बूलम्, विरचयन्त्यशक्तमश्रस्तमप्यादरेण दरप्रकाशितपीनं भुजमूलस्तनतटा पुनः पुनः कन्दुकक्रीडाप्रक्रमे पुष्पापीडमतिदीर्घमस्थात् । उत्तीर्य च कथंचिच्चिरावस्थाननिर्विण्णपरिजनानुरोलवमात्रमध्येन पुनरप्यन्तिके मलयसुन्दर्याः समागच्छत् । उपविश्य चात्राधिकृतैर्गमनायामात्यवृद्धैः पुनः पुनरनुबध्यमाना सखेदमुत्थाय मन्थरैश्चरणविन्यासैः प्रत्यावासमचलत् ।

प्रस्थितायां च तस्यां सह तया प्रस्थाय कतिचित्पदानि प्रतिनिवृत्ता प्रभूतवेत्रधारीपरिवृता प्रधानद्वारपाली मन्दुरा नाम सत्वरमुपेत्य द्रविडराजतनयामवादीत्—'भर्तृदारिके, देवी तिलकमञ्जरी विरचिताञ्जलिपुटा विज्ञापयति—अद्य तावत्कुमारेण सहितया समागत्य सख्या गृहदर्शनानुग्रहेण सुचिरकालात्सौख्यभागिनी कर्तव्याहम्' इति । काञ्चीपतिसुतात्र कर्तव्यमूढा स्तोककालमवनतमुखी स्थित्वा 'मन्दुरे, कन्दफलभुजो मद्विधस्य शून्यारण्यवासिजनस्य गर्हितमीश्वरगृहेषु गमनम् । कुमारस्तु गच्छतु । अनुभवतु सख्या क्रियमाणमभ्यागतातिथ्यम्' इत्यभिधाय तां व्यसर्जयत् ।

गतायां च तस्यामल्पखेचरीवृन्दपरिगता गृहीतवेत्रच्छत्रचामरेण पश्चात्प्रधावता परिजनेनानुगम्यमाना मृगाङ्कलेखा समागत्य सत्वरमवादीत्—'भर्तृदारिके, तिष्ठत्वेष तावदुचितानुचितयोर्विचारः । उत्तिष्ठ शीघ्रम् । एषा द्वारतोरणस्तम्भलग्ना सुचिरमूर्ध्वावस्थानखिन्नाभिर्नभश्च-

रेन्द्रकुलकुमारीभिः परिवृता बहिः प्रतिपालयन्ती त्वदागमनमास्ते देवी। ब्रवीति च—न तावन्मया गन्तव्यं न यावदार्या समागतेति। तच्छ्रुत्वा मलयसुन्दरी 'मृगाङ्कलेखे, न शक्यते किमपि मेऽन्यथा कर्तुम्। अनुवर्तनीया तिलकमञ्जरी' इत्युदीर्य चतुरिकासमेता सलज्जमचलत्। मृगाङ्कलेखा तु कृतमुखस्मिता ममाकृष्य पाणिं पाणिपल्लवाग्रेण विष्टरान्मामचलयत्। अगच्छच्च तिलकमञ्जरीसमीपम्। सा तु प्रीतिविकसितेक्षणा निरीक्ष्य माममुक्तहस्ताग्रया मृगाङ्कलेखया वारंवारमाकृष्यमाणमीषत्कृतस्मिता सयत्नमाबध्य विगलितोच्चयं पुनः पुनः सिचयमासन्नपरिवारलोकोत्क्षिप्तमूर्तिर्मलयसुन्दरीद्वितीया द्विरदवधूमारोहत्।

निधाय च समासन्नमात्मपरिजनं मत्समीपे पुरोभूय प्रचलिता चलितयानवाहनेन सर्वतः परिवृता मान्यविद्याधरकन्यकाजनेन स्वावासमगमत्। अहमप्यसह्यवेगमारुह्य विमानमस्याः स्थिरनिबद्धासनः संनिधानासीनया सदृशरूपवेषाभिरामरामाजनसमेतया मुहुर्मुहुः प्रयुक्तैः प्रीतिपेशलैः परिहासवचनैः प्रतिपथं विनोद्यमानो मृगाङ्कलेखया क्षणेनैव विजयार्धदक्षिणश्रेणिभूषणं रथनूपुरचक्रवालसंज्ञं विद्याधरराजराजधानीनगरमासदम्। प्रविष्टमात्रमेव च तत्र मामितस्ततः प्रहितकौतुकोत्तानलोचनमचेतनमिवालक्षितस्पर्शमश्रुतालापमव्याहृतप्रतिवचनमालोक्य निर्भरमुदितमानसा मृगाङ्कलेखा कुमारदृष्टं नगरमिति मधुरमप्राक्षीत्। अहं तु सर्वाभिभाविना भव्यतातिशयेन तस्यापहृतहृदयः सखेदमिव निश्वस्य दीर्घमानन्दघर्घरया गिरा स्वैरमवदम्—'इन्दुवदने, स्वच्छन्दया गत्या मन्दमप्यारक्षिलोकेनोपलक्षितैः परिभ्रम्य सर्वतो निरस्तशङ्कैः मत्यापणं प्रतिरथ्यं प्रतिगृहं प्रतिदेवताभवनं

प्रत्यारामं प्रतिनायकं प्रतिप्रमदं च यन्नावलोक्यते तदपि किं दृष्टमिति शिष्टैर्व्यपदिश्यते ।' निशम्य चेदं सा पुनः प्रावोचत्—'कुमार, नैतद्दुष्करमेव मयि दृश्यते' इति ब्रुवाणा गात्रसंघट्टरणिततारक्काणमणिघण्टैश्चण्डडिण्डिमारावडमरितविपक्षवारणैः संनिकृष्टघृष्टाधोरणगणप्राञ्जनप्राञ्जलीकृतप्रसरैः पृष्ठानुलग्नभग्नोत्साहकतिपयाप्तपदातिभिः स्कन्धासीनभयविहस्तैकैकहस्तिपकैश्चिरावस्थानदुर्गस्थमार्गलोकावलोकितैः परिचिताङ्कुशप्रचारैरपि निरङ्कुशप्रचारैः प्रकटकुम्भकूटधारिभिरप्यनास्रुतघटैः प्रभिन्नकर्णकरटैरपि विराजिश्रवणशङ्खैः सुवर्णदन्तकोशोपशोभितैरपि नीरदप्रतिमैर्व्यालतां वहद्भिरप्यनुदिनं न व्यालानां स्थितिमनुभवद्भिः सरागैरपि निरामयाङ्गैः स्तम्भमुक्तैः सदर्पमापतद्भिश्च प्रकामपीवरकरैः करेणुभिर्दुरवतारेण निरन्तरप्रचारप्राणिशतसंकुलेनापि पञ्चजनाधिष्ठितेनाश्वाक्रान्तेनाप्यायतेन गत्वा राजमार्गेण प्रविश्य राजकुलाभ्यन्तरमतिक्रम्य विस्तारवत्यपि नितान्तदुःप्रवेशान्यनेककक्षान्तराणि तोरणोपान्तपुञ्जितनिरन्तरोत्खातशस्त्रख्यातवंशान्तर्वंशिकनरं कन्यान्तःपुरमगच्छत् ।

प्रविष्टा च तत्र सर्वत्राभिरामं वामभागे तिलकमञ्जरीमन्दिरस्य निरन्तरानुलग्नमनतितुङ्गप्राकारपरिगतमुदग्रशिखरानेकसुन्दरप्रासादमासाद्य निजनिवासभवनं विमानादवातरत् ।

प्रविश्य च निरन्तरन्यासशालिना मणिशिलातलसंक्रमेण क्रमेणाधिरूढमानीय मामुपरितलकमलकुट्टिमतलस्योत्तुङ्गकनकस्तम्भराजीविराजिनः प्रकाशविपुलत्वतावकाशस्य शयनचित्रशालिकाङ्गणरत्नमण्डपस्याभ्यन्तरे स्वहस्तसंचरितेनाचिरधौतेन शुचिना समन्तादुत्तरच्छदपटेनाच्छादिते मृदावपि तापनीये महति पट्टपर्यङ्के न्यवेशयत् ।

उपाश्य च सुचिरमन्तिकन्यस्तविष्टरोपविष्टा प्रक्षाल्य च स्वयं परिजनाहृतेन स्वच्छवारिणा मच्चरणयुगलमादरार्पितप्रचुरपुष्पताम्बूला **तिलकमञ्जरी**पार्श्वमगमत्। सा तु प्रविष्टमात्रैव सद्मनि प्रतिदिनमेव दर्शनोत्कण्ठितायाः प्रथमागमनलज्जितां **मलयसुन्दरीं** सहसैव गत्वा मातुरन्तःपुरगतायाः सादरमदर्शयत्। स्वयं च मद्दर्शनाशया दीर्घाध्वलङ्घनेन खिन्नासीत्यलीकमेवादिष्टशिशिरोपचारा त्रिचतुराप्तसहचरीसमेता सौधशिखराग्रसङ्गिनीं शयनचित्रशालामगच्छत्।

तस्यां च तत्क्षणोद्धाटितकपाटप्रकटितोत्तराशे दक्षिणेतरभित्तिभागाश्रयिणि सुश्लिष्टमणिभूमिकान्ते शशिकान्तवातायने चित्तज्ञेन विरचितविचित्रविन्यासैश्चतुरपरिचारिकाजनेन सरोजिनीपत्रशयनीयमधिशयाना पन्नगाङ्गनेव चन्दनाङ्गरागिणी, निदाघान्तदिवसकरमूर्तिरिव धृतदशाशान्तपरिश्रवन्नवजलार्द्रांशुका, शुकाङ्गनीलसजलशैवलप्रवालकल्पितकर्णपूरा, नूपुरस्थानसंदानितसनिद्रकैरवमुकुलमण्डलीका, जघनमण्डलनद्धनीरन्ध्रकुवलयदामरसनागुणा, श्रवणपाशदोलायमानकुमुदिनीकन्ददन्तपत्रा, कण्ठभुजकराग्रादिभिः शरीरावयवैरखिलमपि हारकेयूरकटकप्रभृत्याभरणजालं मार्णालमुद्वहन्ती, साक्षादिवामृतजलधिजलदेवतागतेऽप्यर्तिमायतनिःश्वसन्ती, विनापि वेदनां वदनमाकूणयन्ती, अन्तरेणापि तापमङ्घ्रिपल्लवतले रत्नदर्पणं दापयन्ती, अबहुमन्यमानापि पवनस्पर्शमनुवेलमभिनवानि कदलीपत्रतालवृन्तान्युत्क्षेपयन्ती, उभयतो निविष्टेन वेदितुमिवायाममक्ष्णोरुपरि वारंवारमारोपितजलार्द्रनीरजदलद्वया, मातुमिव विस्तारमुरसिजपीठपृष्ठे प्रतिष्ठितविशालनलिनीपलाशा, शिक्षितुमिव तदीयरेखामधिललाटमालिख्यमानमलयजललाटिका, लब्धुमिव निश्वाससौरभोत्कर्षमुरसि विक्षिप्य-

माणप्रचुरकर्पूरचूर्णमुष्टिः, स्प्रष्टुमिव गात्रयष्टिमारब्धमधुरसवाहना, स्वयं प्रियसखीगणेन क्षणं संमुखपरावर्तिताङ्गा, क्षणमुत्तरीयेणार्धावगुण्ठितोत्तमाङ्गा, क्षणमुपविश्य मत्तवारणके कृतावष्टम्भा, क्षणमुत्थाय प्रकटिताङ्गभङ्गमारब्धजृम्भाविजृम्भितपृथुश्रमव्यथे वा पृष्ठमन्मथोपदिष्टमभिनवं रसविशेषमनुभवन्ती सुचिरमस्थात् ।

दृष्ट्वा च मामलक्षितैरक्षिविक्षेपैरग्रतः समग्रकलाधिगमलब्धवैदग्ध्याभिः शुद्धान्तयुवतिभिरनेकधा प्रवर्तितविनोदमुपजातपरमप्रमोदा ततः प्रासादवातायनादुदतिष्ठत् । अहमपि तया शून्यीकृतमवेक्ष्य तं गवाक्षमुद्गतोद्वेगवेगस्तदुच्छेदवाञ्छया रुषेव सर्वदा समासन्नचन्दनार्जुनतिलकमञ्जरीकमन्तःपुरोपवनमव्रजम् ।

भ्रान्त्वा च तत्रातिचिरं स्मरायतनरक्ताशोकतलनिषण्णमासन्नसेवाचतुरकतिपयान्तःपुरचारिपरिचारकपरीतमल्पवेत्रधारीवृन्दपरिगता समागत्ता सत्वरमनन्तरा मन्दुरायाः प्रतीहारी हरिणिका नाम विहितप्रणामा मामवोचत्—'कुमार, संप्रति प्रासादशिखरावतीर्णा विज्ञापयति देवी तिलकमञ्जरी—मज्जनपुरःसरमह्नाय मध्याह्निकं निर्मापयतु कर्मक्रमं कुमारः । प्रथममेवाद्य चिरकालादुपागता निरन्तरव्रतनियमोपवासक्लेशविशेषकर्षि(र्शि)ताङ्गी न युज्यते निर्निमित्तमाहारवेलातिक्रमं कारयितुमार्या मलयसुन्दरी । पुनः कदाचिद्द्रष्टव्यमुद्यानम् ।' अहं तु तच्छ्रुत्वा 'यथाह देवी' इत्यभिधाय तत्कालमेव प्रचलितः पादपतलादनुगम्यमानः सविधचारिणा जनेन तमेव प्राक्तनं स्वावासमणिमण्डपमुपागमम् ।

तत्र च समाहृतसमग्रस्नानमङ्गलोपकरणाभिरनुपालयन्तीभिरागमनमुन्मुखीभिर्मज्जनबालिकाभिरभिनन्दितदर्शनः स्नात्वा सुचिरमुत्थाय द्विप्र-

कारामपि विधाय भुवनत्रयगुरोरादियुगनाथस्य पूजामात्तचतुरोदारनेपथ्यप्रथमदर्शनात्प्रभृत्यकृत्रिमारूढसख्यया सतताभिमुख्यया मृगाङ्कलेखया साकमक्षक्रीडाविनोदेन क्षणमात्रमस्थाम्।

अथानुपदमागच्छद्भिरन्यैश्चान्यैश्च वर्जितैर्विसर्जितैस्तिलकमञ्जरीसमासन्नलोकैः समुपहूतः प्रासादशिखरादवातरम्। उपदिश्यमानवर्त्मा च तैः प्रचलितः पुरस्तादितस्ततो दत्तदृष्टिर्दूरादेव दृश्यमानोदग्रशृङ्गम्, अधिकाभिरामभास्वराभोगम्, अङ्गणोपान्तपुञ्जितविमानयानाभिरन्तर्न्यस्तदुन्दुभिशङ्खझल्लरीपटहपणवादिवाद्यविशेषाभिः कृपाणचक्रप्रासपट्टिशप्रायप्रहरणदुरालोकाभिरालोक्यमानविविधध्वजच्छत्रचामरोड्डामराभिरनेकपर्याणपीठपर्यङ्ककङ्कटकिरीटगर्भाभिर्विहारकालोपयुक्तवस्तुसंभारनिक्षेपपक्षमाभिरुभयतो विशालगम्भीराभिः शालाभिरुपशोभमानबाह्यकक्षान्तरम्, आरोपितानुरूपरत्नपर्याणैर्गरुडकेसरिकुरङ्गवक्राङ्गबर्हिणप्रमुखाकारधारिभिर्विद्यावलकृतैर्दर्शनायातविद्याधरवधूवाहनविशेषैरशून्यमध्यमप्राकारगोपुरद्वारम्, अनवरतसारणीसेकसुकुमारकृत्रिमतरङ्गिणीतीरवनखण्डैः श्रीखण्डशाखागतागतोन्नीतवनपालबालिकानिर्दयान्दोलनविलासैः कुसुमितलताकुञ्जगुञ्जन्मधुपमधुरितमनस्विनीकोपकुटिलभ्रुकुटिभङ्गैरभङ्गुरप्रासाददीर्घिकाकुण्डजलमण्डपैरखण्डितमुख्यतरुमिथुनकोद्वाहमङ्गलगीतवाद्यैरुष्णांशुरथचक्रावयवैरिव स्फुरितस्फारकाञ्चनारैरसम्यग्ज्ञातदशरूपकैरिव सर्वदाडिमीकृतवीथिभिरनल्पचारैरुरुभिरनेकनागराजादनजनितशोभैः केसरिभिः प्रकृष्टकुटजैरप्यगस्त्यभावरहितैर्जगत्त्रयजयोद्यतस्य मकरकेतोरेकान्तसहकारिभिः सहकारिभिरुपवनैरशून्यपश्चिमभूमिकाभागम्, अङ्गीकृतानुरूपनिजव्यापाराभिः सविभ्रमं भ्रमन्तीभिस्तेजोमयीभिरिव सौन्दर्यमयीभिरिव मन्मथमयीभिरिव सौभाग्य-

मयीभिरिव विभाव्यमानाभिरप्सरोभिरिव मुनितपोभीतशतमखाज्ञया स्वर्गतोऽवतीर्णाभिरमृतजलदेवताभिरिव सुरापहरणशङ्कया क्षीरोदादपसृताभिः सततसंनिधिप्रीतदेवतावितीर्णचैतन्याभिः स्वर्विमानमणिशालभञ्जिकाभिरिव पुञ्जीभूताभिः गङ्गादितीर्थजलक्षालनापनीतस्थावरावस्थाभिरम्भोजिनीभिरिव रूपान्तरेण परिणताभिः प्रतिपक्षखण्डनोद्विग्नाभिः शशिकलाभिरिव शरणाय खेचरेश्वरमाश्रिताभिर्नयनाभिरामरूपावाप्तिकामाभिः सौदामिनीभिरिव प्रमदाभावमापन्नाभिरनवरतदिव्यजनप्रार्थनाकदर्थिताभिः कल्पलताभिरिव मनुष्यलोकमायाताभिरन्धकारितदशाशैः केशपाशैर्दिवापि प्रियजनाभिसरणाय प्रदोषमिव सूत्रयन्तीभिर्मुखमण्डलैश्चन्द्रबिम्बावस्कन्दमिव कल्पयन्तीभिरिन्दीवरदलदामसुन्दरैर्नयनविक्षेपैर्जगज्जयाय मन्मथमिवाज्ञापयन्तीभिः शोषिताधरबिम्बताम्बूलद्रवैर्गतिश्रमश्वासपवनैस्तत्कालमन्दरागाग्निमिव संदीपयन्तीभिः कुन्दशुचिभिः परिहासस्मितैः स्तनतटोष्मभस्मीकृतरुचो मुक्ताकलापानिव धवलयन्तीभिर्गतिवशोपलक्ष्यमाणायतिभिस्त्रिवलिलेखाभिरप्रत्यक्षदर्शनमुदरदेशमिवानुमापयन्तीभिः संनिहितोरुनाभिभिः श्रोणिचक्रै रथवरूथिनीमिव यौवनयुवराजस्य योजयन्तीभिर्विलासमसृणैश्चरणविन्यासैर्भवनहंसकानिव गतिक्रमं ग्राहयन्तीभिरनेकरागैर्देवाङ्गनिवसनांशुभिस्त्रिदशचापाद्वैतमिव दर्शयन्तीभिर्घ्राणलेपिभिरनुलेपनामोदैर्नन्दनमिवाकर्षयन्तीभिः सरोभिरिव सारसनादिभिर्भूषणगणैर्मुखरिताशामुखाभिः सर्वतो विलासिनीभिः समाकुलमसुरकन्यापुरप्रवेशविवरमिव सततसंनिहितद्वाररक्षोभयं सुग्रीवबलमिव सलीलमारुतिगवाक्षगवयोपनीतकुपितरामावलेपं शरन्नभ इव स्वातिचित्रोदयानन्दितनिशान्तप्रबुद्धलोकं विवाहमण्डपमिव दृश्यमानाभिनवशालाजिरसंस्कारमपुराणमप्युपलभ्य-

मानविविधवामनकिरातचरितमुदंशुकाञ्चनकलशचक्राक्रान्तविकटोदग्रकूटैस्तुषारगिरिशिरोभिरिव लग्नस्फारवज्राग्निविस्फुलिङ्गैरदभ्रसरलार्जुनसालगुप्तिभिः सप्तभूमैः कुमारीपुरप्रासादलक्षैः समन्ततः परिक्षिप्तपार्श्वमदृश्यमानपुरुषप्रचारतया स्त्रीराज्यमण्डलमिव विजित्यानीतमखिलं **तिलकमञ्जरी**मन्दिरमपश्यम् ।

प्रविश्य च स्तोकमुपसृतस्तत्कालकर्तव्यसत्वरस्य विसर्जयत इतस्ततो दृष्टिगोचरायामन्तःपुरपुरंध्रिलोकमाकुलाकुलस्य '**वरुणिके**, वारय निकटनाट्यशालाशैलूषकुलसंगीतकलहम् । **कोकिले**, विधेहि स्वविषयादुपेयुषः किंनरराजकुलचारणकुलस्य स्वरसंदेहविच्छेदम् । **विहङ्गिके**, प्रहिणु यानाशक्तिरिक्तीभूतचिरसंचितद्रविणविद्राणमदरिद्रीकृत्य वैश्रवणयाचकवृन्दम् । **मन्दारिके**, कारय गन्धर्वपतिरङ्गनर्त्या: कामकोटेः पट्टबन्धम् । **सुन्दरि**, निधेहि गन्धोदकनदीषु दिव्यानि कठिनकर्पूरकाष्ठकॢप्तानि यानपात्राणि । **पत्रलतिके**, पुषाण पुरुषरूपवन्ध्येन स्वविद्धचित्रेण देवीविचित्रवलभिकाभित्तिसौभाग्यम् । **द्रमिडि**, दापय क्रीडाद्रिकन्दराशवरमिथुनानामखण्डानि कल्पतरुचीरचण्डातकानि । **शिखण्डिके**, शेखरीकुरु पण्डकोपवनखण्डजाताः पारिजातसुमनसः । **सिंहिके**, समुपसंहर वेणुवीणादिवाद्यविनोदम् । **विनयवति**, नायमवसरो नयद्यूतस्य । **कलकण्ठि**, तिष्ठतु तावदेषा सुभाषितपाठगोष्ठी । **मन्दुरे**, द्वारमण्डपादुत्थापय प्रभातसेवायातमखिलमपि खेचरकुमारीजनम् । **रञ्जिके**, रञ्जय तलिनध्वान्तशितिम्ना तमालवल्लीपल्लवरसेन श्रीमण्डपादारभ्य सकलाः सौधवलभीः । **कुरङ्गिके**, विकिर मणिकुट्टिमेषु व्योमजाह्नवीजलजोपहारम् । **गौरि**, द्वारतोरणेषु जाम्बूनदा द्रिजम्बूप्रवालचन्दनमालाः । **चन्द्रलेखे**, विलिख प्रशस्तललितानितस्ततः

क्षीरोदमौक्तिकक्षोदैः स्वस्तिकान् । अवन्तिके, मिश्रीकुरु प्रत्ययाहृतेन दिक्करिकपोलदानदर्पेण गोशीर्षचन्दनाङ्गरागम् । तरङ्गिके, गृहाण विद्याधरेन्द्रगृहिणीभिः प्रेषितानपूर्वपरिमलमुचः फलपुष्पासवान् । वसन्तिके, वासय घ्राणपुटसर्पिभिः कर्पूरवासैर्मानसजलभृतानम्भःकुम्भान् । पुरंदरिके, पूरय सुखोष्णसुरभिणा गन्धसलिलेन भर्तृदारिकास्नानपुष्करिणीम् । मकरिके, मार्जय सितेन रसवतीचुल्लिचन्दनभस्मना समस्तमादर्शभवनम् । अनङ्गवति, सज्जीकुरु स्मरायतनबलिकर्म । तूर्णमभ्यर्णीभवति मध्याह्नसमयः । न पश्यसि पुरः प्रातरेवाद्य गत्वा स्वयमिह नीतस्य कस्याप्यतिमहीयसः क्षत्रियक्षितिपसूनोरागमनमार्गम् । अवलोक्य पर्यङ्कादुत्थितामुभयतो विधूयमानधवलचामरकलापां देवीं तिलकमञ्जरीमिमांश्च शुद्धाचारदारिकाधिष्ठिताभिः शुद्धान्तदासीभिर्महानसादानीयानीय संचार्यमाणाननेकैः सूपकारैः प्रत्येकमारोपितविशिष्टतरसंस्कारान्मण्डपान्तरतिभूयसो भक्ष्यप्रकारान्' इत्यादिकानाकर्णयन्नधिकृतान्तर्वंशिकजनस्य नानाविधालापानग्रतः प्रचलितेन स्खलितगतिना विमलजलकुट्टिमेषु निःशङ्ककृतपदक्रमेण गेहाङ्गणविलासदीर्घिकासूत्पाटितविततपरिवस्त्रापटेन पट्टशालासु सत्वरोत्क्षिप्तदीप्तिपटेन वैडूर्यवलभीद्वारविवरेषु स्फोटितोत्तमाङ्गेन स्फटिकस्तम्भोत्फालकेषु ललाटनिहतोत्तानहस्तेन निर्यताजिरपथेषु तार्जितातपत्रधारेण पद्मरागसद्मप्रभारागपटलातपेषु जातदिङ्मोहेन बहलेन्द्रनीलमन्दिरच्छायान्धकारेषु कृतसमुत्सारणेन स्वच्छमणिकुड्यान्तरितवपुषः प्रेष्यलोकस्य प्रस्तुतप्रणतिना संमुखीनादर्शभित्तिप्रतिबिम्बिततनोः पूज्यवर्यस्य सकलभूविभागज्ञेनाप्यपूर्वागतेनेव वेत्रधारीगणेनोपदिश्यमानसरणिरुद्धाटित-

---

१. प्रान्तेषु.

गवाक्षविवरोपलक्ष्यमाणरुचिरमणिभित्तिचित्रं च्युतमिव त्रिदशलोकात्सहायातसर्वगीर्वाणपरिषज्जनं भोजनभवनमण्डपमगच्छम् ।

तस्मिंश्च तत्कालमन्दाश्यानहरिचन्दनोपलेपे सरसमन्दारकुसुमोपहारस्मेरमणिभुवि मुषित इवोपरि निबद्धशुचिविताने पातालनगर इव संचरदनेकदर्वीकरपुरंध्रावुत्पातजीमूतदुर्दिन इवासन्नहिमशिशिरवारिकरकोपलक्षणप्रभाशोभे संभ्रान्तपरिजनाहृतमहार्हमणिविष्टरोपविष्टः श्रुतागमनसाध्वसोत्तालतिलकमञ्जरीविसर्जिताभिः प्रधानसध्रीचीभिरागत्य निवर्तिताङ्घ्रियुगलक्षालनादिसकलोचितक्रियः समीपविन्यस्तविकटासनोपविष्टया मुहुर्मुहुः स्वहस्तसंचारितापरापरस्वादुसुन्दरदुरुपलक्ष्यभक्ष्यप्रकारया **मृगाङ्कलेखया** सकौतुकप्रेमहासमुपनीतसितचारुचामराभिर्मणिचतुष्किकास्तम्भतलवर्तिनीभिश्चतसृभिश्चामीकरशिलायन्त्रपुत्रिकाभिः स्वैरस्वैरमुपवीज्यमानः समासन्नपञ्जरजुषः प्रकृतिकलकण्ठस्य मङ्गलपाठकस्येव पठतः शुकविहङ्गस्य प्रसङ्गागतैर्भोगावलीवृत्तैः पुनः पुनर्जनितविस्मयो विस्मयावहैकैकवस्तुविस्तारिताभ्यवहारतर्षमविषयवर्तिनं वर्णनायाः कदाचिदप्यभुक्तपूर्वमुपहारमुपभुक्तवान् ।

उपविश्य चापरसुखासनस्थः स्थित्वा चिरंतनाभिस्ताभिरभिमतवस्तुसंकथाभिरावासगमनाय देवीं प्रष्टुमन्तिकनिविष्टां **मृगाङ्कलेखां** प्राहिणवम् । अथागत्य विस्मयोत्फुल्लनयना महाप्रतीहारी **मन्दुरा** प्रणम्य सादरमवादीद्देवीम्—'अस्त्येव दक्षिणदिङ्मुखादागतो निसर्गरमणीयाकृतिः शुकशकुन्तिरेको द्वारमध्यास्ते । ब्रवीति च कृतप्रेषणोऽहं लौहित्यतटवासिनः स्कन्धावारादुपगतः कुमारहरिवाहनं द्रष्टुमिच्छामि' इति । अहं तु तच्छ्रुत्वा 'प्राक्तनेऽहनि वनान्तसरसीतीरवर्तिना

१. शीतलजलकरकाणां यान्युपलक्षणानि तेषां प्रभाजाले. २. क्षणप्रभा विद्युत्.

वितीर्य लेखं मया स्वस्थविरं प्रति प्रेषितो यः स नूनमयमायातः' इति विचिन्त्य विज्ञापयितुमागताम् 'मन्दुरे, गच्छ गच्छ । प्रवेशय' इति सांग्रहस्तमवोचम् । अथ प्रस्थाय तत्क्षणमेव सा प्रश्रयोपरचिताञ्जलिः 'पश्य गुणवन्, इदानीमेव निर्वर्तिताहारं कुमारम्' इत्यभिहितवती । स तु तदीयवचनानन्तरमेव सत्वरः स्तम्भशिखरादवतीर्य तिर्यक्प्रचलितः सरलितसुरेन्द्रचापरेखाचारुणा स्वसंचारेण सीमन्तयन्नन्तरिक्षमीक्ष्यमाणः कुतूहलाकूततरलितोत्तानतारकाभिरन्तमिव कुमारीभिरव्याकुलः प्रविश्य पूर्वदृष्ट इव तत्राहारमण्डपे संवृताग्रतुण्डसंदंशसंग्रहीतमुत्सृज्य मच्चरणयोः पुरस्तादजर्जरं भूर्जलेखमावार्जितशिराः किंचिदुच्चोच्चारिताक्षरेण स्वरेण जयशब्दमकरोत् ।

दृष्ट्वा च तं तथागत्य कृतदर्शनमकारण एव साधितानन्यसाध्यकरणीयमायताध्वश्रमक्षामनिःसहशरीरमङ्घ्रिपीठोपकण्ठभुवि सविनयोपविष्टमुपजातपरमोपरोधः स्थित्वा क्षणमवोचम्—'महात्मन्, सर्वदा स्वाधीनवनफलाहारनीरं निरीहमेकान्ततो विशिष्टान्नपानदानेष्वघटमानमाल्यवस्त्रप्रसाधनाभरणवेषग्रहणमेवंविधं विधिवशाद्विहङ्गरूपमापन्नस्य करुणानिधेः कस्यापि गुह्यकस्य गन्धर्वस्य विद्याधरस्य वा भवतः प्रह्वीकृतोऽपि बलवता स्नेहेन मादृशः किं करोत्यभ्यागतातिथ्यम् । तथाप्युत्तिष्ठ । कुरु कियन्तमपि मे मनःपरितोषम्' इति निगद्य युगपत्करयुगोत्तम्भिताङ्गं तमुत्सङ्गमनयम् । कृतकुशलसंप्रश्ने च स्पृशति मन्दमन्दमामीलिताक्षस्य नवशिरीषपक्ष्मसुकुमारतनूरुहाणि तस्याङ्गानि संजातपरमप्रमोदे मयि समागत्य कुन्तला नाम **तिलकमञ्जर्याः** शयनपाली सप्रश्रयमवोचत्—'कुमार, देवी विज्ञापयति—अद्य मे

१. सदाग्रहस्तेन सर्वाङ्गुलीप्रान्तचलनेन वर्तते इति क्रियाविशेषणम्.

त्वत्सकाशादुपागतया मृगाङ्कलेखया समाख्यातं यथा किल परैरलक्षिततनुः कुमारो दिदृक्षते नगरमिति । तद्यदि सत्यमेतत्तदमुना स्पर्शानुमेयेन निशीथनाम्ना दिव्यपटरत्नेन प्रावृताङ्गः पश्य त्वम् । अयं हि मे हिमाचलशिखरसद्मनः सिद्धनिम्नगासिन्धुनिर्गमादुउदक्पूर्वापरतटस्य प्रसृतसर्वपथीनपृथुलोर्मिसंघातघट्टिताशाकरिकरटकूटस्य विष्टपत्रितयविख्यातशोभासंपदः पद्मनाम्नो महाह्रदस्यैकदा समं सहृदयसुहृज्जनेन रामणीयकमवलोकयन्त्यास्तदङ्कपङ्कजवननिवासिन्या श्रिया समाहूय सादरं समुपनीतः । प्रकटिता चास्य परमाश्चर्यकारिणी किमन्यदप्यनुभावसंपादनेन संवीतविग्रहमाग्रहव्यापृताक्षोऽपि लोकः स्तोकमपि नालोकयति देहिनम्, अङ्घ्रिमूलाक्रान्तभोगनालोऽपि न दशति दन्दशूकः, निःशूकपुरुषसरोषपातितास्तिलमात्रमपि कृन्तन्ति न कृपाणधाराः, कण्ठावधि निपीतान्यपि न वेविषत्यङ्गं विषाण्यजङ्गमानि, शश्वदवलोकितच्छिद्राण्यपि न जातुचिच्छलयन्ति यातूनि, जाता अपि जरामवयवेषूज्झन्ति झगिति संनिपातज्वरपुरःसरा रोगाः । किंवानेन बहुभाषितेन । स्वभावदुःप्रतिषेधानीषदप्यलब्धपुनरनुग्रहानमोघभाषिभिर्दिव्यपुरुषैः सरोषमारोपितानपहरति दीर्घशापानपि स्पर्शमात्रेणायमिति निगद्य मद्गात्रमुत्तमाङ्गेन सह तेनाच्छादयत् । अथ शिरीषकेशररेणुपरमाणुभिरिवारब्धेन शरदरविन्दकोशमध्यादिव लब्धजन्मना सुधारसकुण्डकुक्षेरिवाकृष्टेन मलयाद्रिहरिचन्दनच्छाययेव छुरितेन मूर्च्छामिव जनयता निद्रामिवानयता क्षीरसागर इव स्नपयता निर्वाणसौख्यसंख्यामिवाचक्षाणेन प्रह्लादिना तदीयसंस्पर्शेन परवशीकृतं बिभ्रतो ममाङ्गमुत्सङ्गदेशादलक्षितोद्गमः सहसैव तं समुत्क्षिप्य दिव्यपटमग्रहस्ताभ्यामुदग्रयौवनः पुमानग्रतोऽभवत् । अवेक्ष्य च तमादौ भयविह्वलेन

ततोऽभिमुखविन्यस्तविस्मयस्तिमितचक्षुषा पश्चात्प्रहर्षपरवशेन गन्धर्वको गन्धर्वक इति सहासमुद्घोषिनिकषावस्थितेन तेनान्तःपुरपुरंध्रीजनेन परिवर्तितमुखे च विघटितपटप्रकटिताकारमवलोक्य मां झटिति कृत-सप्रश्रयप्रणामे तत्र रभसप्रधाविताात्, 'देवि, दिष्ट्या वर्धसे । यः पुरा विनष्ट इति शोचितः सुचिरमासीत्स संप्रति कुमारहरिवाहन उत्सङ्गदेशादनुपहतविग्रहो गृहादिव विनिर्गतो गन्धर्वकः' इत्याकर्ण्य चपलचेटीजनादुत्पन्नसंभ्रमा सविस्मयानन्दमासन्द्याः समुत्थाय दर्शित-पथा पुरस्थितेन तेनैव शुद्धान्तचेटीजनेनान्येन च यथाप्रवृत्तिश्रवणा-दुच्चलितेन चटुलगतिना समासन्नपरिजनेनानुगम्यमाना मलयसुन्दरी-द्वितीया देवी तिलकमञ्जरी तत्रैवागच्छत् । अभ्युद्गता च प्रकटिता-दरेण मया संभ्रान्तपरिचारिकोपनीते सविभ्रमव्रीडमासने न्यविक्ष्यत । अविलोक्य च मां पुनः पुनस्तथादरविशेषसंपादिताहारमामोदिहरि-चन्दनद्रवानुलिप्तसर्वाङ्गमाबद्धमालतीकुसुमशेखरमुपनीतदिव्यदुकूलरत्ना-लंकारमभ्यर्णोपविष्टप्रेष्ठसध्रीचीजनं जातपरितोषा स्तोकमुपसृत्य विहित-प्रणाममाहूय गन्धर्वकमन्तिके न्यवेशयत् । परामृश्य च पुनः पुनः प्रणतशिरसमग्रहस्तेन मौलौ मलयसुन्दर्याश्चरणयोरपातयत् । ततोऽहम् 'देवि, पश्य । त्वत्प्रसादीकृतेन दिव्यपटरत्नेन पुनरसंभावितदर्शनं कुतोऽप्यानीय दर्शनायता परमबन्धुकल्पमेनं गन्धर्वकमभिप्रेतार्थ-तोऽधिकं झटित्येव मे संपादितमभिलषितम्' इत्यवोचम् ।

श्रुत्वा च मद्वचनमिदमुपजातविस्मया खेचरेन्द्रतनया विवर्त्य किंचिद्वदनमव्यक्तया वाचा काञ्चिराजपुत्रीमपृच्छत्—'आर्ये, पूर्वमपि किं कुमारेण दृष्टो गन्धर्वकः ।' सा प्रत्यवादीत्—'सखि, कुमारमेव पृच्छ । नाहमवगच्छामि वृत्तान्तमेतम् ।' ततोऽहमवदम्—'देवि,

न केवलमयं गन्धर्वकः। त्वमपि दृष्टा निर्विघ्ननिहितेक्षणेन दीर्घकालमस्य परमोपकारिणः प्रसादेन' इत्युदीर्य पूर्ववृत्तं चित्रपटवृत्तान्तमावेदयम्। अपृच्छं च तम् 'गन्धर्वक, तदास्मादन्तिकादुत्थाय क गतो भवान्। क स्थितो दिनान्येतावन्ति। किं कारणं चिरावस्थितेः। संवृत्तं कुतश्चाद्य विद्युदुन्मेष इव सहसा प्रादुर्भूतः' इति पृष्टः प्रहृष्टेन पूर्ववृत्तान्तं मया गन्धर्वकः समुद्भूतपूर्वानुभूतदुःखस्मरणलवबाष्पजलबिन्दुपूर्णलोचनो विनिःश्वस्य नीचाक्षरमवोचत्—'कुमार, किं कथयामि मन्दभाग्यः। तदा विमुच्य मत्तकोकिलोपवनमध्यमयोध्यानगर्याः प्रचलितोऽहमभ्युत्सुकतया तत्रैवाह्नि सायाह्नसमये त्रिकूटगिरिशिखरगोचरां खेचरराजधानीमव्रजम्। प्रविष्टश्चात्र दृष्टमात्रो हृष्टमनसा मित्रवर्गेण नीतो निजावसथमुपपादितातिथिसपर्यश्च प्रदोष एव गत्वा चक्रवर्तिनं विचित्रवीर्यमद्राक्षम्। आवेदितसर्वसंदेशश्च प्रभातसमये समासाद्य देव्या पत्रलेखयोपयाचितं शिशिरकालात्ययविहारक्षमं मलयाद्रिहरिचन्दनविमानमभिलषितगन्धर्वदत्तादर्शनः काञ्चिनगराभिमुखमचलम्। उत्तरीयाञ्चलनिबद्धनिश्चलसमरकेतुलेखश्च लङ्घयित्वा लवणजलराशिमुत्तराशाभिमुखमापतम्। प्रशान्तवैराश्रमसमीपे मलयपर्वतोपान्तवर्तिनः पारावारपुलिनादुच्चरन्तमतिकरुणमाक्रन्दशब्दमाकर्ण्य मनस्यकरवम्—'कः स्वभावमधुरस्वरोऽयमस्वैरमेवं विलपति' इति विचिन्त्य वियतोऽवतीर्णस्तिमिरतरुतलच्छायानिषण्णामितस्ततो लुलितविस्रस्तकेशहस्तामंसविन्यस्तवसनवल्कलप्रान्तविषमावृतपयोधरामधःकृतोत्पातवात्यया निश्वाससंहत्या शश्वदाबद्धशोषमधरपत्रमिव परित्रातुमश्रुधाराजलमजस्रमक्षिपत्राभ्यामुत्सृजन्तीमुद्बाष्पदृष्टिना समुत्सृष्टपूर्वदृष्टवन्यौषधिरसप्रलेपादिकर्मणा मुक्तमन्त्रपदापमार्जनेन पार्श्ववर्तिना

तापसीजनेन शोच्यमानामवनिपीठप्रसारितनिरायताङ्घ्रिद्वयामुदीर्णदुःखा-
तिभारगद्गदव्याहारेण दूरनिर्हारिणा स्वरेण समकालसंहृतसमस्तचिर-
कालचिन्तितमनोरथव्रातमन्तःकरणमाथिभिः करुणवचनैः पुनः पुन-
र्विधिमुपालभमानामीषद्गलितयौवनामनिन्द्यसर्वाङ्गीमेकामङ्गनामद्राक्षम् ।
उद्भूतपरमोद्वेगश्च भूत्वा पुरस्तामप्राक्षम्—'आर्ये, किमर्थमाक्रन्दसि'
इति । सा तदेव वचनमाकर्ण्य सत्वरोन्मीलितेक्षणा निपत्य पादयोरु-
पर्युपरचितकरसंपुटा सदैन्यमवदत्—'पुत्र, किं ब्रवीमि । कुरु मे
परित्राणमखिलगोत्रस्य । देहि दुर्लभैकापत्यप्राणरक्षाभिक्षाम् । इयमशेष-
दक्षिणापथक्षोणिपालस्य राज्ञः कुसुमशेखरस्य सर्वस्वभूता सर्वशुद्धान्त-
रमणीशिरोमणेरुदरसंभवा गन्धर्वदत्ताया मलयसुन्दरी नाम दुहिता ।
शत्रुविगृहीतेन पित्रा किमपि निश्चित्य चेतसा मन्त्रमर्धरात्रसमये
कृताभ्यर्थनेन समर्प्य मे सहसैव निष्कासिता काञ्चीनगरात् ।
अलक्षिता च नागरलोकेनानीत्वा तदनुजीविभिः स्थापितात्र निर्जने
तापसारण्ये । प्रतिपन्नमुनिकन्यकावेषा च कंचित्कालमपगतचापला
निश्चलैवावस्थितास्मिन्नद्य पुनरकस्मादेव वञ्चयित्वा मच्चक्षुरेकाकिनी
हेतुना केनाप्यनेकश्वापदाकीर्णमर्णवोपकण्ठपुलिनमिदमागता दृष्टा च ।
पृष्ठत एव निर्गत्य निपुणमन्वेषयन्त्या मयारण्येऽस्मिन्नुदीर्णरोषया च
निर्भर्त्सिता बहुप्रकारैः प्रथममुपजातपश्चात्तापया च पश्चात्सुचिरमनु-
नीतभीतया च श्रान्तेत्यविश्रान्तया सिक्ता कमण्डलुजलेन तथापेक्षया
नोत्तरं मे दत्तम् । अधुना च पश्यन्त्या एव मे विगतचेतना संवृत्ता ।
दृष्ट्वा च झटिति प्रन(ण)ष्टचेष्टामिमामचिन्तितोपनतकष्टेष्टविरहव्याकुली-
कृता कर्तुमसमर्था प्रतीकारमेवं पापकारिणी विलपितुमारब्धा । निशम्य
चेदं वचनमस्याः सशोकविस्मयः स्थित्वा मुहूर्तमवहितेन चक्षुषा तस्याः

कन्यकायाः शरीरचेष्टामसकृदालोकयम् । अवादिषं च योषितमिमाम्—'आर्ये, मा विषीद । विषविकारोऽयमस्याः समन्ततो वपुषि विलसितः । सचेतनाप्यसौ समर्था जीवितुम् । किं त्वममोघवीर्यदिव्यौषधिसमूहसंबाधमधुनैव गन्तव्यमनया स्थानम्' इत्युदीर्य किंचिदन्तस्मितश्चिन्तितवान्—'अहो विचित्रता कार्यपरिणतेर्या स्वशुद्धान्तसौधावबद्धवसतिरनेकलीलाविलासनिर्भरं भोगसुखमनुभवन्त्यद्य दिष्ट्या मया द्रष्टव्या' इति । चिन्तितम्, सैव चिन्तितानन्तरमेव भीमकान्तारमध्ये धरणितलनिषण्णा विगतचैतन्यविग्रहा दृष्टा महानुभावा **मलयसुन्दरी** । यदि कथंचिदहमनेनाध्वना नागमिष्यं कथमिमामिह स्थितामद्राक्षम् । सर्वथा दधत्याप्यवस्थामिमां जीवितव्यमनयेति मनसा विमृश्य निजविमानमध्ये सविधवर्तिनः सरस्तीरदेशादभिनवोद्धृतैर्नलिनीदलैर्मृणालकन्दैः प्रत्यग्रभग्नैश्चन्दनप्रवालैर्निषद्यामरचयम् । तत्र चातितीव्रविषदाहवेदनोपशमाय शनकैर्निधाय तां पिधाय च प्रसीयसा निजप्रावारेण सर्वाङ्गेषु जिगमिषुरन्वेषितानेक**मलयसुन्दरी**जीवितोपायैर्निःसहं **चित्रमाय**मवदम्—'सखे **चित्रमाय**, चलितस्तावदहमभिलषितमुद्देशम् । त्वया पुनरिहैव शोकापहारिभिर्वचोभिरार्यामिमामाश्वासयता दिवसमेकमासितव्यम् । यदि तावदेषा पुण्ययोगादपगतविषोपद्रवा शीघ्रमेव संवृत्ता, ततोऽहमधुनैव सार्धमनया समागत्य गतविलम्बः समादिष्टमम्बया विधाय **गन्धर्वदत्तादर्शनमयोध्यायां** पुरा कुमारस्य यत्पुरः प्रतिपन्नमालेख्यदापनादि प्रयोजनं तदहमात्मनैव सर्वं करिष्यामि । अविलम्बो दैवयोगात्संजातः । ततः क्षिप्रमेव भवता परित्यक्तपुरुषरूपेण देशान्तरप्रापणक्षममलक्षितं किमपि प्राणिरूपं रक्षतात्मानमादरेण रथनूपुरचक्रवालं कुमारो नेतव्यः । तत्र हि गतेनानेन महती कार्य-

सिद्धिरस्माकम्' इत्यभिधाय सत्वरस्तस्य दारुभवनस्य शिखरभूमिकामध्यरोहम् । उत्पतितश्च दूरमनादरप्राप्यविविधमणिदिव्यौषधिगणामेकशृङ्गवैताढ्यशृङ्गिणो रत्नरालाटवीं प्रति प्रचलितः प्रकटितातिपटुरंहसा चटुलचलितपट्टांशुकपताकापाणिभिर्ध्वजमुञ्जैर्विभाजतेव मार्गघटितानि मेघवृन्दानि दूरीकुर्वतेव गर्वोद्धुरानूर्ध्वपथचारिणः धारणाध्वगानम्बरजलधिलङ्घनयानपात्रेण तेन प्रधावता यापितेन निर्दयं दारुभवनेनोह्यमानो मनागपि लक्षितक्षितिधराधरसरिद्ग्रामनगराटवीकर्पटविभागः क्षणेनैव दक्षिणं भारतार्धवसुधोपकण्ठमध्यासितवान् । अथ वृथैव शिखराग्रभूमावेकशृङ्गस्य तुङ्गतरुशिखरशाखाविलग्न इव निश्चलीभूते तत्र यात्राभङ्गविस्मितः पुरस्तादभिमुखीभूतमुल्लिखितसर्वाङ्गप्रियङ्गुपादपप्रकाण्डसरलाभिरामश्यामवपुषमीषन्मेदुरोदरनिमिषितपक्ष्मणा परुषतारकेण सपरुषमेव किंचिच्चक्षुषा कृतावेक्षणं दक्षिणकरगृहीतामग्रभागविधृतकतिपयकोमलच्छदामायामिनीं न्यग्रोधवीरुधमभीक्ष्णमुत्क्षिपन्तमेकमत्युग्रतेजसं पुरुषमद्राक्षम् ।

दृष्ट्वा च किंचित्प्रन(ण)ष्टधैर्यः 'नूनमस्य प्रभावोऽयम्' इति विचिन्त्य दूरस्थितोऽपि बद्धाञ्जलिस्तमालपम्—'महात्मन्, किमेतदनिमित्तमेव स्तम्भितं त्वया मे विमानम् । किं चाग्रतस्तरलतामादाय स्थितो निवारयसि मे गमनम् । अपसर मना(ग)ग्रतो यावदहमिमां प्रापय्य पुरतः पर्वतोपकण्ठे कण्ठगतजीविकां द्रविडराजदुहितरमौषधीरसबलेन विगलिताशेषविकारां करोमि । मा विनैव कारणेन विवक्षितप्राणिरक्षणोद्यतस्य मे विघ्नतां व्रज । स एवं प्रणतशिरसाप्रियवचोभिर्वारंवारमुपयाच्यमानोऽपि न यदा मार्गममुञ्चत्तदाहमुपजातखेदः सरोष इव परुषाक्षरमवोचम्—'महाभाग, वपुषा दिव्य इव दृश्यसे, कर्मणा तु

नारक इव निकामं क्रूरहृदयोऽसि । येनैवमादृतेन मया प्रतिकलमुपक्रम्यमाणोऽपि वज्रपाषाण इव मार्दवं न मनागपि स्पृशसि । कथय केन प्रकारेण प्रगुणयामि त्वाम् ।' स एवमुक्तमात्र एव मया रोषरक्तेक्षणो ललाटतटविघटितभङ्गुरभ्रकुटिराविष्कृतवेतालरूपः 'रे रे दुरात्मन्, अनात्मज्ञ, विज्ञानरहित, परिहृतविशिष्टजनसमाचार, विगतपारसंसारपल्वलपङ्कशूकर, महापापकारिन्, अखिलदुःखितप्राणिवत्सलमतिविशुद्धधर्ममार्गविनिविष्टदृष्टिमविनीतजनशासनाय प्रभुजनेन नियुक्तं सर्वदा शान्तायतनवासिनं मामपि महोदराख्यं यक्षसेनाधिपमधिक्षिपसि । रे विद्याधराधम, न जानासि मे स्वरूपम् । यादृशोऽहं तादृगहमेव । नान्यः । कस्य चामुखेन ख्यापयामि प्राक्तनं ते निजकृत्यम् । येयमब्धिप्रविष्टेष्टदर्शनदुःखविक्लवा पञ्चशैलकजिनायतनपर्यन्तवर्तिनः प्राकारवलयाकृतप्रपाता समुद्रजलसंगममप्राप्नुवत्येव नीत्वा काञ्चीमुपजातकरुणेन मया स्थापिता चित्रशालपर्यन्ते, सेयं नृपतिकन्या विगतन्यायोऽपि विद्याधरवितीर्णहरिचन्दनयोगतिलकप्रभावान्तर्हितामग्रतोऽपि स्थितामपश्यन्निमामपहृता मे प्रेयसी कैश्चित्' इति मन्यमानस्तत्रैव लवणार्णवे मुक्तदेहः समुत्क्षिप्य नीतो मया स कर्णधारः सपत्निपरिवारः स्वशिबिरवाह्यायाम् । सनौको राजपुत्रः सोऽपि संनिधौ नास्ति । तदरे दुराचार, क्रूरहृदयोऽहम् । न त्वमसि, यातिविस्तीर्णमनिवार्यमभ्यर्णवर्तिनं च विहाय व्योममार्गमनेकसुरसिद्धसाध्यविद्याधरवृन्दवन्दनीयस्य भुवनत्रयप्रथितयशसो विशिष्टदेवताविहितनिष्पत्तेरादिदेवतायतनमण्डपस्य शिखराग्रभागेन लीलया निबद्धलोलध्वजपताकामुत्तमं यानमास्थितो यातुमभिलषति । मां च करुणया पुरोभूय कृतनिषेधम् 'अपसर' इति वारंवारमविशङ्कितस्तर्जयसि । गतोऽस्याध-

स्तादनेन दुश्चेष्टितेन। क्व यासि। दृष्टः पतितोऽद्य दृष्टिगोचरे महोद्रस्य। हता हताश, ते विद्याधरकृता विहायसि चिरंतनी सा यदृच्छाचारिता यदि परमिदानीं पक्षविक्षेपेण देवतायतनानि लङ्घ(य)सि। लधिमानमाश्रित्य शरणार्थमालोकयसि। किमलीकमेवाशानिराशीकृतोऽसि। दुष्कृतिकृतान्तेन न चिरादपि प्राक्तनीं प्रकृतिमासादयिष्यसि विनासमत्स्वामिनीप्रसादम्' इत्युदीर्य दत्तहुंकारः स्थानस्थ एव तद्विमानं कथंचिदुत्क्षिप्य दूरमदृष्टपारे सरसि न्यक्षिपत्।

क्षणेन च निमज्जनपतनवेगादुन्मग्नवति तस्मिन्नकस्मादेव च शुकभावमापन्नमात्मानमद्राक्षम्। उपजातमूर्च्छश्च तिर्यग्जातिगमनदुःखावेगेन गमयित्वा, मुहूर्तमुड्डीय च द्वारदेशादेकनिर्यूहकनिविष्टः, 'क्व यामि, क्व निपतामि, किं करोमि, कमुपैमि शरणम्, को मां व्यसनसंकटादितः क्रष्टुमलम्' इत्यादि तत्तद्बहु विचिन्त्य, कुतोऽप्यदृष्टप्रतीकारस्तत्रैव देवतायतनमण्डले श्लथीकृतस्थानान्तरगतिः स्थितिमकल्पयम्। 'अलीकमेव हितलोकस्य दुःखहेतुना प्रकाशितेनात्मना न किंचित्फलम्। अलब्धविश्रान्तिनायमायुःपरिसमाप्तिकालं यावदनुभाव्यो मया शुकभावः' इति भावयित्वा च मनसि कस्याप्यदर्शिताभ्यर्थनो बन्धुजनमप्यनालपन्, सुहृद्वर्गमपि परिहरन्, गुरूणामपि निगोपयन्नात्मवृत्तम्, अवनीपतिपरिग्रहलोकदर्शनमात्रसंत्रातजीवितः प्रभातसायाह्नेषु कृतदेवतागुरुनमस्कृतिरेकतरुशायिभिः क्रूरात्मभिर्वनविहङ्गैः सार्धमकृतसङ्गः स्नेहलिङ्गावधीरणपरोऽपि साधारणजातिजनितप्रीतिभिरनेकैः शुककुलैरागत्यागत्य परिवृतस्तत्रैव देवतायतनकानने परिभ्रमन्, सर्वतस्तरुफलाहारसंपादितशरीरवृत्तिरेतावन्ति दिवसान्ययापयम्। पूर्वजातिस्मृतिस्तु तिर्यक्त्वेऽपि मे नापयाता। किं तेनैव पश्चादुत्पन्नकरुणेन रक्षिता

यक्षेण, किं वा शुकत्वमपि मायामयं मयि निवेशितम्, येन तत्काल-मत्युपरितनभूमिकामेत्य भर्तृसुतया मलयसुन्दर्या यथा सवस्त्राञ्चल-ग्रन्थिमुन्मोच्य वाचितो वारंवारमस्पष्टलिपिरिष्टलेखः, यथा सरस्तीर-तटनिविष्टेयमम्बया दृष्टा, यथा समाख्यातनिखिलप्राच्यवृत्तान्तजातो-त्कण्ठया कठिनमाश्लिष्य देव्या पत्रलेखया दिव्यं देवतायतनमानीता, यथानीयमानापि तयात्यादरेण यातुमनिच्छती खेचरपुरं सपरिचारिका तत्रैव विभूमिमठमध्यभूमिकाकृतास्थितिः स्थिता, यथोद्यानदीर्घिकारोधसि कुमारेण सार्धमारब्धसंलापायाः प्रस्तावमुपलभ्य याचिताज्ञोऽहमागतः समीपमस्याः, यथा 'समीपस्थेन दूरस्थितेन वा विपदमापन्नेन वा भवता विस्मर्तव्य एष सहसास्माभिः क्षणमात्रमुपजातो वचनपरिचयः' इति पुरा भाषितमनुस्मृत्य वचनं कुमारस्य नीतो मया लेखः, यथा च कमलगुप्तेनार्पितं प्रतिलेखमादाय शिबिरादागतः प्रीतमनसा कुमारेण सादरं समुत्क्षिप्य स्वाङ्कमारोपितोऽहमित्यादि सर्वमद्यापि पूर्ववृत्तं प्रत्यक्षमिव पश्यामि। केवलमियं भर्तृदारिका मलयसुन्दरी पतित-मात्रैव तत्रादृष्टपारसरसि कथमपेतविषविकारा संजाता, कथं च निर्निमित्तमेवाहं प्राक्तनं पुरुषरूपमापन्नः, इति न जानामि' इत्यादि यथावृत्तमावेद्य निजवृत्तान्तमुपशान्तवचसि गन्धर्वके समं मलयसु-न्दरीतिलकमञ्जरीभ्यामन्येन चाभ्यर्णवर्तिना कन्यान्तःपुरजनेन सार्धमाबद्धविस्मयोऽतिचिरमतिष्ठम्।

आदाय च क्षणेन तं तदानीतलेखमुद्वेष्ट्यावधार्य च पुनः पुनरुत्सु-कस्त्वां द्रष्टुमन्तिकोपविष्टां मलयसुन्दरीमश्रावयम्—'स्वस्ति अभिम-तप्रशस्तोद्देशवर्तिनः परमाराध्यानखिलविश्वोपकारिणः कुमारहरिवाहन-पादपद्मान्। लौहित्यतटबन्धोर्जयस्कन्धावारात्सराजकः कुशली कमल-

गुप्तः क्षितितलसङ्गिना प्रणम्योत्तमाङ्गेन सविनयं विज्ञापयति— यत्किंचित्कृतधिया समाज्ञापितं लेखमुखेन, यच्चान्यदाभाति युक्तम्, तदनुक्तोऽपि सर्वमात्मनैव राजकार्यं प्रतिकरिष्यामि। दुष्करः प्रतिविधातुमेक एव। यो युवराजसमरकेतुस्नेहः, स ह्यवध्यो वृद्धोपदेशानामगोचरः सुहृदाश्वासनानां न जाने त्वत्प्रवासे किं व्यवस्यतीति महती ममाशङ्का।' श्रुत्वा च सविशेषं त्वदभिधानमुद्भूतशङ्का 'किमन्योऽप्यस्ति युवराजसमरकेतुर्यस्यैवंविधो दुःप्रतिविधेयः स्नेहः' इति चिन्तयन्ती चकितमानसा कमलिनीव प्रचण्डहिमवाताहता मलयसुन्दरी झगिति विच्छायतामगच्छत्। दृष्ट्वा च मां परिम्लानवदनमुपलक्ष्यमाणनिजदेशगमनेङ्गिताकारमप्रयुक्तापि स्तोकं परिवर्तितमुखी मन्मुखनिखातचिन्तास्तिमितलोचनारविन्दां विद्याधरेन्द्रदुहितरमवादीत्—'सखि, शुकोपनीतेनामुना निजपरिग्रहलोकलेखेन व्यग्रतां क्षणेनैव नीतः स्वशिबिरं कुमारः प्रयातुमभिलषति। वक्तुमक्षमश्च स्वयं त्वदनुज्ञापनाय मन्मुखे वारंवारमवतारयति चक्षुः। तद्विसृज्यतामिदानीमेवायम्। अस्वस्थमनसा न किंचिदमुना धृतेन। यातु तावन्निजनिवासम्। आलोकयतु पर्याकुलं परिग्रहलोकम्। अस्तु निर्वृतमनाः। पुनरागमिष्यत्येव चाद्यप्रभृति दूरेऽवस्थितः सुधांशुरिव सिन्धुवेलायाः समासन्न एव कल्याणभागिन्या यदैव स्मरिष्यसि तदैवागमिष्यति। किं च प्रकृतिपेशलः प्रायशोऽयमपि सर्वातिशायिना सौहृदेन कलाशास्त्रविचारकौशलेन च त्वदीयेन बुधजनादाकर्णितेन च कृष्यमाणो गतोऽपि रसिकतया न शक्ष्यति चिरं स्थातुम्' इति भाषमाणां तामनिच्छुरिव मोक्तुमवनतानना स्थित्वा चिरं तिलकमञ्जरी स्वैरमवदत्—'सखि, किमर्थमभिदधासि माम्। त्वमेव जानासि

यत्कर्तुमुचितम्' इत्युदीर्य कार्यक्षमं गमिष्यतो मम प्रागेव **साकेत**-नगरोद्यानपरिचितं **चित्रमाय**संज्ञं नभश्चरमनुचरत्वमनयत्। प्रस्थितं च तं सहचरीचित्तवृत्तिज्ञा समाहूय **मलयसुन्दरी** सादरमवोचत्—'भद्रमुख, गतमात्रेण त्वया प्रकाश्य पुरतः परिग्रहप्राग्रहरलोकस्य पुनरपीह प्रापणीयः कुमारः' इति। ततोऽहमुत्थाय विष्टरादास्य-विनिविष्टदृष्टिः प्रत्येकमापृच्छ्य **मलयसुन्दरी-तिलकमञ्जर्यौ** तदा-दिष्टेन तत्क्षणादिष्टरणरणकशून्यदृष्टिना कुमारीजनेनानुव्रज्यमानो गत्वा-न्तःपुरद्वारमारुह्य गत्वरपरिस्कन्दसत्वरोपढौकितमनुत्तरं यानमादरनिव-र्तितसहायातशुद्धान्तलोकः स्वमण्डलाभिमुखमचलम्।

निर्गत्य च क्रमेण नगरात्प्रस्थितोऽम्बरपथेन पश्यन्पुरोयायिना विद्याधरगणेन वारंवारमावेद्यमाननानाविधविशेषानवनितलजुषः पूर्व-दृष्टानदृष्टहारिणस्तांस्तानुद्देशानचिरेणैव देशमात्मीयमासदम्। उपजात-परितोषश्च तदवलोकनेन दीर्घाध्वलङ्घनादीषदवसन्नाग्रतः सरससहायं **चित्रमाय**मवदम्—'सखे, सेयमटवी, स चायमद्रिर्यतोऽपहृत्य कथमपि समुत्पन्नगमनोत्पतनशक्तिना स्वेनैव सेनाद्विपेन प्रापिता वयं त्वद्विषयम्। ततः स्थिरो भव। क्षणमात्रमत्रैव कुर्मो विश्रामम्। आसन्नमेवाग्रतः शिबिरमास्त' इत्यभिधाय यानादवातरम्। आसीनश्च निर्झरासन्नतरुतले यावदतिवाहयामि कंचित्कालं तावदेकस्मिन्ननेकतालदघ्ने गिरिनदीमहा-ह्रदपयसि तत्क्षणकृतावगाहः प्रथमजलधरासारसलिलप्लुत इवाप्रतिम-दन्तोऽद्रिरेकः सप्रतिमदन्तो महाकायः करी तमुद्देशमागच्छत्। दृष्ट्वा च तमितस्ततो गमितचक्रवाकमिथुनमुन्मथितकमलाकरच्छायं समयमिव सायंतनं ध्वान्तवलयेन परितः प्रसर्पता परिगतमरण्यगज-यूथेन जातप्रत्यभिज्ञश्चित्रमायमवदम्—'सखे, पश्य चित्रम्। येनोत्पत्य

पवनवर्त्मनि प्रस्तुतापहरणेन तस्मिन्नदृष्टपारसरसि तावके निपत्य निक्षिप्ता वयम्, यश्च तत्रैव पञ्चत्वमुपगतः शोचितो बहुप्रकारं पुरास्माभिः, सोऽयमग्रत एवागतः प्रतिपक्षयमदण्डो वेगदण्डः ।' स एवमुक्तो मया विहस्य किंचित्प्रावोचत्—'कुमार, दुर्घटमिदम् । नहि भूमिगोचरकरेणुरन्तरिक्षेण संचरति । न च पञ्चत्वं गतस्तेनैव वपुषा पुनः स्वस्थानमायाति । तन्न सोऽयम् । अन्यः कोऽपि । एष तु स एव त्वदीयः स्कन्धावारवारणः' इति । तदाकर्ण्य पुनरपि तमब्रवम्—'**चित्रमाय,** यद्येवं तदानयैनम् । यथैव प्रोषिता तथैवाश्रयामः शिबिरम्' इति भाषमाणस्तेनानीतमधिरुह्य तं द्विरदमीषन्मुकुलिताशामुखेऽहनि सहायापेक्षीव पुराणपुरुषेण सप्तसप्तिना सार्धमस्तक्षितिधरस्थितिर्लौहित्यमगमम् । अवलोकनजातहर्षेण च सतर्षमुपसृत्योपसृत्य राजपथवर्तिना प्रणम्यमानः पौरलोकेन सर्वतश्चलितसंभ्रान्तकिंकरविरच्यमानद्वारवन्दनमालमारब्धमङ्गलोच्चारचारणालापजनितपरिजनोल्लासं स्वावासमव्रजम् ।

तत्र च स्थित्वा द्रष्टुमागतेन प्रणयिना राजलोकेन सहितः प्रवासवार्तया मुहूर्तमर्पितचारुवसतेर्विधाय विविधां **चित्रमायस्य** सायंतनसपर्यां पर्यङ्कमजुषम् । निषण्णश्च तस्मिन्सविस्मयेन मनसा मुहुर्मुहुरुदग्रतां **वैताढ्य**नगवरस्य, रचनागुणं **रथनूपुरचक्रवाल**नगरस्य, गम्भीरतां विद्याधरराजराजकुलस्य, कमनीयतां कन्यान्तःपुरस्य, वत्सलतां **मलयसुन्दर्याः**, प्रभविष्णुतां **चक्रसेन**दुहितुः, विलासक्रमं कुमारीजनस्य, चतुरतां खेचरस्य, चिन्तयन्नायताध्वखिन्नोऽप्यतिचिरेण निद्रामवापम् । यापयित्वा च किंचित्सावशेषामुषामुत्थाय कृत्वा प्रत्युषःकृत्यमनुगतो भृत्यलोकैरागत्य सद्यः प्रमृष्टमणिकुट्टिमोत्सृष्टनवनीरजोपहारमास्थानमण्डपागारमध्यतिष्ठम् । दृष्ट्वा च तदशेषतः समुपविष्टदर्शनायातसाम-

स्तपौरामात्यसेनापतिसमाकुलमुपजातशङ्कः सकम्पमलपम्—'अहो, किमद्यापि समरकेतुर्नायाति ।' तच्चाकर्ण्य मद्वचनमेको राजपुत्रः स्थित्वा मुहूर्तमवनताननः सलज्जाविषादमवदत्—'कुमार, यदैव लब्धस्त्वदन्तिकादागतः कुशलोदन्तलेखस्तदैव युवराजसमरकेतुः कस्यचिदप्यनावेद्य निजयात्रामर्धरात्रसमये निर्गतो निजावासात् । व्रजंश्च विजयार्धभूधराभिमुखमरण्यमध्यागतेन प्राग्ज्योतिषेश्वरभ्रात्रा मित्रधरेण दृष्टो निरुद्धश्च । निर्बन्धेन न च कथंचिन्निवृत्तः । ततोऽहमाकर्ण्य तद्वचनमिदमाकुलमनास्त्वन्निवर्तनाय तत्रैव क्षणे प्रगुणीकृततुरङ्गप्रायसैन्यः सहसैव ध्वजिन्या ध्वजीकृत्य यक्षाधिपराजरक्षितां ककुभमुदचलम् । प्रचलितं च मामनुगम्य कतिचिद्दिनानि सोद्वेगचेताश्चित्रमायः शनैरवोचत्—'कुमार, भर्तृदारिकया मलयसुन्दर्या त्वदानयनाय वारंवारमादिष्टोऽहम् । तदादिश किं मया कर्तव्यम् ।' अहं तु गमनोत्सुकोऽपि तत्र यन्त्रितस्त्वत्प्रेमनिगडेन । निःश्वस्य दीर्घमनवरतदोलायमानचेताः स्थित्वा मुहूर्तमुत्तरश्रवणोन्मुखं चित्रमायमब्रवम्—'भद्रमुख, गच्छ त्वम् । आवेदय मलयसुन्दर्या यथाश्रुतं वृत्तान्तमेतत् । ब्रूहि चैनां मदीयवचनेन—कथमस्वस्थमानसोऽहमागच्छामि । कथं चादृष्टयुवराजसमरकेतुरागतोऽपि ते मुखं दर्शयिष्यामि । तन्न कार्योऽधुना तावदस्मदागमनानुबन्धः । विधेयमवधीरितान्यकृत्येन नित्यमेव मया तदनुसरणम् । त्वया पुनरिमं मत्समारम्भमात्मीयमेव कार्यमवधारयन्त्या न कार्यो मनसि खेदः । किं च देवी तिलकमञ्जरी यथा स्वकार्यपरत्वदोषमारोप्य कुप्यति न मे, यथा च प्रवर्धमानप्रसादा प्रतिदिनं भवति, तथा स्मरति मदभ्यर्थनामिमां प्रवर्तेथाः' इत्युदीर्य तं व्यसर्जयम् । गते तस्मिन्ननवरतदत्तप्रयाणः

प्रतिमार्गमासन्नवर्तिषु ग्रामेषु नगरेष्वाश्रमेष्वरण्येषु चानुमीयमानगतिषु देशेषु प्रतिदिनं भवन्तमन्वेषयन्निमेषमप्यकृतविश्रामः सुरभिमासमिव समदकलकण्ठीरवममानुषमरण्यमविशम् । कदाचिल्लङ्घयित्वा दीर्घमध्वानमावासितायां ध्वजिन्यामपराह्णसमये विधाय मध्याह्नकृत्यं निर्गत्य गेहात्प्रचलितः पादचारेण शिबिराद्बहिः शैलकक्षात्समागच्छन्तमभिमुखमुन्मुखैरवलोक्य दूरादेव सैनिकैराख्यातमात्तशस्त्रपुरःसरद्वित्रिपुरुषमनवरतपार्ष्णिप्रहारतरलितेनोत्तालगतिना प्रसर्पता तुरङ्गेण प्रकटितप्रभुकार्यसंपादनानुबन्धं गन्धर्वकमपश्यम् । तं च दूरादेव तुरगादवतीर्णमुपसृत्य किंचिदत्यादराञ्चितेन शिरसा सरभसकृतप्रणाममुपदर्शितस्मितः पुनरुक्तमेह्येहीति भाषमाणो निकटमानीय विकटविस्तारिताभ्यां भुजाभ्यामाकृष्य कण्ठे हठादाश्लिक्षम् । क्षणेन च कृतानामयप्रश्नः परिक्रम्य हस्ताग्रविधृतेन सार्धमितस्ततस्तेन किंचिद्व्यवहिते महति निम्नगातीरवानीरगुल्मे नीरनिर्धौतमेकमाक्रम्य विपुलं शिलातलमुपाविशम् । अपृच्छं च तं पुरस्तादासीनम्—'गन्धर्वक, तदा प्रस्थिते मयि कः प्रवृत्तो वृत्तान्तः किं कृतं मलयसुन्दर्या । केन स्थिता व्यापारेण देवी तिलकमञ्जरी । कुतो वयमरण्यस्थास्त्वयावगताः । किमर्थमेकेन वाजिना विगतपरिवारः कार्यिणेव प्रभुणा प्रणुन्नस्त्वरया त्वमेवमायातः' इति । स व्याहरत्—'कुमार, सर्वमावेदयामि । तस्मिन्नवसरे तमवधार्य शुकरूपेण शिबिरादाहृतं मया कमलगुप्तप्रस्थापितं लेखमुत्थिते त्वयि प्रस्थितेन त्वामनुगन्तुमनुरागतरलितेन धावता किरातवर्षवरकञ्चुकिप्रायलोकेन रिक्तीकृतनिशान्तं सार्धमन्तःकरणेन देव्याः सर्वमपि शून्यमन्तःपुरमजायत । प्रयातं च वर्त्मनि विलोकितुं देवमाकुलाभिरनिमेषनिश्चलाक्षयष्टिभिरारुह्यारुह्य बालिकाभिरवलम्बिताः सद्मा-

लभञ्जिका इवाभ्राजन्त सौधाग्रवलभीशातकुम्भस्तम्भाः। काञ्चीराजदुहिता तु चेतसा चिन्ताहृतेन दुरापास्तदेहादुत्तरचितेव निभृतनिस्तरङ्गावयवा स्थित्वा मुहूर्तमेकशृङ्गाद्रिगमनाय देवीं तिलकमञ्जरीमपृच्छत्। सा तु देवस्य गमने दृढोद्विग्नचित्ता तां विना विनोदयितुमन्तःशुचमपारयन्ती 'अत्रापि सखि, समुच्छ्रितानेकशृङ्गस्त्वदेकशृङ्गस्पृहामपहरति मत्क्रीडाद्रिः। इहापि स्वेच्छया स्वच्छविपुलानि समुपलभ्यन्ते स्नानयोग्यानि कृत्रिमापगासलिलानि। अस्मिन्नपि कमलपुष्करिणीतटेषु निर्वहति निर्विबाधो ध्यानजपविधिः। अत्रापि प्रमदवनकच्छेषु सुलभः कन्दफलमूलादिराहारः। किमधिकम्। तत्र गता साधयिष्यसि समाधिमथवा स्वयं दर्शयामि' इत्यभिदधाना समाकृष्य तां बलादुपरितनवल्कलाञ्चले परिस्खलच्चरणयुगला निजोद्यानमनयत्। तत्र च पुरःस्थिता तद्दर्शनापदेशेन यत्र स्थितम्, यत्र विहृतम्, यत्र विश्रान्तम्, यत्र प्रपञ्चिताः परिहासालापाः, यत्र संचारिताः स्निग्धदृष्टयः, येऽभिनन्दिताः सविस्तरोदीरितगुणेन, येषूपदिष्टस्तत्क्षणोपजनितपुष्पफलसंपद्वृक्षवल्लीदोहदविधिः, येषु संस्कृतानि स्वयमालवालानि सुकृतिना, यत्र कलासु कुशलाभिरन्तःपुरविलासिनीभिः सह कृतः क्रीडाविवादः, यत्र निर्वर्तितं मध्याह्नमज्जनकर्म, यत्र निर्मापितोऽभिमतदेवताभ्यर्चनविधिः, यत्र चाभरणमालावस्त्रप्रसाधनानां कृतः सुकृतभागिना परिभोगः, तांस्तानुपवनोद्देशान्दर्शितानालीजनैः पुनः पुनरतृप्ततया सबहुमानमालोकयन्ती सुचिरमितस्ततो व्यचरत्। गता च स्वमवरोधनं तदनुरोधबद्धस्थिरावस्थायाः 'प्रमादिनि, विनाभ्यासेन संप्रत्युपेयुषो निरवशेषविद्यापारदर्शिनः कुमारहरिवाहनस्य कतरदात्मीयकौशलं प्रकटयिष्यसि' इति तर्जिता रहसि काञ्चीराज-

सुतया। विहस्य मन्दं कदाचित्कृत्रिमाद्रिशिखरवर्तिनि स्मरायतने देवतार्चनव्यपदेशेन द्रुतगृहीतमुक्तभ्रामररागामनुरागनिगडितगमनसिद्धाध्वन्यगणवितीर्णकर्णां रत्नवीणां वादयन्ती, कदाचिदन्तिकन्यस्तविविधवर्तिकासमुद्गा प्रगुणीकृत्य परिचारिकाभिः पुरोऽवस्थापिते पृथुनि चित्रफलके निपुणमालोच्यालोच्य मकरकेतुबाणव्रातविद्धा देवस्यैव रूपं विद्धमभिलिखन्ती, कदाचिदुपरितनसौधशालारचिततरङ्गा समग्रसोपाङ्गनाद्या वेदनिष्णातासु प्रकृष्टनर्तकीषु प्रयत्नरक्षितमक्षुण्णमन्यैरभिनयाङ्गहारकरणविशेषविषयं प्रयोगजातमारोपयन्ती, कदाचित्प्रहृष्टमानसा द्रष्टुमागतं मामेव 'गन्धर्वक, कथय कथमम्बासमादेशाद्गच्छता **सुवेलभूधरमयोध्यायामीक्षितस्त्वया कुमारहरिवाहनः**। कथं दर्शितास्य चित्रपटवर्तिनी मत्प्रतिकृतिः। किमुक्तमवलोक्यतामाननम्। कियन्तं कालममुना सह प्रवृत्तोऽस्मत्कथासंलापः' इति पुरा कन्यान्तःपुरगतेन देवेनैव सूचितं पूर्ववृत्तमसद्वृत्तान्तमावर्त्यावर्त्य पृच्छती, कतिपयान्यपि दिनान्यनयत्। कियद्वा कथयामि—

तापं तन्वति वारिदात्पय इव त्वद्विप्रयोगे दृढं
दुर्वारोत्कलिकां दलैरभिनवैरम्भोजिनीनामपि !
पक्षोल्लासितरंहसोऽभिसरसामालीं कलध्वानिनः
कादम्बा निपतन्ति मानसभुवो वेगादुपेत्याधुना ॥

तन्वङ्ग्यास्त्वमिति प्रसादविशदं नासीति खेदालसं
चक्षुर्द्वारपथावतारिणि जने व्यापारयन्त्या मुहुः।
हर्षार्तिप्रभवाः प्रतिक्षणभवत्स्वेदाम्बुदाहज्वरे
बाष्पाम्भःकणिकाः पयोधरतटे पुष्यन्ति शुष्यन्ति च ॥

अद्य तु प्रातरेव निजनिवासप्रासादपृष्ठे कृतावस्थाना नगरपरिसरप्रदेशदर्शनव्यपदेशादागमनमार्गमवलोकयन्ती देवस्य दक्षिणदिगन्ता-

पतन्तमपगतोत्साहं कतिपयसहायं **चित्रमाय**मद्राक्षीत्। दृष्टमात्र एव च तत्र निश्चितत्वदीयावस्थाना विहस्य सविषादमानने **मलयसुन्दर्याः** चक्षुरक्षिपत्। असावपि विलक्षदृष्टिः क्षणेन द्रष्टुमागतं दूरादेव तमपृच्छत्—'**चित्रमाय**, कुमार**हरिवाहनः** किमिति नायातः।' स तु स्तोकमुपसृत्य विहितप्रणामः प्रावोचत्—'देवि, विज्ञापयामि। अस्त्युदग्रस्वनखराग्रहेतिखण्डितारातिकरिसंहतिः सिंह इव **सिंहलेश्वरस्य चन्द्रकेतो**रात्मजन्मा जन्मनैव सह समुत्थितेन स्थास्नुना समितिषु भुजस्तम्भसामर्थ्येन **समरकेतु**रित्यधिगतयथार्थनामा द्वितीयमिव हृदयमद्वितीयसौहृदः सुहृत्कुमारस्य। स पुनरधुना मयैव **गन्धर्वक**प्रार्थितेन भर्तृदुहितुस्**तिलकमञ्जर्याः** प्राभृतं कर्तुमात्तद्विरदरूपेण लौहित्यतटपर्वताटव्याः कृतापहारं कुमार**हरिवाहन**मनुसरन्नर्धरात्रसमये विनिसृत्य शिबिरादसिलतामात्रसहायो भयानकानेकसत्त्वसंचारदुरवतारमुत्तरदिगन्तकान्तारमविशत्। कुमारोऽपि सांप्रतमितो गतः स्वावासमासन्नलोकादाकर्ण्य तमरण्यप्रविष्टमपहृतः स्नेहेन कर्तुमिव कृतप्रतिकृतमाशागृहीतो ग्रहग्राम इव लवमप्यकृतविश्रामः परिभ्रम्य भूयांसि मण्डलानि तदेव शून्यं वनमविक्षत्। न तु क्वापि मित्रमद्राक्षीत्' इति वदत्येव तस्मिन्नतर्कितोदीर्णदुर्वारशोका 'हा समस्तलोकलोचनसुभग, हा निरन्तरोपभोगलालित, हा विहितपरमोपकार, कुमार**हरिवाहन**, तवाप्ययं सुकृतकर्मा दुरात्मना दैवेन विषमवनवासदुःखप्राप्तिहेतुर्विहितः' इति वदन्त्येव निश्चलनिमीलितेक्षणा **मलयसुन्दरी** मोहमगमत्। तां च तदवस्थामवेक्ष्य मुक्तायताक्रन्दं सुता **खेचरेन्द्रस्य**—'हा प्रियसखि, त्वमपि दूरीकृतसकलसंज्ञा संगता परमवैसम्येण विक्लवीकृता शोकेन' इत्युदीर्य स्वहस्तकृतवीजनालब्ध

चैतन्यां तामकार्षीत् । अभाषत च—'भगिनिके, स मित्रं कुमारस्य समरकेतुः किं तवापि पूर्वपरिचितो येन विहितप्रशंसा तमनुशोचसि । किं च स यथा कुमारस्य न तथा तवापि कारणमरण्यवासस्यास्य संपन्नः । कथय मे तथ्यम्' इति तया वारंवारमनुयुज्यमाना विहस्य द्रविडराजदुहिता सव्रीडमभ्यधात्—'अयि नितान्तग्राहिणि, गृहाण तावन्मूकताम् । न जाने कियन्तमद्यापि कालं कुसुमसुकुमारकायस्त-मेकान्तदुःसहं कान्तारवासक्लेशमनुभविष्यति कुमारः, इति चिन्तयन्ती न किंचित्क्षमा वक्तुमहमन्यत् । सखि, किमर्थं पुनरसौ कुसुमसुकुमार-कायस्तमेकान्तदुःसहं कान्तारवासक्लेशमनुभवति । यावदागत्य संप्रति विविक्ते भूरितरसान्द्रच्छायभूरुहि त्वदाश्रमवने कृतस्थिरावस्थितिः सर्वतो विचरद्भिरनिवारितप्रसरैर्नभश्चरभटैर्न तदनाकुलो मित्रमात्मीय-मनवरतमन्वेषयते' इति जातरोषायामिव प्रजल्पत्यां भर्तृदुहितरि सहासवचना मलयसुन्दरी वाचमसृजत्—'अयि मुग्धे, किमेतत् । तदायत्तमवनीचरो ह्यसौ सर्वतोऽप्यवारितगतिर्गिरिरिव विगतपक्षो विहायस्यक्षमः संचरितुम् । आकर्ण्य चैतदुपलब्धावकाशा विष्वगव-लोक्य योग्यतावलोकिन्या दृशा प्रत्येकमन्तिकस्थमनुजीविलोकं निवार्य च कथंचिदादेशमिव याचितुमधिज्यधन्वना कुसुमकार्मुकेण सह समुत्थितान्प्रसादवेपथुस्वेदपुलकादिकान्भावानुदासीनेव निस्निग्धनयना मामवादीत्—'गन्धर्वक, गृहीत्वा तदस्माकमुत्तममाकाशयात्राविमानं तच्चाभिमानधनमभिनवागतं विद्याधरसहस्रमधुनैव गच्छ तमरण्यकच्छम् । गत्वा च सत्वरः सपरिवारमानाय सदासन्नशैलनिर्झरवारिवृष्टावदृष्टपार-सरस्तीरदेवतारामे कुमारहरिवाहनम् । आवासितस्य चास्य सततमास्व सन्निधौ विदधदादेशम्' इति । ततः 'यदादिशति देवी' इत्यभिधाय

चलितस्तत्कालमेवागतविसृष्टेनाग्रतोयायिना **चित्रमायेन** निर्दिश्यमानसरणिरागत्य पर्वतारण्यमिदमवस्थाप्य निकषानदीं परिच्छदमशेषमुत्सुकत्वान्निवर्तितसहाय एवमायात इति निगद्य गमनाय मां पुनः पुनरतत्वरत् ।

ततोऽहमुत्थाय तस्मात्प्रदेशादात्मपरिवारसहितः सरित्परिसरादागतेन प्रणम्य परिवृतो विद्याधरगणेन संभ्रान्तकिंकरकलापोपनीतमारुह्य देव्या विसर्जितं निजयात्राविमानमन्तिकस्थितेन विविधाभिः कथाभिः पथि विनोद्यमानः सगर्वं **गन्धर्वकेण** क्षणेनैव **मलयसुन्दरीकृत**समाश्रयं दिव्यमाश्रममुपागमम् । तत्र **चादृष्टपार**परिसरनिरूपितावासः सततमाज्ञाकारिभि**श्चित्रमाय**मुख्यैः खेचरभटैर्लौहित्यतटवासिनः स्कन्धावारादनिशमानीयानीय संवाद्यमानसकलप्रार्थितार्थो यथोत्तरं प्रथितपृथुतरानुरागया नभश्चरेन्द्रसुतया विसर्जितैः स्वादुफलरसैरासवविशेषैः स्रग्दामभिर्विलेपनैस्ताम्बूलैर्दुकूलै रत्नभूषणैश्च कल्पद्रुमसमुत्थैः प्रतिदिनं प्रवर्तितोपचारः, कदाचिच्च बहुविकल्पैश्चित्रकर्मपुस्तपत्रच्छेदादिभिः शिल्पभेदैरापाद्यमानविस्मयः, कदाचित्प्रश्नोत्तरप्रवह्लिकायमकचक्रबिन्दुमत्यादिभिश्चित्रालंकारकाव्यैः प्रपञ्चितविनोदः, कदाचित्स्वसंदेहनिर्णयाय प्रेषितैः प्रकर्षवद्भिः सह कलाचार्यैः कृतोच्चावचविचारः, कदाचित्सहचरीमुखेन रसमुचः स्वकाननोपजाता वृक्षफलजातीः [आस्वाद्यमानः], कदाचिच्च शृङ्गारसंगतकथाप्रपञ्चसंबद्धाः सूक्तीः सानुबन्धमुपजातमानः, कदाचिददृष्टपारसरः स्नानावतीर्णया प्रस्तुतपरिहासमेव वारंवारमीरिताभिर्दूरस्थितोऽपि स्वच्छशिरोभिरम्भश्छटाभिरिव कटाक्षवीचिभिराच्छाद्यमानः, कदाचित्पर्वदिवसे निविश्य पुरतः पुरातनमुनेरादिनाथस्य विस्तारितानच्छतानमूर्च्छनमुपेत्य निकटोपविष्टैः श्रुतानन्दाश्रुभिः श्रमणो-

पासकैरिव निशम्यमानं वनमृगैः स्वर्गलोकसंभवं वल्लकीगीतमनवगीतश्रुतिश्राव्यमाणः केवलेनैव शश्वदन्वेषणपरादपि विद्याधरगणादाकर्णिते त्वददर्शनेन दूयमानः कतिपयान्यपि दिनान्ययापयम् ।

एकदा तु भुक्तावसाने शयनतलनिषण्णमासन्नोपविष्टैर्विशिष्टवेषाकारधारिभिर्विद्याधरकुमारैः परिगतं शिबिरादुपागतः शङ्खपाणिर्नाम रत्नकोशाध्यक्षः प्रणम्य मामवोचत्—'कुमार, विज्ञापयामि । अस्यामेव प्रागतीतायां शरदि निजदेशदर्शनकौतुकेन निर्गत्य साकेतनगरादङ्गीकृतविजययात्रस्य तव कल्याणराशेरशेषदुरितोपद्रवनिवारणाय देवेन कोशलाधिपतिना समर्पितो मे सहैव साहसप्रीतलक्ष्मीकराङ्गुलिमुद्रया चन्द्रातपो नाम वैमानिकवितीर्णो दिव्यहारः । स धारितो मया स्वसन्निधौ कालमेतावन्तम् । अधुना पुनरुपसृत्य सुकृतिनमिहायातमात्रेवानीतः । तदेष गृह्यताम्' इति विसृज्य वाक्यमाकृष्य मणिकरण्डकात्साकमङ्गुलीयेन तमुदक्षिपत् । उत्क्षिप्तमात्र एव च तत्र युगपत्प्रधावितेन दिक्षु सर्वासु दक्षाध्वरध्वंसिभस्माङ्गरागभास्वरेण प्रभाराशिना निर्भरमपूर्यत व्योम, कुसुमिताकालकाशवनवितानेव समलक्ष्यतावनिः, नवसुधारसच्छटाभिरिव विच्छुरितमश्वितद्विश्वम्, उद्धूतधूलीकदम्बकेसररजोराजय इव व्यराजन्त मरुतः, ज्योत्स्नासवर्णीभूतमुद्भाव्यत ज्योतिरूष्मणा भानवीयम् । अहं तु संजातविस्मयो दृष्टमिव पुरा परिचितमिव भवान्तरे विधृतमिव वक्षसा विमृश्य तं सुचिरमाकुञ्चिताक्षः प्रीतिविकचेक्षणं विहस्य गन्धर्वकमवोचमविचलेन मनसा—'सौम्य, सम्यगवलोकितं मया मध्यमं भुवनम् । न तु विहाय देव्यास्तिलकमञ्जर्याः कण्ठकन्दलमपरमीक्षितं क्वचिद्दिव्यहारस्यास्य समुचितमाश्रयस्थानम् । तदुत्तिष्ठ । तत्रैव गत्वा स्थापयैनम् ।

इहैव मणिकरण्डके कुण्डलीकृत्य पुनरपि क्षिप्तेन किं फलमनेन । अनेन च शुकच्छदश्याममरकतांशुवर्षिणा बर्हिषेवोद्भिन्ननवपत्रेण दिव्याङ्गुलीयेन द्विगुणपवित्रदक्षिणकरकमला **मलयसुन्दरी** यथा देवतार्चनकर्म निर्मापयति शश्वत्तथा विधत्स्व' इत्यभिधाय तं प्राहिणवम् ।

अन्येद्युश्च प्रातरेव स्वावासहर्म्योपरिस्थः प्रेक्षमाणो मार्गमागमिष्यतो **गन्धर्वकस्य** विहायसाभिमुखमापतन्तीमस्वस्थचित्तामिव **चतुरिका**मद्राक्षम् । 'किमियमेकाकिनी विना **मलयसुन्दर्या** समागता' इति चिन्तयत एव सा समीपमागच्छत् । सहासमाभाषिता च मया प्रणम्य निकटे न्यविक्षत । स्थित्वा च कंचित्कालमवचना विलोक्य पार्श्वानि शनकैरभाषत—'कुमार, यदैव भर्तृदारिका महाभागेन सहानीता निजगृहं देव्या **तिलकमञ्जर्या**, तत एवारभ्य तत्रैव स्थिताहमेतावन्त्यहानि तस्याः कुर्वती चरणपरिचर्याम् । अद्य तु तदादेशादिहापतन्ती समाहूय रहसि बाष्पायमाननयनारविन्दया विनिश्वस्य वारंवारमतिदीर्घमाज्ञापिता देव्या—'भद्रमुखि, यत्रैव प्रस्थिता त्वं तत्रैवाधुना कृतस्थिरावस्थितेः कुमार**हरिवाहन**स्यायमर्पयितव्यः' इत्युक्त्वा पुरस्ताल्लेखमक्षिपत् ।

अहं तु तत्क्षणोपजातवामाक्षिस्पन्देनानिवर्त्य तद्ग्रहणाय पुरतः प्रसारितं दक्षिणपाणिमतिवाह्य च क्षणमेकमस्वस्थेन चेतसा गृहीत्वा शनैस्तमवाचयम्—'स्वस्ति । एकशृङ्गाचलक्षतावासं महाराजपुत्रश्री**हरिवाहन**मुदीर्णदुर्वारदुःखा **तिलकमञ्जरी** दूरानतेन मूर्ध्ना प्रणम्य विज्ञापयति—

आश्लिष्य कण्ठममुना मुक्ताहारेण हृदि निविष्टेन ।
सरुषेव वारितो मे त्वदुरःपरिरम्भणारम्भः ॥

तथापि त्वदधीनजीवितहमिह स्थिता तीर्थान्तरगता वा यावत्प्रा-

णिमि न तावत्कुमारेण विस्मर्तव्या' इति पठितमात्र एव सहसोत्थित-प्रबलसर्वाङ्गकम्पस्य प्रणुन्न इव पृथुनाश्वासपवनेन गुरूकृत इव गरीयसा बाष्पपूरेणावलम्बित इव निरालम्बेन पतता हृदयेन विगलितप्रयत्नाङ्गुलीपरिगृहीतः पपात करतलादलक्षितो मे लेखः । ततः कोऽहम्, कायातः, किमर्थमायातः, किं मया प्रस्तुतम्, किमेतद्दिनम्, किं निशा, कोऽयं कालः, किमेतानि दुःखानि, किं सुखानि, किं जीवितमिदम्, किं मरणम्, किमेष मोहः, किं चेतना, किं सत्यमेतदाहोस्विदिन्द्रजालम्, किं स्वदेशोऽयमुत विदेशः, इत्याद्यविद्वान् बलवता समास्कन्दितो मनोदुःखेन कथमपि विसर्ज्य **चतुरिकां** सौधशिखरादवातरम् । अभिलषितभूधरभृगुप्रपातश्च मुक्त्वा ज्वलन्तमिव तं प्रदेशं शिबिरमावासं परिजनं च केनाप्यनुपलक्षितः प्लक्षपिचुमन्दतिन्दुकोदुम्बरबहुलेन गत्वा दुर्गनवमार्गेण दूरमुत्सङ्गिताकाशमाशामुखव्यापिना शिखाग्रेण विजयार्धगिरिशिखरमध्यारोहम् । अन्वेषमाणश्च तत्राभिलषितार्थसाधकं तीर्थमेकस्य मार्गवर्तिनश्छायातरोरधस्तात्त्वरिततरमुत्थाय चलितमभिरूपमभिनवारूढयौवनमनुरूपवपुषा विचित्रवेषाकारधारिण्या श्रुताविरलबाष्पप्लुतकपोलया पञ्चदशवर्षदेश्यया राजसुतया रत्येव शूलायुधशमोन्मूलनाय प्रस्थितं मकरकेतुं मुहुर्धावित्वा दुकूलाञ्चले धार्यमाणं मुहुः प्रसार्य भुजलते पृष्ठतः परिरभ्यमाणं मुहुर्निपत्य पादयोः प्रसाद्यमानमेकं नृपकुमारमद्राक्षम् ।

दृष्ट्वा च द्विगुणजातोद्वेगः पुरोभूय नीचैस्तमवदम्—'अहो सुवदन, स्थिरो भव । मुहूर्तं पृच्छामि किंचित् । किमर्थमेनामरण्यपतितामेकाकिनीमुदश्रुनयनामेवमनुनयपरां परिहरसि बालिकाम् । क्व च निवारितोऽप्यनया गन्तुमभिलषसि ।' स एवमुक्तः सलज्ज इव किंचिदभि-

मुखीभूय भाषितवान्—'एष कथयामि । आकर्णयत्वार्यः । इहास्ति पर्वतवरे समीप एवास्य चण्डगह्वराख्यविद्यासिद्धिशिखरस्य क्षुधितकालरात्रिकुक्षिकुहरकरालकन्दरः संहारो नाम सार्वकामिकः प्रपातसानुः । तत्र पिपतिषुरनङ्गरतिनामा विद्याधरः शिशुरेवागत्य दुष्टदायादैरवष्टब्धास्पदो निर्वेदेन प्रस्थितोऽहम् । इयमपि नवसुखा निवारिताप्यादरेण मामेवानुगन्तुमुच्चलिता । मुञ्चती च जीवितमिमां द्रष्टुमसहः पुरस्तादेव गत्वा मोक्तुमहमिच्छामि देहम् । असौ तु जीवत्येव मयि मर्तुमुत्सुका भनक्ति मे गमनमेभिः प्रकारैः' इति निवेदिते तेन करुणया विस्मृतात्मदुःखः पुनरपि तमब्रवम्—'बालक, किमर्थमशेषपुरुषार्थसाधके वयसि वर्तमानः प्रेमपरतन्त्रमीदृशमिदं कलत्रमात्मानं च निःकारणमेव करणैर्वियोजयसि । यद्यभिलषसि भोगांस्तदधुनैव गत्वा प्रतिगृहाण मे राज्यम् । अथान्योऽभिलाषस्तस्यापि साधने सिद्धः स्वशक्त्याहम्' इत्युक्ते मया मुदितचेताः स पुनरप्यवोचत्—'आर्य, तिष्ठतु सर्वसत्त्वोपकारकं त्वय्येव तावकं राज्यम् । यदि तु सत्यमेवानुकम्पसे मां तदेतत्कुरुष्व । अस्ति मे गुरुपरम्परागतः सकलजगदाधिपत्यदायी प्रधानदेवतापरिगृहीतः समस्तमन्त्रग्रामणीरसाधारणगुणाधारपुरुषसाध्यो मन्त्रनिवहः । तदाराधनेन लब्धाधिकपराक्रमः क्रमार्जितं सत्त्वमिवात्मपोतस्य मृगपतिर्वितर मे राज्यम् ।' तच्छ्रुत्वा कृताभ्युपगमोऽहं तेन विधिवदाख्यातनिखिलमन्त्रेण शिक्षिततदाराधनकर्मणा दर्शितमदृश्यसूर्यचन्द्रमःप्रकाशमल्पावकाशोदरमतिगम्भीरमवनिधरगह्वरमगच्छम् । तस्य चाधस्तादपास्तनिश्चलशिलापिधाने दुरुपलक्ष्यसूक्ष्मद्वारि पर्यन्तरूढप्रौढभूरुहि रसातलगृहे प्रविश्य निगृहीतचेताः सततमभियुक्तेन द्वारदेशाभ्यासवर्तिना वितीर्णपुष्पधूपानुलेपनेन प्रतिपन्नसाचि-

न्यस्तेन खेचरेण त्रिकालमाप्लुतो निर्झरजलेष्वनालोकितवस्तुरूपैरनवधारितध्वनिभिरनाघ्रातगन्धैरपास्तस्पर्शसंवेदनैरविज्ञातफलरसास्वादैर्वृथेव पञ्चत्वमागतमात्मानमुद्वहद्भिरुच्छन्नसकलात्मशक्तिभिरिन्द्रियैः प्रतिपन्नदेहः पूजयित्वा प्रणम्य चादरेणादिपुरुषैः प्रतिष्ठितानि विद्यादेवताबिम्बानि सन्मुखो भूत्वा सौरिजठराम्भोजमुकुल इव बद्धपद्मासनो दक्षिणाग्रहस्तविन्यस्ताक्षसूत्रः क्रमेण कर्तुं मन्त्रसाधनमुपक्रान्तवान्। आरब्धजपविधिं च मां ध्यानतश्चलयितुमभीक्ष्णमारम्भतात्यन्तमुद्वेजिता इव क्षरद्भिः श्रवसि मन्त्राक्षरैः सर्वत एव सिद्धिविघातकाङ्क्षिणः क्षणदाचरौघाः। प्रकृतिकेलिप्रियतया च केचिदागत्य नित्यमत्यन्तधार्मिका इव विधृतविद्याधराकाराः पुरो विद्यादेवतानामनवद्यगीतवाद्यं नाट्यकर्म कर्तुं प्राक्रमन्त। केचित्पूर्वपरिचितपुरुषवेषधारिणः 'प्रेषितास्त्वदानयनाय वयमतीवोत्कण्ठितेन कोशलाधिपतिना देवेन' इत्युदीर्य विहितप्रणामाः पुरस्ताल्लेखमक्षिपन्। केचिदुपसृत्य हर्षोत्फुल्लदृष्टयः 'कुमार, दिष्ट्या वर्धसे। दृष्टो युवराजसमरकेतुः' इत्यसकृदाविष्कृतचित्रमायप्रमुखखेचरमुख्यरूपाः समाचख्युः। केचित् 'किमर्थमपसृतोऽसि। निष्कृप, त्वत्कृते नितान्तमुत्ताम्यति तिलकमञ्जरी' इति मलयसुन्दरीसंदेशमाख्यातुमनवरतमापतन्तीं चतुरिकामदर्शयन्। अदर्शविकारतया च निश्चित्य मां निश्चलमनसं समुत्पन्नकोपाः कदाचिदुत्पाता इव प्रतिभयारावतरलितसत्त्वसंघातानुपरि निर्घातानयातयन्। कदाचिद्ग्रीष्मदिवसा इव प्रचण्डपवनताण्डवितडामरज्वालाचक्रमाक्रामंस्तमचलं समन्ताद्दवा(दा)शुशुक्षणिमद्राक्षुः। कदाचित्प्रथमपाथोदा इव स्वप्रभान्धकारदर्शिताकालदुर्दिनाः स्तनितघोषानिव श्रवणपुटभिदो भीषणाट्टहासानातेनुः। कदाचिदाविष्कृतोद्भटभ्रुकुटयः सुभटा इव द्विगुणीकृते वाम-

दोर्ष्णि रणतृष्णया कृतपरिस्फुटास्फोटनाः साटोपमभिमुखमेत्य रंहसा सिंहनादानुच्चकैर्मुमुचुः । एवं च तैरनवरतकृतनिसर्गदुःसहोपसर्गैरमुक्तसंसर्गस्य मे नित्यमेकाग्रेण मनसा यथाविधि विदधतो विद्यासाधनमतीतेषु षट्सु मासेषु परिसमाप्तायां मन्त्रदेवतापूर्वसेवायामल्पावशेषे जपविधौ सहसैव विद्युद्दीप्तदेहा प्रदीपकलिकेव सकलमुद्द्योतयन्ती तद्रसातलभुवनमाघ्रातापूर्वदिव्याङ्गरागसौरभाकृष्टेम समन्ततो विसरद्भिराभरणमाणिक्यरश्मिभिः शकलीकृत्य कणशः प्रकीर्णेन पातालतमसेव परितः प्रधावता मधुकरगणेनानुगम्यमानमूर्तिरेकातिरेकरम्याकृतिः सुरवधूरागत्य मधुराक्षरमभाषत—'महाभाग, देहि दृष्टिमष्टास्वपि दिग्विभागेषु । एतास्त्वदीयसत्त्वाकृष्टमनसः स्वत एव मुक्त्वा रसातलस्वर्गमागताः प्रज्ञप्तिरोहिणीप्रभृतयोऽष्टप्रधानविद्यादेवताः प्रष्टुमिच्छन्ति । संप्रति प्रवणतां गताभिरस्माभिः कथय किं ते प्रियं करणीयम्' इति । अहं तु तच्छ्रुत्वा कृताञ्जलिस्तां समाबभाषे—'भगवति, जगद्विभूषणेन भीषणारण्यचारिणा सहचरेण विप्रयुक्तस्य प्राणभूतया परमानुरक्तया प्रणयिन्या च निर्निमित्तमेव संत्यक्तस्य संप्रति प्रियमेव मे नास्ति । किं कथयामि । यत्तु प्रियमिहाप्यवस्थायां तदहमात्मनैवात्मनः करिष्यामि । किं मया पृष्टेन । अयमनुयुज्यतामनङ्गरतिनामा द्वारवर्ती विद्याधरयुवा यदर्थमेष प्रस्तुतो मन्त्रसाधनविधिः' इति व्याहृते मयि सविस्मया सा प्रत्यवोचत्—'अहो महासत्त्व, सद्योजातपरमप्रियविप्रयोगेन कथमपि नियम्य निजमनोदुःखमङ्गीकृतपरार्थेनात्यर्थमानन्दिताहं त्वया स्वकीयसच्चरितेन । को हि नाम त्वद्विना कालमेतावन्तमफलमीदृशं क्लेशमनुभवति । को वा सकलभुवनाधिपत्यमप्रार्थितोपनतमित्थमन्यस्मै प्रयच्छति । अति हि युज्यते कर्तुमेतन्महाभागस्य वचनम् ।

**किं** तु कल्प एष यत्र एवानल्पसत्त्वो येनैव विधिना समारोधिता, यस्यैव साहसेनानुरञ्जितं हृदयमासाम्, तस्यैव देवताः सिद्धिमुपनयन्ति। न परोपरोधेन। किं चायमपि निःस्पृहः। स्वार्थसिद्धावनेनापि परार्थमभ्यर्थितस्त्वम्। आकर्णय पुरावृत्तम्। अस्त्यत्रैव **विजयार्धशिखरिण्युत्तरश्रेण्यामनुत्तरश्रीकमाद्यं** सर्वनगराणां **गगनवल्लभाभिधानं** प्रधाननगरम्। तत्र सुरनग इव गिरीणामग्रणीर्गगनचारिचक्रस्य **विक्रमबाहु**नामा चक्रवर्त्यासीत्।

नष्टा श्रीरम्बुजानामटति मधुकृतां कांदिशीकं कुटुम्बं
क्रन्दन्त्याक्रीडनद्यामपरतटगतप्रेयसीश्चक्रवाकाः।
इत्याद्यैश्चारणानां दिवसपरिणतावुच्चरद्भिर्वचोभि-
र्जातानित्यत्वबुद्धिर्मुहुरनभिमुखो भोगसौख्यस्य योऽभूत्॥

स कदाचिदानीय पुण्यरूपैः पापकर्मभिरुपनीतेषु केषांचित्कोकिलानामिव विनाशहेतुषु, केषांचिद्भृङ्गराजशुकसारिकादीनां परस्पराक्रोशावहेषु, केषांचित्क्रौञ्चवयसामिव मदावहेषु व्यामोहकारिषु, चकोर इव विषदूषितान्नेषु विषयोपभोगेषु विरक्तदृष्टिरभवत्। प्रपन्ने च तत्र जरत्तृणावज्ञया विमुक्तमित्रज्ञातिवर्गे सर्वज्ञनिर्दिष्टमपवर्गमुद्विग्नचेतास्तपदाभिषेकक्षममनीक्षमाणो गोत्रजं क्षत्रियकुमारमपरगुणवद्राजपुत्रान्वेषणाय प्रगुणितो राजभिर्गणनीयवाक्यैः **शाक्यबुद्धि**नामा प्रधानबुद्धिसचिवः स्वबन्धुसुत**मनङ्गरति**मेनं गदितवान्—'अङ्ग, मुक्त्वा व्यासङ्गमेकक एव गच्छ शृङ्गिणमेकशृङ्गम्। तत्र मित्रान्वेषणाय स्वदेशादुपागतमदृष्टपारसरःपरिसरस्थितनिवेशितशिबिरमखिलक्षितिपतेरिक्ष्वाकुकस्य राज्ञो **मेघवाहन**स्य तनयं नयेन केनाप्यद्यैव कुरु विद्याराधनपरं **हरिवाहना**ख्यं कुमारम्। अयं हि प्राक्तनेनैव संस्कारेण परसत्त्वोपकारी

परमकारुणिकश्च न प्रार्थितो वचनमन्यथा करिष्यति। निश्चितं च मयैतदष्टापदकृतास्पदमुपास्य मुनिवृन्दमद्यैव समागताद्वीरसेनादिविद्याधरगणादवगततदीयपूर्वभववृत्तान्तेन तदपास्तसंशयः प्रवर्तस्व येनोपात्तविद्यमानीय सादरमेनमासने देवस्य **विक्रमबाहो**र्निवेशयामि।' ततो 'यदादिशत्यमात्यः' इत्युदीर्य तत्क्षणमेव चलितः प्रासादशिखरावतीर्णमुद्विग्नमेकाकिनममार्गेणापतन्तमभिमुखं प्रपातस्य दृष्ट्वा भवन्तमालोचितोपायः प्रयुक्तविद्याप्रदर्शितेन परस्परानुरक्तदंपतीमरणचेष्टितेन विद्यासाधने योजितवान्। तदलमनेन मिथ्यागृहीतेन परसत्त्वोपकारकरणाभिमानेन। सन्मानयैनमनुरागतः स्वयमेव समागतमसदृशात्मीयसाहसवशीकृतं प्रधानविद्यासमाजम्। कुरु महामन्त्रिणः **शाक्यबुद्धेः** सफलमायासमनुभवोत्तरश्रेणिसद्मभिः खेचरनरेन्द्रैः प्रवर्तितमलभ्यमल्पपुण्यैः पुंभिरन्यैरतिप्राज्यवैभवं राज्याभिषेकम्। भव पृथिव्यामेकचक्रवर्ती। समाश्वासय श्वा(स्वा)मिविरहविक्लवाः प्रतिग्रामनगरमज्ञातपरचक्रविप्लवा पौरजनता। जनय जातरतिमेनमप्यनङ्गरतिरतिमङ्गीकारेण। मुञ्च निष्कारणमिमं च मरणाध्यवसायम्। सहायीभूतविद्यस्य दैवादुपागतः सोऽपि संप्रति विरंस्यति तव प्रणयिनीमित्रविरहः। यतः—

> क्षुण्णोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः।
> इति विमृशन्तः सन्तः संतप्यन्ते न विधुरेषु॥'

इत्युदीर्य तत्रान्तर्हितायामकस्मात्तुलितकल्पान्तचलितसप्तार्णवीसलिलकल्लोलकोलाहलः कवलयन्निव त्रिदिवपातालान्तरालमुल्ललास नभसि गम्भीरभैरवो दिव्यभेरीरवः। स्फुटविमुक्तभूरिभांकृतेन तेनेवाकारिताः समाजग्मुरखिलाशामुखेभ्यः प्रस्तुतसविस्तरस्तुतिवादमुखराः खेचराधिपतयः। प्रविश्य च तत्र पातालभवने विनयवामनाः प्रयाणविमुखमपि

मां विमानमारोप्य पुरतः स्वयंधृतसमुत्सारणकनकदण्डाश्चण्डगह्वराख्यं विजयार्धगिरिशिखरमनयन्।

अभिषिच्य च क्रमेण प्रभूतमणिकुम्भाहृतैः सरित्सागराम्भोभिरुत्तरश्रेणिराज्ये निरन्तरावर्जितशिरःसंघट्टविघटितकिरीटवेदिका युगपदानेमुः। आसीनं च मामखिलदिङ्मुखख्यातपृथुपराक्रमस्य सिंहासने विक्रमबाहोर्धृतोत्कृष्टवसनस्रग्विलेपनालंकारमुपरि विस्तारितोद्दण्डधवलातपत्रमुभयतश्चलितचारुचामरचक्रवालमानन्दवाचालचारणोच्चार्यमाणचिरंतनसंतानपुरुषसच्चरितमूर्धस्थितेन बिभ्रता नवाभ्रनीलादभ्रकिरणमालाकरालितककुभि करवालरत्नानि रचितपरिवेषेण भीमाभिरामवपुषा पौरुषेयेण प्रकामाधृष्यमभिषेकमण्डपाभ्यन्तरनिविष्टमासन्नोपविष्टमन्त्रिमण्डलव्यापारितः पुरुदंशा नाम राजनैमित्तिको राजधानीपुरप्रवेशाय शनकैर्व्यजिज्ञपत्।

अहं तु तिलकमञ्जरीविरहविक्लवेनापि मनसा सम्यगवधार्य संशितासन्नगुणवद्दिवसलग्नस्य तस्यालापमन्यतो वलितवदनसमीपस्थमास्थानलोकमप्राक्षम्—'अयि, वेत्ति कश्चिदधुनातनं चक्रसेनराजकुलवृत्तान्तम्' इति। अथ पुरोवर्ती प्रधानद्वारपालः प्रणम्य सविनयमब्रवीत्—'देव, संप्रत्येव दक्षिणश्रेण्याः समागतोऽत्यर्थमर्थी दर्शने देवपादानां नितान्तरमणीयाकृतिः 'भद्राः, किमर्थमकाण्ड एव विधृतो वृथैवाहम्। उत्सृजत माम्' इति प्रत्येकमभ्यर्थनां कुर्वन्द्वारपालानामेको द्वारि दारकस्तिष्ठति, स ज्ञास्यति कदाचित्। ततोऽहम् 'कोऽयमायातः' इति कृतविमर्शः स्थित्वा मुहूर्तम् 'आशु प्रवेशय' इत्यवदम्। अथ तेन गत्वा सत्वरेणाहूतमेकैकमणिपवित्रिकामात्रकर्णाभरणमनुपयुक्तताम्बूलधूसराधरलेखमुल्लिखिताग्रदशनश्रेणिना दूरीकृतकुसुमधूपादिकेशसंस्कारेण

दूरमलिनजीर्णचीनवाससा चिरप्रोषिताङ्गरागपरुषाङ्गलावण्येन वेषग्रहणेन सोद्वेगमिव शङ्क्यमानमतिकृशत्वादशक्नुवद्भिरिवोद्वोढुमवयवैरनूढहारकेयूरकटकादिभूषणव्रातमापतन्तमभिमुखं **गन्धर्वक**मपश्यम्। दर्शनेनेव तस्य संभावित**तिलकमञ्जरी**जीवितावस्थस्वास्थ्यमगमम्। सोऽप्यचिन्तितोपगतया नभश्चरचक्रवर्तिलक्ष्म्या समुपगूढमुद्वीक्ष्य मां क्षणमात्रं जातविस्मयः स्मितार्द्रचक्षुषा सप्रसादम् 'एह्येहि' इति समुपहूतो मया शोकविकलपरिस्खलद्गतिरागत्य समुन्मुखमवाङ्मुखं क्षोणितललुलितमूर्धजेन शिरसा प्रणाममकरोत्। अनिमेषविद्याधरपरिषदवलोकितश्च निश्चलमवस्थाप्य ललाटमङ्घ्रिपीठे हठनिरुद्धदुर्धरमन्युवेगोद्गमश्चिरवियोगविस्मृताकारं दिदृक्षया क्षालयितुमिव मच्चरणयुगमविश्रान्तमीरितैरश्रुधाराम्भोभिरुच्छ्वस्योच्छ्वस्य दीर्घमनुदीरितध्वनिररोदीत्। उदीर्णकरुणेन च मया परामृश्य पृष्ठदेशे पुनः पुनः करतलेन सस्नेहमुत्थापितः शनैरुन्नमय्य परिमृज्य चोपरि वस्त्राञ्चलेन वदनमग्रतः क्षितितले न्यविक्षत। विरतशोकश्वासमोक्षस्य चास्य मुहूर्तमास्थाय कृतमुखेक्षणः क्षीणाक्षरमपृच्छम्—'**गन्धर्वक**, त्वदवलोकनानुमितजीविताया अपि कुतश्चिदुपजातशङ्कः शक्नोमि न प्रवृत्तिं प्रष्टुमादरेण देव्यास्**तिलकमञ्जर्याः**। स्वयं कथय यत्तदावृत्तम्, यच्च वर्तते संप्रत्यमुष्याः, यत्र चासौ यद्व्यापारा दिनान्यतिवाहयति। त्वमपि किंनिमित्तमत्रायातः' इत्यभिहितो **गन्धर्वकः** स्थित्वा क्षणं क्षितितलन्यस्तदृष्टिराख्यातुमारभत—'देव, श्रूयताम्। तदानीमदृष्टपारतीरावासितेन देवेनादिष्टमात्र एव गत्वा तदाभरणद्वयं भर्तृदारिकयोरपि यथोद्दिष्टमत्यसृजम्। अवदं च—'वनदुर्गादुपागतस्य कौशलिकमेतत्कुमारस्य।' श्रुत्वा चेदमानन्दनिर्भरा **मलयसुन्दरी** सादरमादाय तद्दिव्यरत्नाङ्गुलीयकं दक्षिणकराङ्गुलीभूष-

णमकरोत् । क्षणेन च स्मृतजन्मान्तरेव क्षीयमाणहर्षा पराहमिव प्रेङ्खद्भिरतिभास्वरैः स्तनमयूखैः सहसैव मुकुलायमानपक्ष्मान्तरालनिपतद्बाष्पजलमक्ष्णोर्युगलमवहत् । देव्यपि **तिलकमञ्जरी** जातविस्मया निरीक्ष्य तं चक्षुषा निर्निमेषेण निमेषमात्रमतिचिरकालदृष्टमिष्टापत्यमिव हारमीरितानन्दाश्रुवर्षा सतर्षमाकृष्य हृदि समारोपितवती । दर्शयन्त्यपि च सर्वतश्चन्द्रिकापटलसान्द्रैस्तदंशुनिचयैर्मुहूर्तमेकधवला विश्वमाखिनीव जलदोदरप्रविष्टहरिणाङ्कमण्डला राकारजनिराजनिष्ट । झटिति भ्रष्टकान्तिरभाषत च जातप्रत्यभिज्ञेवोद्वेगगद्गदेन स्वरेण— 'सौम्य, जानासि कस्मादस्य दिव्यहारस्यागतिर्मर्त्यलोके, कथं च संप्रति प्राप्तः कुमारेणायम्' इति तां प्रत्याबभाषे—'देवि, पूर्वकलामेष **साकेत**नगरे **शक्रावतार**संज्ञं सिद्धायतनमायातस्य राज्ञो **मेघवाहन**स्य रात्रावुपजातदर्शनेन **ज्वलनप्रभ**नाम्ना वैमानिकेन प्रेम्णा समुपनीतः ।' इति निशम्य चैतदनाकर्णितशेषमद्वचना निमील्य लोचने मोहपरवशा पर्यङ्कपृष्ठे पर्यास्थत् । उपलब्धसंज्ञा च सुचिरेण सहचरीभिः पृच्छ्यमाना किमपि मूर्छाकारणं नाख्यत् । दुःखदीर्घनिश्वासशोषिताधरपल्लवा च लतेव दुर्वाताहता बालसहकारस्य म्लानदेहच्छविः कृच्छ्रेण यामिनीमनयत् ।

प्रभाते च परिजनादुपलभ्य वार्तामुपागतमशेषतः कृतप्रतिबन्धमवधूय गुरुजनं बन्धुसार्थं च तीर्थयात्रापदेशेन प्रस्थिता गृहात्प्रथममेव **वैताढ्य**पर्वतादनतिविप्रकृष्टमुन्मृष्टघनघातिकर्मणानेकमुनिसहस्रपरिवृते निर्वाणसमये कृततनुत्यागेन भगवता **नाभितनयेन** जनितमहिमानमष्टापदाभिधानमचलराज्यमव्रजम् । तस्य चोन्निद्रमन्दारहरिचन्दनप्रमुखसुरशाखिनि शिखाग्रभागे गगनशृङ्गोल्लेखिशिखराणि भुजबलप्रसाधितखिलीभूतनिखिलभारतेन प्रथमचक्रवर्तिना **भरतेन** कारितानि

यथास्वमारोपितप्रमाणवर्णोत्कर्षाभिर्भविष्यतां जिनवृषाणामप्रतिमरूपाभिर्मणिप्रतिमाभिरध्यासितोदराणि वन्दनमालाविविधरत्नपाषाणविरचितानि चैत्यायतनानि स्थानस्थानेषु नमस्यन्ती समाधिस्थितमुपागतं द्वीपान्तरेभ्यो यदृच्छाचारिणं चारणश्रवणमितस्ततः प्रस्तुतविहारविपुलशुचिशिलातलोपविष्टमवनिधरकटकबन्धावन्यतमसिद्धायतनमण्डपेन चिरसंजातकालत्रितयगोचरज्ञानलाभमन्तिकासीनसविनयसिद्धविद्याधरमादरोत्सृष्टकुसुमवृष्टिभिस्त्रिविष्टपसंसद्भिरारब्धसद्भूतगुणगणस्तोत्रमपगतविषादहर्षमेकं महर्षिमद्राक्षीत् ।

उत्पन्ननिर्वेदा च तद्दर्शनेन प्रणम्य तमसौ समं प्रणयिलोकेन निकटे न्यविक्षत । निविष्टां च तामनिमिषदृष्टिमाविष्टामिव कृतप्रश्नस्य परिषज्जनं वर्जयति, दासोऽपि स्वामितामेति, सुखितोऽपि दुःखमाप्नोति, कल्पोऽपि दौर्बल्यमधिगच्छति । तथा च लोकपालः कीनाशोऽपि धनदत्वमाश्रयति । धनदोऽपि पुरुषः कीनाशतां प्रतिपद्य काकणीमपि न ददाति । सकलवेदविद्द्विजोऽपि मातङ्गजातौ जायते । मन्दालसगतिर्मातङ्गोऽपि गत्वा द्विजत्वमनिलवर्त्मना सर्वतः संचरति । रूपवानपि कुरूपो भवति । कुरूपोऽपि तेजोमयं कायमास्कन्दति । किं च शब्द इव संस्कृतोऽपि प्राकृतबुद्धिमाधत्ते । प्रसिद्धपुंभावोऽपि नपुंसकतया व्यवह्रियते । सर्वदा स्त्रीलिङ्गवृत्तिरपि परार्थे प्रवर्तमानः पुंस्त्वमर्जयति । एवं च सामान्येन सर्वेष्वनियतस्वभावेषु जन्तुषु कुतूहलमपि न संभाव्यते । दूरे तावदाश्चर्यं यदि तु जिज्ञासता पुरुषविद्वेषादिषु विशेषकारणान्यमुष्याः कृतो देवानांप्रियेण प्रश्न एष ततो युक्तमाकर्णय । तान्यपि निरूपयामि । अस्ति निजविलासहसिता-

१. मूलेऽण.

खिलत्रिदशलीलो लीलावतंसविमानवासी वासवसमानधर्मा सौधर्मकल्पे कल्पान्ततपनस्पर्धितेजाः समस्तशतमन्युसुरसैन्यप्रभुर्ज्वलनप्रभो नाम परमसम्यग्दृष्टिरमरः । स च चमरादिचण्डासुरसमरविजयावर्जितयशाः शरत्समय इव परिवृतो वराप्सरोभिरन्तमनयतानन्तानि कालेन वर्षाणां कोटिलक्षाणि । क्षीणदिव्यायुश्च निश्चित्य लिङ्गैश्च्यवनमात्मनो विचिन्त्य दुर्लभमलब्धविरतेरमरलोकस्य प्रकारान्तरेण जन्मान्तरे बोधिलाभमवधार्य पर्यन्तविरसं विमानवासमुत्सृजत् । उत्सृजन्तमपि प्राज्यतया विवेकस्य सुरविलासिनीसंवाससुखमनाख्याय खेददायिनीं त्रिदशलोकस्य निजदशामभीष्टकतिपमयनाकिजुष्टत्रिविष्टपान्निर्जगाम ।

गते च तस्मिन्नदृष्टविप्रिया प्रिया प्रियङ्गुसुन्दरी नाम देवी दवाग्निकवलितेव बालवनलता विवर्णविच्छायदेहा विहाय विषमिव नाकिविषयविषयोपभोगमुद्गाढशोकेन परिगता सुरपरिग्रहेण वेदितुमुदन्तमभिमतस्य निर्विलम्बा जम्बूद्वीपमागच्छत् । आगत्य च सहैव सुरलोकादुपागतया पूर्वमेव द्वीपान्तरविहारनिर्गतेन प्रेयसा विप्रयुक्तया भर्तृसुहृदः सुमालिनाम्नो हृदयभूतया प्रियंवदाभिधानया प्रधानदेव्या समन्विता पूर्वतो मेरुपर्वतस्य पुष्करावतीनाम्नि विजये जितकषायं सदेवासुरायाः परिषदो मनीषितार्थमावेदयन्तं जयन्तस्वामिसंज्ञं सर्वज्ञमप्राक्षीत्—'भगवन्, अहमियं च मे सहचरी चिरवियोगार्तेर्भर्तुरन्तिकमपास्तलोकस्थिती स्वयमभिप्रस्थिते । कथय नाथ, क्व तत्संगमो नौ भविष्यति । मनुष्यलोकलब्धावतारयोश्च केन प्रकारेण पुनरपि धर्मसंप्राप्तिः' इति पृष्टः प्रन[ण]ष्टकर्मा स विससर्ज वाणिम्—'कल्याणभागिनि, अस्यैव जम्बूद्वीपस्य द्वीपभूतो भारते वर्षे दूरदर्शितोच्छ्रायेण शिखरवर्ष्मणा निरुद्धभानुरथगतिः सानुमानेकशृङ्गो रत्न-

कूटश्च प्रकटनामास्ति। तत्र परिपाट्या भविष्यति भवत्योरभीष्टसङ्गः। विशिष्टधर्मयोगस्तु युगपद्द्वयोरपि दिव्याभरणलाभेन।' तदुपकर्ण्य तत्क्षणमेव सा **प्रियङ्गुसुन्दरी** वव्राज **विजयार्ध**नगवरं दक्षिणेन क्षोणिधरमुद्धुरमयूरकेकमेकशृङ्गम्। अकारयद्दिव्यशक्त्या शिखरभूमावस्य तत्कालमेव नानाविधलतावृक्षगुल्ममतनुकल्पतरुखण्डपरिगतेन मण्डिताभ्यन्तरमनुत्तरश्रिया जिनायतनमण्डलेनाश्रयनिमित्तमात्मनो **मनोरमा**भिधानमतिमहान्तमारामम्। तत्र चाश्रमपदप्रख्ये विधृतमङ्गलमात्रैकैकरवलया प्रतिपालयन्ती पत्युरागमनमवलोकितदिङ्मुखा प्रतिदिनमतिष्ठत्। **प्रियंवदा**पि प्रीतहृदया तद्दिवसमेव प्रस्थिता सत्वरमगाधलवणाब्धिजलपरिक्षिप्तभानोरनेकसुरपादपच्छन्नटङ्कच्छिन्नकटकस्य शिखरिणो **रत्नकूट**स्य प्रतीचितटपरिसरे कारितोत्तुङ्गमणिमयजिनेन्द्रभवना स्थितिमकल्पयत्।

एकदा च **प्रियङ्गुसुन्दरी** तीरतरुतलोपविष्टा विशिष्टवेषाप्तवृन्दारकवृन्दपरिवृता निकटमेवारामदक्षिणविभागे तत्क्षणोपजातनिर्माणमनवरतमादिष्टेन वर्षता पीयूषसंवलितमापीयापीय दुग्धाब्धिजलविसरमम्भोमुचां कलापेन पूर्यमाणोदरमदृष्टपाराख्यमवलोकयन्ती सरस्त्वरागमनवल्गत्तुङ्गकुचयुगाम्, अभिनवद्विपेन्द्रदन्तच्छेदविशदेन दशदिगन्तव्यापिना मण्डलेनाभ्यन्तरीकृतशरीराम्, अलघुमार्गगमनधर्मप्लोषपरिजिहीर्षया रसातलगभीरे सुधासरसीव विहितप्रवेशाम्, प्रतिपलाशमासीनमदकलमल्लिकाक्षचक्रवाकस्य महतो विमानाकारपरिणतस्य कनककमलिनीखण्डस्य मध्यप्ररूढमारूढपरिमलमूढमधुकरचक्रवालमिन्दुनीलकिंकिणीजालवलयितमिव प्रतिबिम्बमुपरि विधृतधवलातपत्रस्य विततपत्रसहस्रमुद्दण्डनालं पुण्डरीकमध्यासिताम्, आगृहीतविविधाकार-

दिव्यप्रहरणाभिरपरस्परद्वेषिष्वननुभूताघातवेदनेषु द्विरदकेशरितुरङ्गमहिषाजगरबर्हिणप्रमुखेषु वाहनेष्वारूढाभिः परिमिताभिरप्युत्तमाङ्गबाहुबहुलतया प्रयत्नपरिभाव्यमानसंख्याभिः परिवृताम्, प्रधानदेवीभिरद्भुताकारसुरनगरसंबाधेषु नन्दीश्वरादिषु विहृत्य द्विपेषु दक्षिणाशामुखादभिमुखमापतन्तीं श्रियमपश्यत् । आगत्य चाग्रतो विधृतवाहानामाननप्रहितसस्मितनयनयुगलामवारितयथाप्रवृत्तपुरःसरपदातिवर्गां जिगमिषुमिवाविलोक्य तामुपजातरोषेव निह्नुतहर्षचिह्ना शनैरवोचत्—'कमले, किमिति यानान्नावतरसि । किं त्वयापि क्षीणविभवा प्रियङ्गुसुन्दरी संजातेति विज्ञाताहम्' इत्यभिहिता विहस्य तां श्रीरवोचत्—'सखि, गमिष्याम्यहम् । अतिबहून्यहानि मे गृहान्निर्गतायाः । मा कृथास्तावदधुना स्वस्थानगमनानुबन्धम् । अवहिता च शृणु निमेषमात्रमत्रैव स्थिताया ममागमनकारणम् । अद्य प्रातरेवाधिरूढे पूर्वगिरिशिखरमप्रौढरोचिषि चण्डदीधितौ धातकीखण्डचलितया मध्ये लवणसिन्धोरितस्ततः प्रहितसप्रयत्ननयनया रत्नकूटाद्रिपरिसरे सोद्वेगपरिजना तव प्रियसखी प्रियंवदा दृष्टा । तया संदिष्टमेतद्भवत्याः—'भगिनिके, दोषेण मे भगवतोऽपि वचनमप्रमाणं जातम् । स तावच्चिरेणापि न समागतो भ्राता भवद्भर्तुः । अधुना च वर्तते मम गतप्रायमायुः । स्मरिष्यसि मे भवान्तरगतायाः । कारयिष्यसि च कारिते मया सानाथ्यमिह जगन्नाथभवने ।' इति निशम्य चोद्वेगभीमं प्रियसखीचरमसंदेशवचनमुद्विग्नमानसा प्रियङ्गुसुन्दरी प्रेमपरतया जीवन्त्या एव सख्या निवापसलिलाञ्जलिमिव प्रदातुं प्रसृतिदीर्घाभ्यामक्षिपात्राभ्यामुत्ससर्ज । अश्रुविसरमुत्सृष्टनयना च वस्त्राञ्चलेन स्थित्वा क्षणमुवाच—'दृष्टं सखि, यथेष्टवाचित्वम् । अद्यापि प्रियंवदा मद्द्वारेण कारयति रक्षा-

मात्मदेवतायतनस्य । न जानाति यदुत कतिपयदिनेष्वेतदीयकीर्तनस्यापि कः कर्ता । सनाथतां कमहमधुना तदर्थमभ्यर्थये । गतः स कालो यत्र गीर्वाणवर्गो ममाज्ञाविधेयो जातः' इत्युदीर्य दुःखदीर्यमाणहृदया दीर्घमवनतमुखी निशश्वास । श्रीरपि तदुद्वेगदर्शनदुःखिता 'सखि, मुधैव मा हृदि निधाः खेदम् । उद्दामचारिणा सकलजनधनप्राणचौरेण चौरेणेव पृष्ठतः प्रेरिताः कृतान्तहतकेन सर्वतो धावमानाः क्व नाम न पदं कुर्वन्ति विपदः । त्यज विषादम् । अङ्गीकृतोऽयं मया त्वदीयसंदेशः' इति निगद्य सादरा **महोदराख्यं** निजप्रतीहारमवदत्—'भद्र, तस्य **प्रियंवदा**कारितस्यास्य च **प्रियङ्गुसुन्दरी**प्रासादस्य प्रतनुरप्यपास्ततन्द्रेण भवता रक्षणीयः क्षुद्रलोकोपद्रवः' इति निगद्य सत्वरा स्वावासमगमत् । **प्रियङ्गुसुन्दरी** त्वजातपतिसमागमाप्यनुत्पन्नविद्वेषा सर्वविद्वचसि किंचिदुत्पन्नारतिररतिभागिनी भविष्यति भवान्तरे वराकी स्तोककालमिति मुहुर्मुहुः **प्रियंवदां** शोचयन्ती प्रवर्धमानशुचिपरिणामा पुण्यमावर्ज्य प्राज्यमल्पैरेव दिवसैः परिक्षीणदिव्यायुर्विहाय तेजोमयीं मूर्तिमवततार । अत्रैव **विजयार्धभूधरे विद्याधरनरेन्द्रतनयात्वेन** तां च कल्याणभागिनीमिमामेव **तिलकमञ्जरीं** जानीहि । सा चेयमतिशयप्रचुरपुण्योदयादवाप्तनिरुपमरूपलावण्यादिगुणकलापा कतिपयालापपरिणताखिलकलाशास्त्रसंपद्बालभावेऽपि जन्मान्तरप्रेमहृतया समेत्य कृतसौहृदा हिमाद्रिचूलाह्रदनिवासिन्या श्रिया समानान्यकन्याजनदुर्लभमलब्धलोकोत्तरं प्रभुत्वमारूढदृढपतिप्रेमवासना च पुरुषान्तरेषु प्रीतिमव्रजन्ती निराकुला स्थिता कालमेतावन्तम् । अनन्तरे चाह्नि दिव्यनिजहारदर्शनादुपजातपूर्वजातिस्मृतिः संस्मृत्य पत्या सार्धमतिदीर्घकालमनुभूतानि त्रिदशलोकनिवाससौख्यानि दारुणोदीर्णदुःखनिवहा होहमुपगता ।

प्रभाते च गाढारतिपरिगृहीता गृहे स्थितिमपारयन्ती कर्तुमुत्सृष्टगुरुजनज्ञातिवर्गा निर्गता तीर्थयात्रापदेशेन देशान्तरमभियास्यता दयितेन तूष्णीमेव मे कण्ठदेशादवतार्य निजकन्धराभरणतां नीतोऽयमिति प्रेममोहिता वहति परिहृतापरसमस्तरत्नालंकारापि हारमेनं कण्ठकाण्डेन' इति कथयति मुनौ जातबहुमानः समस्तोऽपि पार्श्ववर्ती सुरासुरनभश्चरजनः पूजामिव विधित्सुः प्रयत्नधवलं सितारविन्दपत्रप्रकरमिव नेत्रविसरमुपरि देव्याः समकालममुचत् । अवदच्च—'भगवन्, अवगतममुष्याः पुण्यभागिन्याः पूर्वभववृत्तान्तेन तु ज्वलनतेजसा ज्वलनप्रभसुरेण सुरलोकतः प्रस्थितेन । तदा क्वचिद् हृतं किं कृतं किमनुभूतं किं च पर्यन्ते तस्य संजातमिति सहर्षेण पृष्टस्तेन स महर्षिः पुनरभाषत—'सोऽपि संप्रस्थितस्त्रिदशलोकात्प्रथममत्रैव भारते कृतावतारः शक्रावतारचैत्यागारपरिचिताय साकेतनगराधिपतये वितीर्य चन्द्रातपाभिधानममुमेव तिलकमञ्जरीकण्ठहारं महाराजमेघवाहनाय लङ्घितमनुजलोकाचलः क्रमेण नन्दीश्वरद्वीपमगमत् । तत्र चानेकरमणीयमणिशिलोच्चये विशालतरवेलासरित्स्रोतसि स्निग्धघनविततसिद्धायतनवनखण्डे पृथून्नतनितम्बकुचकुम्भमण्डलाभिः सुरकरेणुभिरिवाशागजस्य प्रधानाप्सरोभिः परिवृतस्य विचरतो विजृम्भितामन्दरतिरसानन्दस्य स्वच्छन्दचारिभिरिन्द्रियैर्दूरमपहृतस्य प्रमादनिद्रामुषिततत्त्वज्ञानचक्षुषः पूर्वभवसहचरस्य सुमालिनाम्नो वैमानिकस्य स्वभावमधुराभिर्यथोत्तरप्रथितशुश्रूषारसावेशाभिः प्रकाशितप्रगुणसंसारनिर्वाणसरणिभिरर्थसाराभिरप्सरोभिरिव जिनमतानुसारिणीभिर्वाग्भिरावेद्य जीवादितत्त्वप्रभेदमवबोध्य बन्धोदयस्थितिविभागं कर्मराशेः प्रकाश्य पर्यन्तविरसतां विषयसुखोपभोगानामुपवर्ण्य सुरमनुष्यतिर्यङ्नारकभवेषु यथो-

त्तरमनुत्तरामकृतधर्माणां दुःखसंप्राप्तिमुदीर्य मानुष्यलाभात्प्रभृति लब्धपरिपूर्णसर्वगुणपरंपरायास्तीर्थकृद्धर्मबोधेरतिदुरापत्वमारोप्य निरतिचारमदृष्टपारेऽपि संसारजलनिधावलब्धपूर्वमविनश्वरं बीजमपवर्गपादपस्य सम्यग्दर्शनज्ञानपरिणाममुत्तीर्णचिन्ताभारनिर्वृतः कृतकृत्यमवधारयन्नात्मानमात्मोपकाराय पुनरेत्य मनुजलोकमुल्लसितशक्तिर्भारतैरावर्तेषु पूर्वापरविदेहविजयेषु च लब्धावतारमुत्सारितजन्तुजडिमभिरपास्तमोहान्धतमसैः प्रकाशितातिविशदजीवादिपदार्थततिभिः समन्ततो विसारिभिर्ज्ञानाभीप्सुविसरैरामृष्टलोकालोकमर्यादमभ्यर्च्य भक्त्या परमया परमिव समाजं सप्तसप्तीनां सप्तलोकीमहितमर्हतां सप्तत्यधिकशतमवलोक्य तत्प्रतिमाभिरध्यासितोदराणि हिमवदादिषु वर्षधरपर्वतेषु **हैमवत-हरिवर्ष**पुरःसरेषु वर्षेषु **सौमनस-विद्युत्प्रभ**प्रमुखेषु वर्षान्तरगिरिष्वपरेषु परमरम्येष्वद्रिकूटेषु शाश्वतानि सिद्धायतनानि सिद्धाभिलषितः स्वादुपाकामुपार्ज्य **विद्याधरनरेन्द्र**संपदा सह भवान्तरे भवशतैरपि दुरापां चरमदेहप्राप्तिमुपभुक्तदिव्यायुर्मयैव पूर्वकालमुपदिष्टविद्याराधनस्य तस्यैव **साकेत**नरपतेर्**मेघवाहन**स्य द्रष्टुमिव पुनः **प्रियङ्गुसुन्दर्याः** स्नेहेन तमतिमात्रचक्षुःप्रीतिकारणं चन्द्रातपहारमात्मजत्वेन **हरिवाहनो** नाम शुभनिमित्तसूचितावतारः कुमारोऽभवत्' इति निवेद्य तूष्णीमास्थिते तस्मिन्महर्षौ प्रहर्षनिर्भरा देवी **तिलकमञ्जरी सुमालि**वृत्तान्तमवगन्तुमन्तिकावस्थितां त्रपाकृष्टवल्कलपटप्रान्तपिहिताननां **मलयसुन्दरी**मुदीरितानुच्चवचना पुनः पुनरत्वरत् ।

उपसृतां च तां तदीयवचसातीवभीतामवलोक्य 'वत्से, किं बिभेषि । सोऽपि भवान्तरप्रणयी संप्राप्य सद्धर्मबोधिमधिकाधिकप्रवर्धमानशुभतरपरिणामो विरतिपरिणामपरिपन्थिनमहार्हसंपत्संभारमपि गर्ह-

माणस्त्रिदशभावमात्मीयमनुदिवसमाहितत्रिदिववासिमानसोल्लासाभिरपरापराभिः सुरपुरेषु प्रवर्तिताभिरर्हद्बिम्बपूजाभिर्भृशावर्जितयशःकीर्तिनामकर्मा समरकेतुर्नाम सिंहलेन्द्रस्य चन्द्रकेतोरात्मजन्मा संजातः' इति निवेद्य मलयसुन्दर्याः सुमालिवृत्तान्तमुपसंहृतालापो मुनिरुदस्थात् । उत्थिते च तत्र संजातसंवेगः समग्रोऽपि परिषज्जनः प्रशान्तेन मनसा विचारयन्विरसतां संसारस्थितेः स्थास्नुषु क्लेशायासबहुलेषु दीर्घदुःखोद्वेगदायिषु बृहत्स्वपि स्वर्गभोगेष्वभिलाषमश्लथयत् । भर्तृदारिकापि सविषादहर्षा विनिःसृत्य सिद्धायतनमण्डपाददभ्रपटमण्डपमनादिष्टेनापि निजकर्मनिर्मापणपरेण कर्मकरलोकेन प्रगुणितं प्रागेव गत्वातिरम्यं निवासहर्म्यमगमत् । तत्र च वितीर्य मध्याह्नसमयोपगताय गुरुतपःक्षपितवपुषे विषयविमुखेन संकल्पेन कल्पनीयमन्नमभिलषितापवर्गाय यतिवर्गाय तीर्थवासिने परमया भक्त्या भुक्तनिःशेषपरिजना भोजनमकार्षीत् । कृतोपस्पर्शनां च तामवनितलविततनुकुप्वास्तरणविन्यस्तवपुषमुपपादितसमस्तमध्याह्नकृत्या कृतप्राणवृत्तिस्तरुफलैरेत्य वनमध्यान्मलयसुन्दरी स्वैरमवदत्—'तिलकमञ्जरी, किमधुना त्वया विधेयम् । किमत्रैव पर्वतवरे पूर्वनिजवंशपृथ्वीपतिनिवेशितानि प्रतिदिवसमर्चयन्त्या चैत्यसदनानि गमयितव्यानि वासराणि, अथ विशिष्टतरमभिलषयन्त्या पुण्यमन्यतीर्थेष्वपि विहर्तव्यम्' इति पृष्टा तया पुनः प्रणष्टहर्षेव सा प्रत्यभाषत—'भगिनिके, न जाने किमावेदयामि । अत्यर्थमाकुलं मे चित्तम् । उद्गतो निर्निमित्त एवोद्वेगः । प्रिया अपि जनालापा न जनयन्ति प्रीतिम् । अनुलेपनाय प्रयुक्तमपि सान्द्रमपि चन्दनं दुनोति गात्राणि । पश्यदिव किंचिदतिभीषणं पुरो मुहुर्मुहुः कम्पते दक्षिणमक्षि । न ज्ञायते किमस्य कारणमकाण्ड एव जातस्य प्रकृति-

विपर्ययस्य। किं तातेन मद्वियोगाधिगतवैराग्येणारण्यगमनमारब्धम्, किमम्बया कृतो मद्दर्शनावधिराहारपरिहारः, किमन्यस्य कस्यापि मद्दुःखदुःखितस्य जनस्य दुर्जातं जातम्' इति प्रवदन्तीमेव तां प्रविश्य सत्वरा वेत्रधारी व्यजिज्ञपत्—'भर्तृदारिके, संप्रति निजप्रस्थानसमये 'भद्र, गत्वा पुनरपि प्रापय कुमारहरिवाहनं निजस्कन्धावारम्' इत्यादिश्य यस्त्वया प्रणुन्नः, स विषण्ण इव चित्रमायः प्रवेष्टुमिच्छति' इत्यावेदिते तया सहसैव साध्यसध्वस्तवचना विमुक्तेव जीवितेन देवी न किंचिदुत्तरमवदत्। केवलं विशालायताभ्यामक्षिपत्राभ्यां तत्क्षणप्रप्रवृत्तं सरलोष्णनिःश्वासधूपितमधरपत्रमिव निर्वापयितुमश्रुधारायुगं युगपदमुञ्चत्।

अथ मोचितो मलयसुन्दर्या प्रविश्य स कृतप्रणामः प्रावोचत्—'भर्तृदारिके, त्वदादेशसमकालमेव गत्वैकशृङ्गे समन्तात्कुमारहरिवाहनो मयान्विष्टः, न तु क्वापि दृष्टः। तथापि तद्वृत्तान्तमवगन्तुं च नियुज्य निजविद्याधरानागतोऽहम्' इति निशम्य देवी दीर्णहृदया हृदि प्रदीप्तस्य सहसा शोकवह्नेरूर्ध्वमुत्सर्पता धूमपटलेनेव कवलितमुद्वहन्ती मलिनविच्छायमाननमधिकमुपजातवैलक्ष्या मलयसुन्दरीमुखे चक्षुरक्षिपत्। सापि संतप्तचेतोवृत्तिरपि 'यदृच्छाकारिणि, त्वन्मूलोऽयमस्य महात्मनो राजपुत्रस्यानर्थलाभः। त्वरितमुत्तिष्ठ। स्थिता तावदधुना तीर्थयात्रा। यावदद्यापि दूरं न गच्छति कुमारस्तावदन्वेषय स्वयमेव गत्वा। महदनिष्टमाशङ्कयति मां तददर्शनम्। त्वद्गमनवार्ताश्रवणदुःखितोऽसौ न जाने किं व्यवस्यति' इत्यभिहिते तया ससंभ्रममुत्थाय सा किंचिदुत्पतितमन्थरे स्थिरीकृत्य विद्याधरैर्विधृतमनिलनर्तितविचित्रवस्त्रध्वजमधिरुह्य मणिविमानं प्रचलिता गगनमार्गेण मृग-

यमाणा दिशि दिशि भवन्तमवसितेऽह्नि मलयसुन्दरीपरिगृहीतं प्रापदायतनम्। अवतीर्य च प्रविष्टा तदङ्गणनिविष्टमन्विष्य दिनमखिलमचलाटवीमध्यादुपागतमदृष्टस्वामिदुःखक्षाममक्षमं ह्रिया पराङ्मुखेक्षणं युगपदुत्थाय विहितप्रणामां सकरुणमीक्ष्यमाणां कुमारपरिचारकगणं प्रणम्य दूरस्थितैव परमदेवमवलम्बिता मलयसुन्दर्या मठाग्रभूमिकां शनैःशनैरध्यारोहत्। तत्र च क्षितितलास्तीर्णे तनीयसि वसनतल्पे निःसहन्यस्तदेहा निजोत्सङ्गनिहिततनुसरलजङ्घाकाण्डया मुहुर्मुहुः पीड्यमानचरणपिण्डिका, शरीरसंवाहिकया दिग्विसारिणो दाहज्वरोष्मणः स्पर्शमसहमानाभिरिव दूरस्थिताभिः सहचरीभिः पाणिसंज्ञया निवार्यमाणवाचालपरिजनालापा, रजनिपरिणतिप्रमाणमवगन्तुमपरदिङ्मुखानुसारिणि हरिणलाञ्छने मुहुर्मुहुर्न्यस्तनयना, बाष्पकणविसरमुत्सृजन्ती समीपास्तीर्णवल्कलशयनया वारंवारमाश्वास्यमाना, दीर्घनिःश्वासया मलयसुन्दर्या देवमुद्दिश्य तानि तान्यसंबद्धानि चिन्तयन्ती, विनिद्रनयनकुवलया प्रतिकलमापतन्तीभिरुत्कलिकाभिरायास्यमाना, सार्धमारामदीर्घिकानीलनलिनीभिरायामिनीं कथंचिदपि यामिनीमनयत्। उषसि चोत्थाय विहितावश्यका निविश्य देवाङ्गणवितर्दिकायां द्रष्टुमायातमपि 'वेत्ति कश्चिदतिक्रान्तदिनवृत्तं कुमारवृत्तान्तम्' इति परिग्रहलोकमप्राक्षीत्।

अथोपसृत्य किंचिन्म्लानवदनः संदीपनो नाम विद्याधरयुवा प्रणम्य शनकैर्व्यजिज्ञपत्—'देवि, चित्रमायप्रेषितेन प्राक्तनेऽहनि मया निपुणमन्विष्यता निषादलोकादुपलब्धमेतत्—यथा किल सहायविकलः सार्वकामिकं विजयार्धपर्वतस्य प्रपातशिखरमारूढः कुमारः। परतस्तु न कश्चित्किंचिदवगतम्' इतिब्रुवाण एव तत्र देवी निमीलि-

तनयनयुगला युगपदागतेन सकलभुवनान्तर्वर्तिनेवातिभूरिणा दुःखसंभारेण निर्भराध्मातहृदया ह्लादिन्येव कृतपरिष्वङ्गमुद्वहन्ती मूर्च्छासमालिङ्गितमङ्गमुत्सङ्गदेशे मलयसुन्दर्याः पर्यास्थत्।

अथ समाश्रितेन श्रवणपथमवबोधिता बुद्धिमतेव पटुना चटुलचेटीचक्रवालाक्रन्दितेन संवृताकारा स्वस्थहृदयेवोत्थाय सर्वायतनपूजार्थमन्तिकस्थं परिवारलोकं प्रावर्तयत्। आत्मना च निर्वर्तितस्नाना विधृतपुष्पधूपाङ्गरागपटवासपटलकेन प्रणयिनानुगम्यमाना प्रमदाजनेन प्रविश्य मूलायतनमच्छतापहस्तितशरच्छशधरगभस्तिभिः स्वहस्तपर्यामितैरमलमणिकलशवारिभिः कृताभिषेकमभ्यर्च्य परमया भक्त्या परमगुरुमुपरचितकरसंपुटा प्रणम्य च पुनः पुनः 'प्रणतवत्सल, सकललोकालोकगोचरज्ञानालोक, भव्यलोकशोकापनुद, दर्शितदयादमप्रधानध्यानमार्गमुद्रिताशेषदुर्गतिद्वार, झगिति विस्मृताकृत्रिमतापसोपचारस्य दूरीकृतानुरक्तजनसन्निधेरणुवज्रपाषाणपरुषहृदयस्य दुर्विदग्धबुद्धेरनेकदुःसहदुःखसंभारभाजनस्य भगवन्, तव जनस्यास्य जन्मान्तरे शरणम्' इत्यभिधाय बाष्पायमाणनयनयुगला प्रत्येकमापृच्छ्य परिवारलोकमच्छिन्नरोदनोच्छूनचक्षुषा परिहृतसुहृद्बन्धुशिशुजनेन शोकविद्राणमलिनमुखरुचा मलयसुन्दरीप्रमुखेन सहिता प्रियसखीसार्थेन प्रतिपन्नमरणप्रसाधनेन च प्रणयिना पण्यनारीगणेनान्येन च प्रगुणमनसा गुणानुरक्तेन बाह्यपरिजनेनानुगम्यमाना गुरुतराक्रन्दनिष्पन्दमनुपदमग्रतोभूय कृतवारणानुबन्धमवधूय सर्वतो गृहीतवाक्यं राजलोकमायतनमण्डपान्निरक्रामत्।

क्रमेण चाभिलष्य सलिलप्रवेशं प्रस्थिता सत्वरैः पदैः पूर्वदृष्टमेवादृष्टपारसरसो मार्गमागच्छत्। अत्रान्तरे परिजनावेदितसुतामरणवृत्ता-

न्तसंभ्रान्तेन विद्याधरपतिना विसृष्टः प्रकर्षनामातिवर्षीयान्महाप्रतीहारः सह स्वपरिवारेण भूत्वा पुरस्तादकृतविस्तरस्तामवादीत्—'देवि, मद्वाक्यसंक्रमितवचनस्त्वत्पिता चक्रसेनः समादिशति—सर्वमुचितमाचरितमेतद्वत्सया, यदचिरसंभाविनं विनाशवृत्तान्तमसहमानया श्रोतुमग्रत एव कर्तुमध्यवसितः स्वदेहत्यागः। को हि नाम कुलवधूजनः प्राकृतस्यापि पत्युरपगमे गमयति गृहीतजीविनो जन्म, किं पुनः पूर्वजन्मसंबद्धस्य सर्वगुणनिधेर्दृष्टनिरुपधिप्रेमसंपदस्तादृशस्य। किं तु पूर्वेद्युराकर्णितविरसवार्तेनापि मया कैश्चिदवितथैः शुभनिमित्तैर्विनिश्चित्य कुशलं कुमारस्य मा केनचिद्दूरमपहृतो वा स्वप्रयोजनमनन्यसाध्यं साधयितुमत्रैवान्तर्धाय विधृतो वा भवेदयमिति विभाव्य सर्वे विसर्जिताः षण्मासमवधीकृत्य सर्वास्वपि दिक्षु गमनदक्षाः स्वसैन्यविद्याधराः। ते प्रतिग्रामनगरमामानुषोत्तरगिरेरन्विष्य यावदायान्ति तावदत्युत्सुकयापि वत्सया स्थातव्यम्' इति निवारिता तेन गमनाद्गुरोरलङ्घ्यमाज्ञापरिघमुल्लङ्घयितुमक्षमा गतिनिरोधपुञ्जितेन पटुना बाष्पवेगेन पूर्यमाणहृदया ह्रीभरावभुग्नोत्तमाङ्गमुत्तरीयांशुकेनावच्छाद्य वदनमुदारतां देवस्य नीचतामात्मनो वारंवारमुद्घाटयन्ती मुक्तकण्ठमतिचिरं प्रारोदीत्। दत्तवदनक्षालना च कुलवृद्धाभिर्मलयसुन्दर्या गृहीत्वा करे स्वगृहमानीयत। निपुणमनुनीतापि नीतिज्ञैर्नाह्नि तस्मिन्नगृह्णादन्नम्। अन्येद्युश्च वन्यान्धसा विहितपारणा गृहीतापि प्रबलरणरणकेन सहैव निर्वर्तितान्नपानादिकृत्यां विहस्य किंचिन्मलयसुन्दरीमवोचत्—'सखि, निसर्गनिष्ठुरेणापि विधिना विधाय साधारणान्नमेकत्र भोजनमद्य जनितं मे सह भवत्या सख्यमव्याजम्' इत्युदीर्य लज्जावनतवदना क्षणमतिष्ठत्। ततः प्रभृति च प्रतिपन्नवनवासा कुमुदिनीव निशासु

नष्टनिद्रा, स्थलारविन्दिनीव स्थण्डिलेशयाना, शबरीव फलमूलकन्दैः कल्पिताभ्यवहारा, शिशिरदिनलक्ष्मीरिव प्रतिक्षणं क्षीयमाणदेहा, निदाघदिनकरप्रभेव स्वतापक्षपितकमलाकरा, निश्चिताव्यभिचारिकुशलेन पित्रा मम कुमारान्वेषणाय प्रेषिताः सर्वदिक्षु दक्षाः खेचरा इत्याशया धृतशरीरा कदाचिदच्छिन्ननिपतदच्छाच्छजलतुषारतोषिततृषितचातकेष्वेकशृङ्गाद्रिकन्दरानिर्झरेषु, कदाचिदास्तीर्णसरसबिसिनीपलाशेषु वर्षागमाशङ्किशिखिकलापकलिताकालकेकाकलहकेलिष्वदृष्टपारसरस्तीरसूत्रितेषु यन्त्रधारागृहेषु, कदाचिदमरनिम्नगासमीरसीमन्तिततनिरन्तरच्छदच्छायेषु वैताढ्यतटतमालवनखण्डेषु सततमासन्नवर्तिना परित्यक्तगृहवासेन परिवारलोकेन प्रयुज्यमानमनेकप्रकारं शिशिरोपचारमनुभवन्ती वर्षकल्पान्पञ्चमासाननैषीत्। एकदिनशेषे चाद्य तिष्ठति मासि षष्ठे वासभित्तिषु निवेशिताभिः कराङ्गुष्ठनखशिखोल्लेखरेखाभिः संख्यातसमतिक्रान्तदिवसया क्रियमाणमनयावलोक्य निजतनुत्यागोपक्रममाक्रान्तमनसं च बलवत्या शुचा कृतविलापमाकर्ण्य तत इतः सहचरीलोकमुपजातशोकः स्व(श्व)स्तनं दिवसमीक्षितुमशक्नुवन्कृतमरणसंकल्पः सार्वकामिकमिमं पिपतिषुः प्रपातभृगुमुपागच्छम्। आरूढमात्र एवास्मिन्नकस्मादेत्य सत्त्वोपघातरक्षानियुक्तैर्युक्तवादिभिर्विद्याधरभटैरानीय दर्शितो देवपादानाम्' इति निवेदयति सति हारदर्शनात्प्रभृति पूर्ववृत्तं तिलकमञ्जरीवृत्तान्तमग्रतो विनयखर्वे **गन्धर्वके** सहसैव पूर्वजन्मानुभूतं सर्वमपि गीर्वाणसदनावाससुखमसरम्। उपजातमोहश्च मुहूर्तमास्थाय सद्यःस्मरणपथमागतेनोन्माथिना तिलकमञ्जरीमरणवृत्तान्तेन विस्मारितसमस्तान्यकरणीयो जिगमिषुरुपनीय **गन्धर्वकाय** निःशेषनिजनेपथ्यम् 'अश्वोऽश्वः' इति वदन्नभिषेकपीठादुदतिष्ठत्।

अनुगम्यमानश्च समकालमुत्थितैः समीपवर्तिभिर्विद्याधरकुमारैर्निष्क्रम्य खेचरगिरिशिखरमण्डपादारोपितप्रकाण्डकनकपर्याणमारुह्यासन्नतेजस्तुरगरत्नमधिष्ठितप्रेष्ठवारवाजिपृष्ठैरागत्यागत्य परिवार्यमाणपृष्ठः पुरःसरपदातिवं····खेचरपृष्ठैरेकशृङ्गाद्रिकूटमुकुटं तदेवोत्सृष्टपूर्वं जिनायतनमगमम् । अवतीर्य च द्वारि तस्य प्रविष्टः प्रणम्य भक्तिप्रवणेन शिरसा सपदि संपादितविशेषपूजं प्रथमजिनबिम्बमवलम्बितप्रणयस्तब्धखेचराधिपस्कन्धपीठः पूर्वदृष्टमप्यदृष्टपूर्वमिव सर्वतः प्रियङ्गुसुन्दरीस्नेहेन पुनः पुनरवलोकयन्नायतनमण्डपमखण्डितशशिमण्डलस्फाररोचिषु स्फाटिकशिलातले परिस्फुटोत्कीर्णनाकलिपिवर्णानुपूर्विकापूर्वान्तेन शनकैरव्रजम् । तत्र चानुपमरूपलावण्यसौभाग्यविलासवर्णनाविषयाणि प्रकृष्टसुरलोककविनिबद्धानि प्रियतमाचरितसंबद्धानि सविषादहर्षमवाचितचराणि वाचयित्वा सुभाषितानि संभाप्य दर्शनोपजातपरमानन्दां मलयसुन्दरीं नियुज्य निजवार्तावेदनाय तत्सन्निधौ गन्धर्वकमासन्नपरिवारलोकोपदिश्यमानमार्गः प्रविश्यारामममध्यममध्यममधिकाभिरामदिव्यतरुखण्डपरिगते महति कन्दलीकानने कृतावस्थानामधिकविषादसहचरीवृन्दपरिवृतामुषःकालकुमुदिनीवनान्तर्गतामिव प्रतिमाशशिकलाममललावण्योल्लासलक्ष्यमाणलेखावशेषावयवामनवरतमाधीयमानमासन्नपरिचारिकाभिः शिशिरोपचारमनुभवन्तीं दूरादेव तिलकमञ्जरीमद्राक्षम् ।

अथ पुरःसरलोकसूचिताभिषेकवृत्तान्तनिर्वृतस्य सप्रहर्षमुपसृत्य 'देवि, दिष्ट्या वर्धसे । समुपलब्धसकलोत्तरश्रेणिविद्याधराधिराज्यः समागतो द्वारि देवो हरिवाहनः' इति ब्रुवाणस्य युगपद्द्वारपालीजनस्य प्रबलमाकर्ण्य वचनकोलाहलमाकुलाकुलामीषदवगलितमारोप्य सत्वरमुरसिजद्वयस्योपरि हरिचन्दनद्रवार्द्रमच्छविमलं जलार्द्रांशुकमकस्मादुत्थि-

तामितस्ततः कीर्णकर्णान्तमिलिततीक्ष्णाग्रपक्ष्मलतरललोचनामविरत-निरस्तकुवलयपलाशमार्गणामिव धनुर्लतां कुसुमबाणस्य दृष्ट्वा प्रहृष्टचेतास्तामवोचम्—'देवि, पर्याप्तममुना संभ्रमेण । संवृणु त्वराम् । अनेनैव लावण्यमात्रलक्ष्येण लेखावशेषस्थितिना वपुषैव कथितः किमर्थमुपचारकर्मणा विचारपदवीं प्रापितस्त्वया स्वल्पपुण्यजनदुर्लभो निजप्रसादः । प्रसीद । अध्यास्वाशनीयम्' इत्युदीर्य पर्यन्तवर्तिवनिताजनवितीर्णरत्नपाषाणपीठमध्यतिष्ठम् ।

अत्रान्तरे गन्धर्वकानुयातस्त्वमेवायात इति निवेद्य विद्याधरगिरौ कुतूहलकृतप्रश्नस्य समरकेतोर्वारणापहारतः प्रभृति पूर्ववृत्तमात्मीयवृत्तान्तमुपशान्तवचसि कोशलाधिपसुते सर्वोऽपि पार्श्ववर्ती नभश्चरजनः परां प्रीतिमवहद्विहाय सिंहलेश्वरसुतम् । स तु न कांचिदैक्षत, न किंचिदाभाषत, न कस्यचिद्वचनमशृणोत्, न कस्यचित्प्रतिवचः प्रायच्छत् । केवलं वञ्चित इव, छलित इव, मुषित इव, केनाप्यावेशित इव, विमुक्तदीर्घनिश्वासः, क्षणं मूर्छामनुभवन्, क्षणं चेतनां प्रतिपद्यमानः, तूष्णीक एवातिष्ठत् । तं च तदवस्थमस्थान एवोपजातचेतोविप्लवं विलोक्य हरिवाहनश्चिन्तितवान्—'····नमयमनन्तरभवानुभूतमाकर्ण्य सुरलोकवृत्तान्तमुपजातपूर्वजातिस्मृतिर्विस्मारितः प्रभवता शोकेनात्मानम्' इति निश्चित्य पीडितोऽपि तच्चित्तदुःखेन स्वस्थ इवाजातदुःख इव मध्यस्थ इव पटुपदप्रचारया वाचा तमुच्चैरवोचत्—'युवराज, किमिदमितरप्राणिसाधारणं तवाचरणं क्वचिदद्यापि परमप्रमादवसतेरवारिताक्षप्रचारहारितस्वार्थसंपदोऽष्टापदद्यूतस्येव स्मरसि तस्य त्रिविष्टपावासस्य । किमत्र स्मर्यते । एकत्रापि दिवसे यान्यतीतानि तान्यपि स्मर्तुमखिलान्यशक्यानि, किं पुनरसंख्यातासु वर्षकोटिषु प्रकटविभवेषु

तेषु तेषु स्वविमानसद्मसु प्रभूतेषु भारतैरावतादिषु वर्षेषु मेर्वादिषु नगेन्द्रेषु पद्मादिषु कूलाद्रिचूलाह्रदेषु नन्दनादिषूद्यानेषु त्रिपथगासिन्धुपुरःसरीपु महासरित्सु पुष्करक्षीरोदमुख्येषु नीरधिषु नन्दीश्वरप्रभृतिषु च वरद्वीपेप्वन्येषु च निसर्गसुन्दरेषु भुवनभागेषु विहरता सार्धमन्वहमनुचरैः कलत्रैर्मित्रैश्च यानि प्रमादपरतन्त्रेण प्रस्तुतानि हसितजल्पितक्रीडितानि तानि शक्यन्ते । किं च तैः स्मृतैरपि स्वप्नविज्ञानसदृशैः फलं साध्यते । केवलं यत्तदा स्वर्गच्यवनसमये म्लायता दिव्यमाल्येन, ग्लायता गात्रलावण्येन, मीलयता नेत्रयुगलेन, स्खलता निर्देशदानेन, नश्यता त्रिदशभावेन, मूर्छता मनसि लोकान्तरगमनचिन्तादुःखेन, विलपता परिजनेन, क्रन्दन्तीषु पार्श्वतो निरानन्दासु स्वयंप्रभाप्रभृतिपु प्रियाङ्गनासु यन्मनागपि न चलितं स्तुतं च यदनेकशः सदसि विस्मितैः सहवासिविबुधैस्तदधुना विधूयते वैक्लव्येन सत्त्वम् । तदलमतीतवस्तुनिर्बन्धेन । विधेहि धैर्यमवलम्व्य सत्वरः सांप्रतकालोचितं कृत्यम् । उत्तिष्ठ तावत् । गाढमुत्कण्ठितायाः सुचिरकालादुपलभ्य दर्शनं दर्शय द्रविडराजदुहितुरात्मानम् । सा हि ते जन्मद्वयप्रणयिनी पूर्वजातिस्मरणविह्वला दिव्यरत्नाङ्गुलीयकालंकारदर्शनात्प्रभृति मूर्छां मुहुर्मुहुरनुभवन्ती वनप्रवेशात्प्रभृति वार्तायां च सर्वात्मना तव क्षीणायां क्षणे क्षणे मरणदुःखादप्यधिकवेदनं शोकमुद्वहन्ती दुःखमास्ते' इति वारंवारमुच्चारयति हरिवाहने त्रपावनतवदनोऽङ्गाधिपः शनैरवदत्—'कुमार, किमर्थमावेदयसि मे । यदि तदाश्वासने यत्नः, प्रहिणु कंचिदस्मदागमनवार्ताहरं स्वानुचरम् । अहं तु कृतविप्रियः प्रियंवदाभावतः प्रभृति तस्यास्त्रपया न शक्नोमि वीक्षितुं वदनम्' इति वदत्येव तत्र प्रविश्य विहितप्रणामा प्रतिहारपाली हरिवाहनं व्यजिज्ञपत्—

'विजनमादिश्यताम्, येन द्वारि विद्याधरपतिर्विचित्रवीर्यस्य वल्लभतमः कल्याणको नाम दारकः श्रावयति कार्यं किमपि कमनीयम्।' आकर्ण्य चैतदपसृतेषु स्वयं समरकेतुप्रभृतिषु सगौरवं व्याहृतो वेत्रधार्या प्रविश्य स कृतप्रणामः कुमारस्याग्रतो लेखमक्षिपत्। उपनीतविष्टरोपविष्टे च तस्मिन्नयोध्यापतिसुतः सदोषमादाय तमवाचयत्—'स्वस्ति। त्रिकूटाचलाद्राजा विचित्रवीर्यः स्वसौन्दर्यतुलितसुरलोकशोभासमृद्धावुत्तरश्रेण्यामाश्रितजनशरण्यमनन्यसाधारणगुणाधारं महाराजपुत्रहरिवाहनमशेषपृथ्वीविजयलाभाशिषा संयोज्य निजशरीरारोग्यवार्तया सुखयति। कथंचिदुपजाततर्षेण झटिति संजातघटनं वरत्वेन परिकल्प्य भ्रातरं ते समरकेतुमद्यैव वत्साया मलयसुन्दर्याः प्रस्तुतो मया विवाहोत्सवः कर्तुम्। आनीता च रभसेन समनन्तरेऽहनि। तथैव बिभ्रति वनवासवेषमेषा स्वनिवासमायुष्मती। निमन्त्रितो मित्रज्ञातिलोकः। स्थापितं लग्नम्। अन्यदपि कृतमशेषमात्मसे(शे)मुखी(षी)समुचितं कृत्यम्। तदयमल्पबुद्धिबन्धुजनजल्पबाधितो मत्संकल्पः कल्पायुषा नोपहास्यतां नेयः' इति विचार्य चामुष्य तात्पर्यमुपजातहर्षो हरिवाहनः सविस्मयेन मनसा व्योमचरदारकमप्राक्षीत्—'सौम्य, कथमन्यद्वीपवासिना तातेन दूरदेशान्तरादायातमात्रो युवराजसमरकेतुरवगतः। कथमविज्ञातकुलशीलः स्वदेशप्रभवेषु गुणवत्सु विद्यमानेष्वन्येष्वनेकेषु विद्याधरदारकेषु क्षितिगोचरोऽपि वरत्वेनाङ्गीकृतः। कस्य बुद्ध्याध्यवसितमिदमकस्मादुत्सुकेन भूत्वा कार्यम्' इति पृष्टः प्रहृष्टचेतसा स पुनरब्रवीत्—'देव, सर्वमावेदयामि। श्रूयताम्। इतो वासरादनन्तरेऽहनि जिनायतनकाननान्निर्गत्य निजराजधानीमभिप्रस्थिते देवे गतायामात्मभवनं भर्तृदुहितरि तिलकमञ्जर्याममन्दसंवृतानन्देन विद्या-

धरधुराभृता प्रस्तुते सविस्तरमुत्सवे, ध्वनत्सु सर्वतो वादित्रेषु, नृत्यत्सु प्रतिगृहं पौरेषु, प्रवृत्तासु नगराङ्गनामङ्गलगीतिषु, वितीर्यमाणेष्वन्योन्यमनिवारितकरेषु कुसुमताम्बूलपटवासेषु, पिष्टातकरजःपुञ्जपिञ्जरितरोदसि, विसारिमागधजनजयध्वनौ, अबाधितागच्छदनिबद्धलोकदुःखलभ्यान्तरे क्षणेनैव जातेऽन्तःपुरे, सत्वरमुपेत्य सविकासमुखपङ्कजा **मृगाङ्कलेखा** नाम **तिलकमञ्जर्याः** प्रधानसहचरी स्वावासमन्दिराङ्गणनिहितमणिपर्यङ्किकोपविष्टामुत्सवापतदनेकानीकनायकपुरंध्रिपरिवृतां प्रणम्य राजमहिषीं **पत्रलेखा**मवोचत्—'देवि, वर्धसे सार्धमेवागतेन द्वितीयेन **मलयसुन्दरी**वरागमनोत्सवेन' इत्युदीर्य देवेनैव प्रथमदर्शने **तिलकमञ्जर्याः** प्रियत्वेन कथितं यथाश्रुतम् । कुमार**समरकेतुं** वरीता **रमाख्यदेव्य**पि तदाकर्ण्य निर्भरोदीर्णहर्षा तोषतरलिताक्षी निरीक्ष्य निकषा निषण्णां **चित्रलेखाम्** 'सखि, स एष कल्याणानुबन्धी कल्याणसंपल्लाभः । तूर्णमुत्तिष्ठ । गत्वाद्यैव सर्वाङ्गविनिहतमहार्हमङ्गलालंकारां **मलयसुन्दरीमेक**भृङ्गादानय, येनैकलग्न एव तस्या**स्तिलकमञ्जर्या**श्च युगपद्द्वयोरपि निरूपयामि पाणिग्रहणमङ्गलम्' इत्यवोचत् । असावपि तदाकर्ण्य सप्रमोदा प्रत्यवादीत्—'स्वामिनि, तवैव कृत्यमिदमसंनिधौ **गन्धर्वदत्तायाः** । किं पुनरिदं **विचित्रवीर्य**देवेन कारयितव्यम्' इत्यादिष्टमास्ते दृष्टकालत्रयेण मुनिना । यदि समादिशसि तदनेनैव गत्वा त्रिकूटमधिकारिणं तमेव स्मारयित्वा विवाहविधये प्रवर्तयामि' । 'तथा' इत्यभिहिता च सा तदैवोत्थाय सर्वं यथोक्तमकरोत् । तदिति विज्ञापितं देवादिष्टम् । अधुना प्रस्तुतं समादिशतु देवः । प्रस्थापयतु जामातरं कुमार**समरकेतुम्** । आसीदति समुदितैर्ग्रहगणितविद्भिरावेदितं करग्रहणलग्नम् । आस्ते वरमुखावलोक-

नोन्मुखोऽभिमुखमुत्थाय प्रीतमनसा प्रवेशितो **विचित्रवीर्यदेवेन काञ्चीपाललोकः**। पितुः पर्यङ्के निषण्णा सुता विवाहदर्शनोत्कण्ठिता तिष्ठति । अनारतप्रवृत्तहर्षाश्रुबिन्दुः श्वश्रूर्**गन्धर्वदत्ता** सौधशिखराप्रसङ्गी मुहूर्तमपि मार्गावलोकनान्नोपारमति । दुस्तरव्यसनबन्धुसुन्दरीपुरःसरो **मलयसुन्दर्याः** सखीवर्गः । स्पृहयतितरां **गन्धर्वकाग**मनाय संप्रत्येव विश्रान्तवैराश्रमपदादानीता नित्यवनवासदुःखदुर्बलाङ्गी **तरङ्गलेखा** । निमन्त्रितागतोऽन्योऽपि बहुमन्यते समासीदन्तमुत्सवमुत्सुको विद्याधरलोकः' इति निगद्य तूष्णीमभूत् । **कोसलेन्द्रतनयो**ऽप्युपसंजातहर्षः सतर्षमाहूय **सिंहलेश्वर**सुतं दर्शयित्वा **विचित्रवीर्य**लेखमाख्याय **कल्याणका**ख्यातमादितः प्रभृति पूर्वदिनवृत्तान्तमाबद्धकरसंपुटः सहासमलपत्—'**चम्पाधिप**, किमद्यापि चिन्तयसि । उत्तिष्ठ । कुरु गुरोर्वचनम् । अद्यापि दृढनिश्चया प्रवर्तितापि ज्ञातिलोकेन दृष्टे त्वयि त्यक्ष्यति गृहीतानि वनवासवल्कलानि **मलयसुन्दरी**' इत्यभिधाय संनिधापितप्रचुरमान्यखेचरबलं **सुवेलं** प्रति प्राहिणोत् । कुमारोऽपि **हरिवाहन**स्तेनातार्किकेतेन **समरकेतो**र्विवाहोत्सवगमनेन विस्मापितमनाः सायमाययौ स्वावासम् । अवसितायां च शर्वर्यामुत्थाय शयनादास्थानमण्डपमुपागमत् । निषण्णस्य चास्य निर्वर्तित**तिलकमञ्जरी**संगमोत्सवेन राज्ञा **चक्रसेनेन** तत्संबन्धसचिवैः प्रसिद्धनामभिर्विद्याधरनृपैरपारविभवैश्च नगरपौरैर्नृपाभिषेकमाङ्गलिकसंपादनाय प्रस्थापिताः प्रगल्भवचसः प्रधानपुरुषाः प्रविश्य दिव्यांशुकविलेपनालंकारकुसुमताम्बूलातिसर्जनेन पूजामकार्षुः । प्रपञ्चितबहुप्रकारोपचाराश्च स्थित्वा मुहूर्तमर्चितास्तेनाजग्मुर्यथास्थानम् ।

एकदा च देहारोग्यवार्तोपलम्भार्थमहरहःप्रेषितैराप्तपुरुषैः प्रकाशितस्नेहमीक्षितुमनाः खेचराधिपं चक्रसेनमाप्तपरिमितपदातिबलपरिवृतो निरन्तरग्रामनगरामुदारतरुखण्डमण्डितोदग्रदेवतायतनमण्डलामनेकजलरङ्कुकुररकारण्डवाकुलसरित्सरोवरप्रेक्षणीयां सदक्षिणश्रेणिमागमत् । आगतश्चाभ्यर्णमाकर्णितागमनेन गगनचरचक्रवर्तिना प्रत्युद्गम्य नीतो निजनिवासे ससंभ्रमादिष्टहृष्टपरिजनोपचारप्रीतचेताः स्नानभोजनादिकं कर्म मध्याह्निकमकार्षीत् । अपराह्णसमये च प्रस्थानाय तेन पृष्टः प्रक्रमे चक्रसेनस्तत्रैव तस्य कतिचिद्दिनान्यवस्थितिमयाचत । स च पराङ्मुखोऽपि परोपचारेषु प्राध्वंकृतस्तिलकमञ्जरीप्रेमानुबन्धपाशबन्धेन तदेवास्य प्रत्यपद्यत वचनम् । अन्यदा च निरवद्येऽह्नि निपुणावधारितवधूवरग्रहबलेन पृष्टसकलज्ञातिना दिशि दिशि वितीर्णमित्रनरपतिनिमन्त्रणेन निर्मापितोदारनगरमण्डपशोभेन भोजितसुहृद्बन्धुपरिजनेन पूजितगुरुद्विजातिपरिषदा नभश्चरेन्द्रेण दत्तामुपयम्य सम्यगनुभूतसकलोद्वाहमङ्गलां तिलकमञ्जरीम्, स्थित्वा च तन्मातृपक्षस्य चक्षुःप्रीतये यथोत्तरमनुत्तरप्राप्तनवनवोपचारचारुण्यनन्तरभवानुभूतपुरुहूतलोकावाससौख्यस्मृतिहराण्यहानि कतिचिदकृतात्मीयपरकीयलोकावलोकनैरनीक्षितार्थ्यनर्थिजनमुखच्छायैरनालोचितात्पानल्पवित्तव्ययैरगणितगुणज्ञागुणज्ञविभागैः कृतार्थीकृत्य वस्तुविसर्गैः कृत्स्नमपि दक्षिणोत्तरश्रेणियाचकगणम्, तत्कालमतिशयचारुरूपामारोपितचतुरचित्रालंकारः, त्वयमेव चित्रलेखया सप्रपञ्चमुपरचितमण्डनामारोप्य पुरतस्तिलकमञ्जरीमञ्जनाद्रिमिव चन्द्रिकापूरेण दलितकर्पूरकणचूर्णरोचिषा चन्दनद्रवेण पाण्डुरितगात्रमारूढः, प्रौढरागगैरिकपरागपाटलविकटकुम्भकूटं प्रधानजयकरिणमुपरि विधृतेन फेनपटलत्विषा मुष्णन्नुष्णवार-

णेन जिष्णुतामनुष्णोष्णकिरणबिम्बयोरुपान्तचालितचारुचामरकलापः, सविस्तरप्रस्तुतान्वर्थवर्णनालापेन पठता पुरश्चारणगणेन स्तूयमानविनयत्यागपौरुषपुरःसरगुणग्रामः, प्रकाशरुचिराकल्पधारिणा सिन्धुराश्वकेसरिमयूरहंसादिविविधवाहनाधिरूढेन धावता समग्रेणाग्रतः खेचरचमूचक्रेण सूच्यमानपृथुपराक्रमः, क्रमेण विक्रमबाहुप्राकाररक्षितचरं प्राप नगरम्। उन्नतप्रासादशिखरावस्थिताभिः कथमपि वधूमुखमृगाङ्कादवतारिततरलतारतारेक्षणाभिः प्रतिक्षणमास्वाद्यमानवदनलावण्यामृतः कृतपरस्परोपमर्दकलहाभिः पौरललनाभिः प्रविश्य निजनिवासेऽभिनवप्रियामुखनिखातनिर्निमेषनयनारविन्दः प्रतिदिवसमभिनवान्यनुभवन्नववधूनिधुवनोत्सवसुखानि सुखमतिष्ठत्।

गतेषु च कतिपयेष्वहःसु **समरकेतो**राकारणाय प्रातिष्ठिपत्प्रेष्यान्प्रधानपुरुषान्। **अङ्ग**विषयाधिपोऽपि श्रुतवरागमननिर्वृतेन विद्याधरनृपतिना **विचित्रवीर्येण** साभ्युत्थानमानीय निजगृहे गृहीतार्घपाद्येन संपादित**मलयसुन्दरी**पाणिग्रहणमङ्गलः स्थानस्थानलब्धप्राज्यबन्धुज्ञातिजनपूजोपचाराणि स्थित्वा त्रिदशपुरवासिभिरपि दुरापाण्यहानि प्रणम्य लोकोत्तरवरप्राप्तिप्रीतमनसं समपास्तगर्वः खर्वेण शिरसा **गन्धर्वदत्ता**पुरःसरं श्वश्रुजनमुदश्रुखेचरीवृन्दवीक्षितपृथ्वीधरं विलङ्घ्य **विजयार्ध**मावासमायात्। आयातमात्रस्य चास्य प्रह्वीकृतः प्रेम्णा सकलमप्युत्तरश्रेणिराज्यमुत्तर**कोसले**श्वरसुतः सार्धमखिलाधिकारैः प्रायच्छत्।

गच्छति च काले कदाचिदनवरतसंचारत्खेचरपरंपराख्यातलोकोत्तरचरितविस्मितः समाहूय सह समस्तेन **समरकेतु-कमलगुप्ता**दिना परिवारनृपसमाजेन राजा **मेघवाहनः** प्रशस्तेऽह्नि विधिना शास्त्रदृष्टेन विष्टरे न्यवेशयत्। आत्मनापि स्वपरसत्त्वेषु सता बद्धबन्धुबुद्धिः स्पर्ध-

येवात्मसूनोः समुद्धृतगुरुक्ष्माभारः परलोकसाधनोन्मुखो बभूव । **हरिवाहनो**ऽपि सुचिरानुभूतक्लेशस्य गुणवतो बालसेवकगणस्य विश्राणितानेकमेदिनीमण्डलः प्रतिदिनोपचीयमानप्रसाददानानन्दितैः **कमलगुप्तादिभिः** प्रधानाप्तराजपुत्रैरत्यक्तसंनिधिः प्रयत्नरक्षितप्रजमनुपेक्षितवर्णाचारविप्लवं दिशि दिशि प्रदापितसकलसत्त्वाभयप्रदानघोषणापटहम्, अविशेषनिर्दिष्टनिःशेषतीर्थिकायतनपूजम्, अपहस्तितसमस्तशासनान्योन्यविद्वेषम्, अच्छिन्नद्रविणदानोच्छादिताच्छिद्रदीनजनदारिद्र्यम्, अनुरञ्जितसमस्तसाधुसङ्घश्लाघनीयम्, लघूकृतकरप्रकृतिदीयमानातिरिक्तद्रविणपूर्यमाणसंततत्यागरिक्तकोशागारकलशम्, अखण्डितोत्खातरोपितविपक्षराजन्यनिजदेशराज्याभिषेकम्, प्रतिग्राममास्थापितानेकक्षुत्पिपासाक्षानपथिकसार्थसत्रम्, प्रतिनगरमारोपितोत्तुङ्गगोपुरपुरप्राकारपरिगतप्रान्तशान्तायतनमण्डलम्, अतीतजन्मोपार्जितेन पुण्यानुबन्धिना प्राज्यपुण्यसंभारेण पुञ्जितं पालयन्नेकातपत्रं राज्यम्, अनुदिनमसाधारणगुणप्रगुणितमनोभिः खेचरैरवनिगोचरैश्च नृपतिभिरहंप्रथमिकोपपाद्यमानस्वकन्यारत्नपाणिग्रहो महत्यपि परिग्रहजने शश्वदाश्वासहेतुना **समरकेतु**नैव ससहायमेकयैव **तिलकमञ्जर्या** कलत्रिणमात्मानममन्यत । अन्यत्सकलं तृणं मन्यमानः कदाचित्सिंहलेष्वतींकितालोकिततथाविधसुताधिपत्यप्रीतहृदयेन **चन्द्रकेतु**नाभ्यर्च्य सादरमुपनीतसकलचित्ररत्नकोशः, कदाचिदनुबन्धपृष्ठबन्धुसुन्दरीसूचित**समरकेतु-मलयसुन्दरी**प्रथमसंगमस्थानेषु सुतानुरूपजामातृदर्शनप्रमुदिताभ्यां **कुसुमशेखर-गन्धर्वदत्ता**भ्यामनिशमामन्त्र्यमाणो दिवाप्यनष्टशार्वरीतिमिरनिचयेषु **काञ्ची**नगरीपरिसरारामेषु, कदाचिद्द्रविडेश्वरसुतासु दुःखदृश्यमानविश्रान्तवैराश्रमपदेषु सुलभसान्द्रच्छायचन्दनतरुषु मलयाद्रि-

कन्दराकच्छेषु, कदाचित्प्रियंवदास्नेहमोहितेन सिंहलराजसूनुना तिलकमञ्जर्या च साश्चर्यशोकमवलोक्यमानपश्चिमजिनायतनशिल्पकर्मातिशयेष्वयत्रितभ्रान्तदेवयात्रागतनभश्चरद्वन्द्वेषु रत्नकूटाद्रिकटकेषु रममाणः, कदाचिच्च सोत्कण्ठाकाञ्चीपतिसुतावचनेन विद्याधरैरानीतमनभिनन्दितान्यनृपकुमारपाणिग्रहणमम्बुधिनिपातदर्शनोपजातानुकम्पेन स्वस्थानेषु नीतं महोदरेण समरकेतोः कलत्रभावमानयन्पूर्वदृष्टमवनीपालबालिकावृन्दम्, कदाचिदादिष्टखेचरानीतं नवविमानमध्यारोपितस्य मुक्तिसुखवाञ्छया विमुक्तसर्वारम्भनिभृतस्य गलितवयसो गुरुजनस्य गत्वा गत्वा प्रसिद्धसिद्धायतनमण्डलीमण्डितानि दर्शयन्ननेकसुरसिद्धसाध्यसंबद्धानि तीर्थस्थानानि, कदाचित्काञ्चनाचलशिरसि भक्तिरसनिर्भरेण महाप्रमाणमणिकुम्भाहृतैः क्षीरसागराम्भोभिः सुरगणेन निर्वर्तितमनारतनिशम्यमाननिरवद्यवृन्दारकवृन्दगीतनाट्यं विलोकयञ्जिनजन्ममहोत्सवम्, एकहेमासनार्धोपविष्टया मुहूर्तमप्यरहितान्तिकस्तिलकमञ्जर्या दिनान्ययापयत् । असंप्राप्तविप्रयोगस्य चास्य प्रणयिनीसमेतेन साकं समरकेतुना सपत्नीपरिवारस्य तेषु तेष्वतिरेकरम्येषु सागरकूलवलयेषु कुलपर्वताग्रेषु पूर्वापरविदेहविजयेषु वर्षान्तरगिरिगुहागह्वरेषु महाह्रदसरित्तीरपालीपुलिनपरिसरेषु द्वीपान्तरत्रिदशनगरनिवेशेष्वन्येषु च मनोरमोद्देशेषु दिशि दिशि व्योमचारिणा मणिविमाननिवहेन विचरतः पृथिव्यामनुदिनमुपचीयमानपौरुषप्रतापकीर्तेरचिस्कन्द परमां वृद्धिमानन्दः ॥

इति श्रीधनपालविरचितं तिलकमञ्जरीकथानकं समाप्तम् ।

---